TRIVANDRUM SANSKRIT SERIES
No. LIX.

# THE NÂGÂNANDA

OF

## SRÎ HARSHA DEVA

WITH THE COMMENTARY

## NÂGÂNANDAVIMARSINÎ

BY

SIVARÂMA

EDITED BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1917.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५९.

# नागानन्दं

श्रीहर्षदेवप्रणीतं

शिवरामकृतया नागानन्दविमर्शिन्याख्यया व्याख्यया समेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः १०९३, क्रैस्ताब्दाः १९१७.

# PREFACE.

Nâgânanda, the best among the plays of Sriharsha-Deva who flourished in the first half of the 7th century A. D. is now published with a rare and excellent commentary by Sivarâma. It is hoped that, with the help of this commentary, the merit of the play will be appreciated as well by the average student as by the learned savant.

Regarding the commentator, we have little to say except that he is the same as the commentator of Tapatîsamvarana and Subhadradhananjaya (published as Nos. 11 and 13 of the Trivandrum Sanskrit Series.)

Six palm-leaf manuscripts in Malayalam characters were consulted in preparing the text of this edition, all of which are fairly correct and are about three centuries old. One of them belongs to the Manalikkara Mathom in South Travancore and the other five belong to the Palace Library.

The commentary is based on the following six palm-leaf manuscripts in Malayalam characters.

1. क. Belonging to the Palace library running up to the beginning of the fifth Act.
2. ख. Belonging to Mr. Kesava Kaimmal, Vechchur, containing the first two Acts.
3. ग. Belonging to Mr. Chakran Krishnan Varyar, Chunakkara.
4. घ. Belonging to Mr. Kumara Moottatu, Kidangur.
5. ङ. Belonging to the Kilimanur Palace.
6. च. Belonging to Thekkankur Raja, Nattaseri.

The first and the fifth are modern looking while the others are very old and the last is extremely worn-out.

Trivandrum,
25th August 1917.

T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

श्रीहर्षदेवस्य क्रैस्ताब्दीयसप्तमशतकस्थितस्य यत्तत् त्रिषु नाटकेषु सुप्रसिद्धेष्वन्यतमं दयावीरप्रधानं नागानन्दं नाम नाटकं, तदिदानीमत्युत्तमेनापूर्वेण शिवरामप्रणीतेन व्याख्यानेन सनाथं कृत्वा प्रकाश्यते । न केवलं सहृदयाः, यावन्मन्दा अप्यस्य व्याख्यानस्य साचिव्येन नागानन्दस्य गुणगौरवं तत्त्वतो ग्रहीतुं शक्ष्यन्ति ।

व्याख्याकारः शिवरामः कदा कुत्र जात इति न ज्ञायते । अस्यैव व्याख्यानेन समुपेतं तपतीसंवरणं सुभद्राधनञ्जयं च पूर्वमस्माभिरनन्तशयनसंस्कृतग्रन्थावलौ प्रकाशितम् ।

नागानन्दं राजकीयग्रन्थशालीयैः प्रवयोभिः पञ्चभिरादर्शैः मणलिक्करमठीयेनैकेन च संवादितम् । व्याख्यानस्य तु संशोधनाधारभूतास्तालपत्रात्मकाः केरलीयलिपयः षडादर्शाः । तत्र

क.संज्ञः राजकीयग्रन्थशालीयः पञ्चमाङ्कारम्भावधिः ।
ख.संज्ञः वेच्चूरु केशवकैम्मळ्सम्बन्धी अङ्कद्वयावधिः ।
ग.सञ्ज्ञः चुनक्करकृष्णवार्यसम्बन्धी जीर्णः ।
घ.संज्ञः किटङ्ङूरुकुमारमूत्ततुसम्बन्धी जीर्णः ।
ङ.संज्ञः किळिमानूरुराजगृहसम्बन्धी ।
च.संज्ञः तेक्कङ्कूरु राजसम्बन्धी अतिजीर्णः ।

एषु प्रथमपञ्चमौ अवृद्धौ, अन्ये प्रवयसः । तत्रापि षष्ठोऽतितरां जीर्णः ।

अनन्तशयनम्
२५–८–१९१७.

त. गणपतिशास्त्री.

॥ श्रीः ॥

श्रीहर्षदेवप्रणीतं

# नागानन्दं

## शिवरामकृतया विमर्शिन्याख्यया व्याख्यया

समेतम् ।

---

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतो[1]ऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बोधौ[2] जिनः पातु वः ॥ १ ॥

---

श्रीमदद्रितनयास्तनान्तरे हस्तचूपितपयःसमेधितम् ।
शम्भुशक्तिमयमस्तु नः सदा वस्तु हस्तिमुखमिष्टदं परम् ॥

* गुणव्यतिकरक्रमप्रसृमरान्यधीवृत्तिभिः
प्रगेतनमनुज्झितश्रुतिपथैरनादीनवम् ।
पराशरजजैमिनिप्रमुखविद्वदग्रेसरैः
प्रवर्तितमनुत्तमं मतमतद्विदप्याश्रये ॥

व्यस्ताव्यस्ततयाशेषतत्त्वस्वात्मसुनिर्भरम् ।
शिवं देशिकमाश्रित्य नागानन्दं विमृश्यते ॥

---

१. 'स कोऽन्यः', २. 'बुद्धो जि' मुद्रितकोशपाठः.

---

* पद्यमिदं ग. पुस्तके न दृश्यते ।

G. P. T. III. 500. 7-1-16. B

अथ कविकुलतिलकभूतः श्रीहर्षदेवः 'सन्दर्भेषु दशरूपकं श्रेय' इति वामनाचार्यप्रशंसानुसारेण महाकविसमुचितनाटकनिबन्धनबद्धपरिकरः प्रबन्धमुखे शिष्टाचारप्रमाणकं मङ्गलाचरणं नाटकोचितं नान्दीरूपेण नटमुखेन प्रतिपादयति। तत्र प्रत्याहारादीनामङ्गान्तराणामपि देवताप्रीतिहेतुत्वेऽपि तेषामनुष्ठानरूपत्वाद् रङ्गपूजाशेषत्वेन पाठ्याविषयत्वान्नान्द्याः पाठ्यरूपत्वेन

"अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेद्"

ति मुनिवचनाविरोधेनान्यान्यनूद्य नान्दीं प्रयुञ्जते केचित्—

"यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके।
तथाप्यवश्यकर्तव्या नान्दी विघ्नप्रशान्तये॥"

इति युक्त्यनुसारेण। केचित् तामप्यतीत्य नान्द्यन्त इत्येवारभन्ते। अत्र—

"नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम्।
सूत्रधारः पठेत् तत्र मध्यमं स्वरमास्थितः॥
तत्संख्यातैर्भवेन्नान्दी वाक्यैः क्वापि विवक्षया। *
समपादतया नान्दी भवेदिति च केचन॥"

इत्युक्त्या पदसंख्याया अनियमात् तमनङ्गीकृत्य सामाजिकान् प्रत्याशिषं प्रयुङ्क्ते। वाक्यषट्करूपं नान्दीलक्षणमत्राङ्गीक्रियते।

"आशीर्वचनसंयुक्ता यस्मान्नित्यं भवेदिह।
देवद्विजनृपादीनां तस्मान्नान्दीति शब्दिता॥"

इति हि तल्लक्षणम्। **ध्याने**त्यादि। जिनः वः पातु। जानातीति जिनः सर्वज्ञः। वः सामाजिकान् पातु। स्वमहिम्नैव सर्वसाध्यानामहमहमिकया प्रवृत्तत्वात् पालनमेवापेक्षितमिति तदेवाशास्यते। कोऽस्य देवतान्तराद्

---

* इतः परं
"पदैर्द्वादशभिः षड्भिरष्टभिर्वाप्यलङ्कृताम्।
मध्यमस्वरसंयुक्तां ततो नान्दीमुदारयेत्॥"
इत्यधिकं क. पुस्तके पठ्यते।

विशेषः, येन स एव रक्षकत्वेनाङ्गीकृतः, इति विशेषमाह— मारवधूभिर्बोधौ सेर्ष्यमित्यभिहितः । पुरा किल भगवान् विश्वम्भरः विश्वविध्वंसकानामपि शिवसेविनां त्रिपुराणामुपायान्तरेण दुर्जयत्वं मन्यमानः पञ्चममुपायं परमेश्वरमतानुसारेण प्रयोक्तुं बुद्धसिद्धान्तमुद्भाव्य बुद्धमुनिर्भूत्वा तेषां मतिविप्लवमापाद्य शिवेनैव घातितवान् ।

"ततः कृत्वा धर्मविघ्नं क्षणादेवात्ममायया ।
दैत्यानां देवकार्यार्थं जेष्येऽहं त्रिपुरं क्षणात् ॥
मायी मायामयं तेषां धर्मविघ्नार्थमच्युतः ।
शास्त्रं च शास्ता सर्वेषामकरोत् कामरूपधृत् ॥
मायी मायामयं शास्त्रं ग्रन्थषोडशलक्षकम् ।
श्रौतस्मार्तविरुद्धं च वर्णाश्रमविवर्जितम् ॥"

इत्यादि लैङ्गे प्रतिपादितम् । ततस्तमेव सिद्धान्तं पूर्वपक्षत्वेन वेदमार्गरक्षार्थं युक्तिसौन्दर्येणात्याज्यत्वाद् भिन्नरुचिषु जन्तुषु कुत्रापि कस्यचित् प्रवृत्तिर्भवेद् इति च स्थिरीकर्तुं तेनैवावतारेण तपस्यन् क्रतुभुजामधिपेन प्रतिकूलितः । भगवदभिप्रायमविज्ञाय कर्मभ्रंशो भवेदिति निरूप्य पुरन्दरेण मदनादिभिः सह समाधिभूमिमाक्रम्य तद्विलोभनाय प्रयासः कृत इति पुराणकथामनुसृत्य विशेषः प्रतिपाद्यते । मारवधूभिर्मारस्वामिकाभिर्वधूभिः सुरयुवतिभिः । ताः खलु तस्य सेना । सेर्ष्यं भगवत्समाधिं प्रति अक्षमामन्तर्निधाय । इत्यभिहितः अभिधानं प्रति कर्मतयाङ्गीकृतः । न खलु भगवता श्रोतृत्वमङ्गीकृतम् । अत एव कर्मत्वेनोपसंहारः । तत्र

"निरपेक्षं वशीकुर्याद् धृष्टमाक्रम्य लोभनैः"

इति गणिकाधर्मानुसारेण प्रथमं साम्मुख्यमापादयितुं विषयवीथीमारोप्य कामुकमिव पृच्छन्ति— त्वं ध्यानव्याजमुपेत्य कां चिन्तयसि । योगभूमिषु सप्तमीमवस्थां पर्यङ्कबन्धाक्षिनिमीलनादिना छलेन बहिर्भावयित्वा काम् अतिलोकसौभाग्यसम्पन्नां चिन्तयसि अलाभेनैदंपर्येणानुसन्दधासि । न

---

१ 'अस्त्रं' क. पाठः. २. 'क' ख. ग. पाठः.

खलु रसिकाग्रेसरस्य भवतो दुर्विज्ञेयपरोक्षवस्तुचिन्ता घटते। विविक्ते
परवञ्चनार्थं व्याजाङ्गीकरणं तु युक्तमेवेति संव्यवहाराय विषयित्व-
मारोप्य प्रश्ने तस्याकिञ्चित्करत्वमालक्ष्य पुनः प्रार्थयन्ते — उन्मील्य
चक्षुरित्यादि। कौतुकेनैवास्माकं प्रश्नः। न तद्विषयः कथनप्रयासः कर्तव्यः।
याकाचिद्भवतु, किमस्माकं तज्ज्ञानेन। दूरस्थायाः सन्निहिता श्राद्धेति
नीतिरपि तिष्ठतु। स्वार्थमेव प्रार्थयामः। उन्मील्य, न तु परावृत्त्यापि।
सर्वासां सम्मुखीनत्वान्न प्रवृत्त्यन्तरमपेक्षितम्। चक्षुः, एकस्याप्यक्षिकोणस्य
विषयत्वे कृतार्थता भवेत्, किं पुनर्द्वयोरिति भावः। क्षणम् एकवारम्।
न खलु वारंवारमवलोकनेन नयनकुवलयम्लानिः प्रारब्धविरोधश्च भवतु।
पश्य। 'अभ्यर्थ्यमाना च नातिविवृता स्यादि'ति कामसूत्रमप्यस्माभिर्वैव-
श्येनान्यथा क्रियते। अतो निर्लज्जं प्रार्थयामः। अनङ्गशरातुरं न केव-
लं जातस्पृहं, त्वद्विषये गाढेनानुरागेण मदनशरशकलीकृतस्वान्तम् अलाभे
दशमीमवस्थां प्राप्तुमुद्यतम्। जनं, न केवलमेकां द्वे वा, बह्वीः विधिव-
शात् त्वामेवाधिकृत्य प्रवृत्तमनोरथाः। बह्वर्थवाची जनशब्दः, मारवधूभि-
रित्युक्तत्वात्। इमम् अक्षिसमुन्मीलने सङ्गीभूय विषयतामुपगतं
दृश्यवैवश्यं च। एतेन तव नातीव स्वार्थहानिः, अस्माकं प्राणरक्षा च
भवेद्, अतो रक्षितारं त्वां प्रार्थयाम इति याच्ञा। एवमुक्तेऽपि निर्वि-
कारत्वमालक्ष्य किञ्चिदधिक्षेपगर्भमुक्तिः — त्रातापि नो रक्षसि। त्राता-
पीति प्रसिद्धिमनुसृत्योक्तम्। त्रातृत्वेन प्रसिद्धोऽपीदानीं क्रियया तथा न
लक्ष्यसे, अतः प्रसिद्धिरपि न वस्तुमूलेत्यर्थः। इत्युक्तेऽपि विशेषमनालक्ष्य
गुणनिरासेनाधिक्षिपन्ति — मिथ्याकारुणिकोऽसि। दीनरक्षणरूपकार्या-
भावे तत्कारणभूतं कारुणिकत्वमपि शशशृङ्गप्रायमित्यर्थः। अत्रापि विशे-
षमनालक्ष्य साक्षाद् दोषोद्घोषणं—निर्घृणतरः निर्दयाग्रेसरः त्वत्तः कुतः।
न केनापि हेतुना अन्यस्य वराकस्य निर्घृणत्वारोपो युक्तः। त्वमेव
निर्घृणाग्रेसरः। अहो लोकस्य विपर्ययज्ञानं, यदतिनिर्घृणो दयावानित्यु-
च्यत इत्यर्थः। एवं क्रमापेक्षया वाक्यभेदः। इतीति वाक्यप्रकारोप-
संहारः। बोधिरिति जिनप्रक्रियया समाधिकथनम्।

१. 'त्व' ग. पाठः.

अपिच,

कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरै-
र्भ्रूभङ्गोत्कम्पजृम्भास्मितललितवता दिव्यनारीजनेन ।
सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद् वासवेन
ध्यायन् बोधेरवाप्तावचलित[1] इति वः पातु दृष्टो मुनीन्द्रः ॥ २ ॥[2]

---

"विशुद्धबुद्धिसन्तानो बोधिरित्यभिधीयते"

इति तत्प्रक्रिया । बोधौ अश्वत्थमूले स्थित इति केचित् । तैरेतदनुवाद-रूपे बोधेरवाप्तावित्यत्र सङ्गतिर्न निरूपिता, बोधिमूलस्थितिकथने किं प्रयोजनमिति च ॥ १ ॥

एवं नान्दीश्लोकं पठित्वा पुनरपि तामेव देवतामुत्तरकालभवं विशेषमाश्रित्याशिषमनूद्य प्रशंसितुं द्वारमुद्घाटयति अपिचेति। अस्या एव देवतायाः पुनरवश्यवक्तव्यो विशेषः कथ्यते । अतिप्रसङ्गबुद्धिरत्र मा भूदित्यर्थः, यथा 'निष्प्रत्यूहमि'त्युक्ते 'अपिच, विरमति महाकल्प' इति । **कामेनेति** । तिष्ठतु सेनाप्रवृत्तिः, स्वामिनापीत्यर्थः । आकृष्य शरसन्धान-पूर्वकं प्रयोक्तुमध्यवसाये पुनर्वैफल्यं निश्चित्य मानित्वेन नियन्तुमप्यसम-र्थेन 'सक्ताङ्गुलिः सायकपुङ्ख एवे'तिवद् भगवत्प्रभावेन वा तदवस्थेनैव दृष्टः । अहो कुत्रापि न ममैवं प्रयोगवैफल्यमिति तस्यापि विस्मयः । अत एव मारजिदिति भगवतो नाम । हताः प्रचण्डं वादिताः पटुध्व-नयः पटहा यैस्तैः, पुनः पुनर्वल्गनपरैश्च । शरसन्धानमालक्ष्य इदानीं स्वामी जेष्यतीति तच्छेषतया वल्गनम् । वैयर्थ्यनिश्चयेन तैरपि सविस्मयं दृष्टः । **मारवीरैरिति** । मारवधूभिरितिवद् वीरा वयमिति तद्बुद्ध्यनुसा-रेण वीरशब्दः । भ्रूभङ्गः भ्रूविलासः । उत्कम्पो वेपथुः । जृम्भा गात्रवि-नामः । उपलक्षणं चैतत् केशविश्लथनबाहुमूलदर्शननीवीविस्रंसनादीनाम् । स्मितं प्रसादप्रकाशनाय । ललितं मृदुपदविन्यासभुजलतान्दोलनादिकं,

---

१. 'चलितदृशा दि', २. 'धेरवाप्तौ न च' मुद्रितकोशपाठः.

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—अद्याहमिन्द्रोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राज-

---

"सुकुमारोऽङ्गविन्यासो मसृणो ललितं भवेद्"

इति । तद्वता, स्वामिनः सन्नाहमालक्ष्य तदनुगुणमनुरागनटनेन । एवं बहुप्रयासेन । दिव्येति पूर्वोक्तानामेव निर्देशः । पूर्वं चाद्युक्तेर्वैफल्यं पुनः स्वामिना सह प्रवृत्तेश्च वैफल्यं दृष्ट्वा तासामपि विस्मयेन दर्शनम् । एवं विपक्षप्रवृत्तिमुक्त्वा सेवक(प्र)वृत्तिमाह—सिद्धैः तपस्विभिः । प्रह्वोत्तमाङ्गैः समाधिधैर्येण भक्तिविस्मयपारवश्यप्रणतशिरोभिः । दृष्टः पुलकितवपुषा विस्मयात् । प्रवृत्तिवैफल्यजनितं विषादमाक्रम्य विस्मयो विजृम्भितः । ततः कण्टकिताङ्गेनाक्षिसहस्रेणैकलक्ष्यीकृत्य दृष्टः । बोधेः शुद्धबुद्धिरूपस्य तत्त्वस्य अवाप्तौ सत्याम् अचलितः अखिलकरणोपरमेण धीसन्ततिमेवानुभवतस्तत्रैव वर्तनमत्र ध्यानं, न तु तत्त्वान्वेषणरूपम् । अत एव सर्वेषां विस्मयहेतुत्वम् । ध्यानव्याजमिति तु तासां प्रलोभनं, न वस्तुवृत्तम् । मुनीन्द्रो वः पात्वित्यन्ययोगव्यवच्छेदपरम् । एवं स्थिते कथं देवतान्तरस्य रक्षकत्वमाकाङ्क्ष्यत इति भावः । मुनीन्द्र इति तस्यैव भगवतो नामान्तरम् । एवमस्य मुनीन्द्रत्वं युक्तमेवेत्यर्थः ॥ २ ॥

एवं विघ्ननिवारणसामाजिकसाम्मुख्यादिफलां नान्दीं विधाय प्रथमे सूत्रभृति विनिर्गते ततः कथासूचकः प्रविशति—

"प्रसाद्य रङ्गं विधिवत् कवेर्नामानुकीर्तयेत् ।
प्रस्तावनां ततः कुर्यात् काव्यबन्धसमाश्रयाम् ॥"

इति मुनिवचनानुसारेण । केचिदत्र नान्दीं नाङ्गीकुर्वन्ति । तत्पक्षे कथासूचकस्यैवादिश्लोकः, श्लोकद्वयानन्तरमलं प्रविस्तरेणेति च । तत इत्यव्यवधानेन प्रवेश उक्तः । अनेन क्रमेण परस्परपरिस्यूतत्वं द्योतितम् ।

---

१. 'रः—अलमतिविस्तरेण । अ', २. 'ज' मुद्रितकोशपाठः.

समूहेनोक्तः[१] । यथा—यत् तदस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालङ्कृतं विद्याधरजातकप्रतिबद्धं[२] नागानन्दं नाम नाटकं कृतमित्यस्माभिः[३] श्रोत्रपरम्परया श्रुतं, न[४] प्रयोगतो

पूर्वरङ्गानन्तरं सूचकप्रवेशस्तदनन्तरमनुकार्यप्रवेशः, न तु केवल इति। एतदनुसारेण सर्वत्र ततः प्रविशतीत्युच्यते । ततो हेतोः प्रविशति पूर्वप्रसङ्गेन नाप्रसङ्गेन इति केचित् । न खलु पुराणादिवदतीतवृत्तकथनमत्रापेक्ष्यम् । पूर्ववृत्तानुसारेणानुकार्यावस्थानुकृतौ प्रत्यक्षायमाणत्वे सति हि रसास्वादः सामाजिकानाम् । तदर्थं प्रविशतीति वर्तमाननिर्देशः सर्वत्र । प्रविश्येत्युक्तावप्युत्तरकालक्रियाया वर्तमानत्वम् । अथ स्थापकः ।

"या वाक्प्रधाना नृवरप्रयोज्या स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयोज्या सा भारती नाम भवेत्तु वृत्तिः ॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः ।
प्ररोचनामुखं चैव वीथी प्रहसनं तथा ॥"

इत्यादि भरतमतानुसारेण भारतीं वृत्तिमाश्रित्य प्ररोचनामुखाभ्यां प्रस्तावनां कर्तुं स्वावस्थां प्रकाशयति—अद्येत्यादिना । इन्द्रोत्सवे प्रतिवत्सरं वर्षादिसिद्ध्यर्थं वेणुमयमिन्द्रध्वजमुत्पाद्य क्रियमाण उत्सवे । यथा 'पुरुहूतध्वजस्ये'ति । उत्सवशब्देन नाट्यस्य तच्छेषत्वान्नियोगस्योचितकालता व्यज्यते । सबहुमानमाहूय नानादिग्देशागतेनेत्यनेन नियोगस्यादरणीयत्वं द्योत्यते । देवस्य पादपद्मोपजीविनेति तस्य सार्वभौमत्वम् । राजसमूहेनेति नियोगस्यालङ्घनीयत्वं महाफलत्वं च द्योत्यते । यथेति तत्प्राकरोपक्रमः । यत्तदिति श्रुतमिति नाटकं कर्मतयानुकृष्यते । अस्मदित्यादिना इत्यन्तेन श्रवणप्रकारः प्रतिपाद्यते। श्रवणप्रकारस्य कर्मत्वे यत्तदिति न घटते । तच्छब्दः प्रसिद्धिद्योतकः । प्रसिद्धोऽयमर्थः, प्रयोग एवावशिष्यत इत्यर्थः ।

१ 'क्तः । यत्' मूलकोशपाठः. २. 'चक्रवर्तिप्र', ३. 'मस्मा', ४. 'न च प्र' मुद्रितकोशपाठः. ५. 'वे' क. घ. पाठः.

दृष्टम् । तत्तस्यैव राज्ञो[1] बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत् प्रयोगेनाद्य त्वया नाटयितव्यमिति । तद् यावदि[2]दानीं नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि । आवर्जितानि च[3] सामाजिकै[4]र्जनमनांसीति मे निश्चयः । कुतः[5]—

श्रीहर्षेति प्रकारेण कविनामकीर्तनम् । अपूर्ववस्तुरचनेति कविप्रतिभाकल्पनम् । अलङ्कृतमिति वैशिष्ट्यं प्रापितम् । अनेन मिश्रत्वं निरस्तं, प्रख्यातवस्तुत्वान्नाटकस्य ।

"यत् तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥"

इत्यनेन विशेषाधानमेव विहितम् । अत उक्तमलङ्कृतमिति । तत्र तत्र नेतृरसानुगुण्येन कस्यचिदंशस्य निर्माणेन सुन्दरं शरीरमाभरणादिभिरिव विचित्रतां नीतम् । विद्याधरजातकमिति कश्चित् प्रबन्धः, तत्संबद्धम् । अनेन वस्तुनः प्रसिद्धत्वमुक्तम् । नागानन्दमिति नामकीर्तनं न्यायानुसारेण । श्रोत्रपरम्परया कस्मादप्यासात् केनचिच्छ्रुतं, ततोऽन्येन इति क्रमेण श्रुतम् । श्रोत्रेत्यनेन वक्तृविशेषानिश्चयः प्रकाश्यते । न प्रयोगतो दृष्टमिति श्रवणे स्वामिबहुमतिः । सा पूर्वमेव पूर्णा । प्रयोगदर्शनमस्य मुख्यं फलं, तन्न सिद्धमित्यौत्सुक्यम् । तदिति । यदेवं श्रवणमात्रेण जनितकौतूहलं, तत् त्वया नाटयितव्यमिति संबन्धः । तस्यैव राज्ञो बहुमानात् तत्संबन्धी बहुमान एवात्र मुख्यं कारणम् । तत एव ख्यातिलाभपूजादिकं भवतः । अस्मासु चेत्यन्वाचये चकारः । अनुग्रहबुद्ध्या, बहूनां प्रीतौ किमप्यदृष्टं भवेदिति तदपि हेतुत्वेन ग्राह्यम् । यथावत् प्रयोगेनेति त्वयेत्यस्य फलितोऽर्थो न तु विधिः । त्वया प्रयुक्ते सति यथावत् प्रयोग एव संभवति । तन्न प्रार्थनीयमित्यर्थः । यथावत्प्रयोगेनेत्येकं पदं वा । सुष्ठु निर्दोषप्रयोगो यस्येति त्वयेत्यत्र हेतुः । एवं स्वावस्थां प्रतिपाद्य प्ररोचनार्थमुपक्रमते —

१. 'ज्ञः सकलजनहृदयाह्लादिनो ब', २. 'मि । (परिक्रम्यावलोक्य) आ', ३. 'च मया सकलसा', ४. 'कम', ५. 'य' मुद्रितकोशपाठः.

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च बोधिसत्त्वचरितं[1] नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ३ ॥

---

"पराभ्युदयिनी तत्र मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥
सिद्धामन्त्रणतो भाविदर्शिका स्यात् प्ररोचना ।"

इति मुनिवचनानुसारेण । कविकाव्यपरिषत्प्रयोक्तॄणां गुणोद्घोषणेन साध्यस्य सिद्धवत् प्रतिपादनं करोति— आवर्जितानि प्रयोगपरितोषेणानुकूलीकृतानि । इति मे निश्चयः, प्रागेवेति शेषः । कथं बहुसामग्रीसाध्यस्य सामाजिकचित्तावर्जनस्य सिद्धवन्निश्चयः, इत्यत्र हेतुमाह— कुत इति । कस्मादेवमुच्यत इति चेच्छ्रूयतामित्यर्थः । श्रीहर्ष इति । निपुणः कविरित्युक्त्यैव गौरवे सिद्धेऽपि प्रसिद्धनामकीर्तनमेव कविप्राशस्त्यमुत्पादयतीति नामकीर्तनस्य विहितत्वाच्च नामकथनम् । अतो निपुण इत्यनुवाद एव । लक्ष्यलक्षणादिपरिशीलनाद्युत्पत्तिर्नैपुणम् ।

"नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥"

इत्यनेन 'शक्तिर्निपुणता' इत्यादिना च शक्तिनैपुणाभ्यासानां समुदितानामेव काव्यहेतुत्वं पूर्वैरुक्तम् । अतो नैपुणमन्ययोरुपलक्षणम् । शक्त्यादिगुणयुक्त इत्यर्थः । अथवा नैपुणं सर्वेषां विनियोगचातुर्यम् । तत्र नेतृरसानुगुण्येन वस्तुसम्पादने औचित्यानुसरणेन नायकपरिजनादीनामवस्थाप्रतिपादने रसानामङ्गाङ्गिभावानुगुण्येन विभावानुभावव्यभिचारियोजने निर्दोषगुणालङ्काररुचिरशब्दार्थविनिवेशने प्रबन्धोचितवृत्तिरीतिपरिग्रहे च कुशल इत्यर्थः । परिषत् सामाजिकसन्ततिः । अपिशब्दः प्रकारसमुच्चये । अस्म-

---

१. 'सिद्धराजच' मुद्रितकोशपाठः.

स्साध्यं प्रत्येकप्रकारता सर्वेषामित्यर्थः । एवमुपर्यपि । गुणग्राहिणी गुणग्रहस्वभावा । यद्यपि गुणदोषविवेके निपुणा, तथापि दोषानवादृत्य गुणोद्घोषणस्वभावेत्यर्थः ।

"चतुरातोद्यकुशला वृत्तज्ञास्तत्त्वदर्शिनः ।
देशभाषाविशेषज्ञाः कलाशिल्पविचक्षणाः ॥
सर्वाभिनयतत्त्वज्ञा रसभावविकल्पकाः ।
शब्दच्छन्दोविधानज्ञाः प्राश्निका नाट्यमण्डपे ॥
ये तुष्टौ तुष्टिमायान्ति शोके शोकं व्रजन्ति च ।
दैन्ये दीनत्वमायान्ति गुणग्रहणतत्पराः ॥
व्यक्तरोषानुरागाश्च ते नाट्ये प्रेक्षका मताः ।"

इत्यादिना मुनिनिर्दिष्टगुणविशिष्टसभ्यपरिपूर्णेत्यर्थः । लोके हारीति । निबन्धनादिचातुर्यमनपेक्ष्य सर्वत्र सर्वेषामतीव मनोहरम् । लोकशब्देन व्याप्तिः प्रकाशिता । बोधिसत्त्वचरितम् । बोधिसत्त्व इति जीमूतवाहनस्य पूर्वसिद्धं प्रसिद्धतरं नामान्तरम् । तच्च कारणात्मनि बुद्धे,

"बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायकः"

इत्युक्तत्वात् । अत एव तेन व्यपदेशः ।

"जीमूतवाहनस्यैतदात्मदानं किमद्भुतम् ।
बोधिसत्त्वः स हि पुरा दत्तवान् बहुशस्तनुम् ॥"

इति क्षेमराजकथानुसारेण नायकस्य प्रसिद्धिः प्रतिपादिता । पुनः सामग्र्यन्तरमाह — नाट्ये च दक्षा वयमिति । सहायानपेक्ष्य बहुवचनं, तौर्यत्रिकोपयोगिनां सर्वेषां दाक्ष्यस्याभिमतत्वात् । मद्वर्ग्या इतिवत् । 'नाट्यानां लक्षणं संक्षिपामी'ति नाट्यशब्देन रूपकाभिधानाद् रूपकेषु 'ताण्डवं नटनं नाट्यमि'ति नटनपर्यायेणोक्तत्वात् प्रयोगे च 'नाट्यशास्त्रं प्रवक्ष्यामी'त्यत्र नाट्यस्य शास्त्रत्वेन व्याख्यातत्वाद्

"रसभावास्त्वभिनया धर्मवृत्तिप्रवृत्तयः ।
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च सङ्ग्रहः ॥"

इति सङ्ग्रहकारिकोक्तशास्त्रप्रतिपाद्यस्वरूपे च । दक्षा इति लक्ष्यलक्षणप्रयोगविषयं दाक्ष्यमुक्तम् । 'आत्मन्यप्रत्ययं चेत' इति केषाञ्चिन्मतम् । वयं तु गुरुचरणसेवया निरन्तराभ्यासेन च चतुर्विधाभिनये षडलङ्कारविशिष्टे समुचितस्वरकाकुयोजनजनितशोभे पाठ्ये च

"साधनं दूषणाभावः प्रयोगसमयाश्रितैः ।
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ॥
वाद्यं गानं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः ।"

इत्यस्मत्पूर्वाचार्यशिक्षाक्रमेण निरस्तविकल्पाः,

"विस्वरमरक्तरागं वर्णस्वरसम्पदा च परिहीणम् ।
अज्ञातस्थानलयं स्वरगतमेवंविधं हन्यात् ॥
विषमं मार्गविहीनं विमार्जनं नानुकूलवाद्यं च ।
अविभक्तग्रहमोक्षं पुष्करगतमीदृशं हन्ति ॥
छेदो वृत्तत्यागो गुरुलाघवसङ्करो यतिभ्रंशः ।
एतानि स्थूलानि तु घातस्थानानि पाठ्यस्य ॥"

इत्याद्यपप्रयोगजनितघातानुदयेन द्विविधसिद्धिसुभगे रसमये नटने निपुणाः । नेयमात्मप्रशंसा, अपि तु वस्तुकथनमेव । तत्र च गुरुपारम्पर्यमेव शरणम् । कविमहिम्नैव काव्यगुणा उक्ताः । वस्त्वित्ति कविकाव्यपरिषन्नेतृप्रयोक्तृगुणरूपम् । गुणानां गण इत्युपसंहारात् । एकैकम् अन्यनिरपेक्षम् । इह प्रयोगे । वाञ्छितं फलं सामाजिकमनःसमावर्जनम् । तत्प्राप्तेः पदं स्थानं, निमित्तमिति यावत् । किं पुनरिति । प्रत्येकं सामर्थ्ये संभूय प्रवृत्तौ फलोत्कर्षः किं कथ्यतामित्यर्थः । मद्भाग्योपचयादिति । अत्र नास्मदिति । ममैकस्य सुकृतप्रकर्षोऽत्र निमित्तम् । अत्रैवंगुणविशिष्टेऽस्मिन् सादरं प्रवर्तितव्यम् इति सामाजिकान् प्रति प्रोत्साहनं व्यज्यते । एवं भारतीवृत्त्यङ्गतया प्ररोचनां प्रतिपाद्य स्वावस्थाप्रसङ्गेनामुखं प्रस्तौति —

"नटी विदूषकश्चापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः सल्लापं यत्र कुर्वते ॥

तद् यावद्[1] गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य)

[2]द्विजपरिजनबन्धुहिते! मद्भवनतटाकहंसि! मृदुशीले!।
परपुरुषचन्द्रकमलिन्यार्ये! कार्यादितस्तावत् ॥ ४ ॥

---

चित्रैर्वाक्यैः स्वकार्योत्थै[3]र्वीथ्यङ्गैरन्यथापि च।
आमुखं तत् तु विज्ञेयं बुधैः प्रस्तावनापि च ॥"

इत्यामुखलक्षणानुसारेण। नटीसलापायोपक्रमते — तद्यावदिति। यत एवं परिषदाराधनसामग्री, तत इत्यर्थः। यावदित्यध्यवसाये। तेन त्वरा सूचिता। गृहिणीमाहूयेति। सहकारिषु तस्याः प्राथम्यमिति तदाह्वानेनैवान्येषां परिग्रहः सिद्धः। अत एवोक्तं 'सङ्गीतकमनुतिष्ठामी'ति।

"नृत्तवादित्रगीतानि सङ्गीतकमिहोच्यते"

इति समुचितानामेव संज्ञा। अतः प्रयोगमारभ इत्यर्थः। परिक्रमणनेपथ्यशालावलोकने तदाह्वानशेषतया। तत्र 'किं गृहिणः प्रियहिताय, दारगुणाः' इति प्रश्नोत्तररत्नमालिकोक्तदिशा तद्गुणप्रीतो गुणोद्घोषणपूर्वकमाह्वयति — द्विजेति। आतिथ्यादिना द्विजेभ्यः, भृतिदानादिना परिजनेभ्यः, दानमानादिना बन्धुजनेभ्यश्च हिते! हितकारिणि!। मद्भवनरूपस्य तटाकस्य हंसि! शोभाहेतुत्वात्। अपरुषस्वभावे! परपुरुषेषु स्वत एव विमुखि!। आर्ये इति। एवं स्थिते न केवलमाचारेणार्थतोऽप्येवमेव वक्तुमर्हे! इत्यभिप्रायः। कार्यादिति। गृहप्रवेशे मदाह्वानं यथापुरमिति बुद्धिं मा कृथाः। अवश्यकर्तव्यतयाद्य समाह्वानं, न त्वात्मागमननिवेदनायैव।

---

१. 'दहं गृहं गत्वा गृ', २. 'इदमस्मद्गृहं, यावत् प्रविशामि। (प्रविश्य) आर्ये! इतस्तावत्' मुद्रितकोशपाठः. ३. 'त्थौ वीथ्य' क. ग. घ. पाठः.

(प्रविश्य[1] सास्रा)

**नटी**—(क) अय्य! इयह्मि[2] ।

**सूत्रधारः**—(विलोक्य[3]) आर्ये! नागानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते ।

**नटी**—(ख) अय्य[4]! कहं ण रोदिस्सं । जदा[5] तादो अज्जुआ[6] अ थविरभावँजाद[7]णिव्वेदा[8]ओ कुडुम्बभारुव्वहणजोग्गो

(क) आर्ये! इयमस्मि ।

(ख) आर्य! कथं न रोदिष्यामि । यदा तातोऽज्जुका च स्थविरभावजात-

तत् त्वरस्वेत्यभिप्रायः । इतस्तावदिति । अर्थादापतितमिति नाटके न सर्वत्र वाचा अर्थप्रतीतिरिति च आगम्यतामिति क्रियाया अनिर्देशः । एवमुपर्यपि ॥

एवमाहूतायाः सूच्यानुरूपं स्वार्थमारोप्य प्रवेशं प्रतिपादयति—प्रविश्येति । सास्रेति संव्यवहारप्रसङ्गाय । आर्य! इयमस्मि । आगता । किं क्रियतामिति शेषः । नागानन्दे नाटयितव्य इति सिद्धत्वकथनेन पूर्वमेव पाठ्यधारणप्रयोगप्रकारादिकं परिशीलितं, प्रयोग एवावशिष्यत इति ध्वनितम् । अकारणमेवेति । इदानीं नटनोपक्रमात् प्रहर्षस्यैवौचित्यमित्यर्थः । रुद्यते, त्वयेति शेषः । आर्य! कथं न रोदिष्यामि । यदा तातः अज्जुका च स्थविरभावजातनिर्वेदौ कुटुम्बभारोद्वहनयोग्य इदानीं त्वमिति हृदय आरोप्य तपोवनं गतौ । आरोप्यति । तयोराग्रह एव, नास्माकमेवं संभ्रमः । स्वातन्त्र्यस्यानिवार्यत्वात् किं कुर्म इति

१. 'श्य' नटी—(सास्रम्) अ', २. 'ह्मि मन्दभाआ । आणवेदु अज्जउत्तो को णिओओ अणुचिट्ठीअदु त्ति ।', ३. 'नटीमवलोक्य', ४. 'ज्ज', ५. 'यदो दाव ता', ६. 'ज्जाए सह थ', ७. 'वं जाणिअ अदूरजा', ८. 'दो कु' मुद्रितकोशपाठः.

दाणिं तुवं[1] ति हिअए[2] आरोविअ तवोवणं गदौ[3] ओ ।

**सूत्रधारः**[4]—कथं[5] मामपि[6] परित्यज्य[7] वनं प्रयातौ पितरौ[8] । (विचिन्त्य) तत् किमिदानीं युज्यते[9] । अथवा, कथमहं गुरुचरणपरिचर्यासुखं परित्यज्य गृहे तिष्ठामि । कुतः,

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम् ।
वनं याम्यहमप्येष[10] यथा जीमूतवाहनः[11] ॥ २ ॥

(निष्क्रान्तौ ।)

**आमुखम् ।**

---

निर्वेदौ कुटुम्बभारोद्वहनयोग्य इदानीं त्वमिति हृदय आरोप्य तपोवनं गतौ ।

---

विषादो व्यज्यते । तपोवनं गताविति । अस्मत्परिचर्यामनपेक्ष्येति शेषः । अत एवास्रोपपत्तिः । इति तद्वचनं श्रुत्वा सविषादमाह—कथमिति । मामपि अनन्यशरणम् अनिष्टविप्रयोगमपीत्यर्थः । परित्यज्येति खेदो व्यज्यते । पितराविति । तदर्थमेवास्माकं सर्वोपक्रम इत्यादरातिशयः । तत एवानन्तरोचितं निरूप्य स्थिरमतिराह—कथमहमिति । न तादृशः कोऽपि प्रकार इत्यर्थः । गुरुचरणेति । न खलु तत्परिचर्यासुखस्य समानं गृहे तिष्ठतः संभवति । अतः पित्रोः शुश्रूषां विधातुं क्रमागतं कुलक्रमागतमिति ग्राह्यत्वे सत्यपि शुश्रूषणस्यातीव हृद्यत्वात् त्याज्यमेवेत्यर्थः । ऐश्वर्यं नटवर्गसंबन्धि स्वाम्यम् । तत्र दृष्टान्तरूपेण सूच्यं प्रस्तौति—एष यथा जीमूतवाहन इति । पित्रोरित्यादि सर्वं संबध्यते । अत्र इदमस्माभिरनन्तरं प्रयुज्यत इति साक्षादुक्तेः सूचनमेव चारुतरम् । अत एव सूत्रधारत्वम् । अनेन सूचनीयानुगुण्येन स्वार्थं

---

१. 'मं', २. 'ए वितक्किअ त', ३. 'दा ।', ४. 'रः—(सनिर्वेदम्) अये क' मुद्रितकोशपाठः. ५. 'हं मा' क. ख. पाठः. ६. 'मां प', ७. 'ज्य तपोवनं या', ८. 'रौ । त', ९. 'ते' । (विचिन्त्य) अ', १०. 'दैव य', ११. 'नः ॥ (इति निष्क्रान्तौ) प्रस्तावना । त' मुद्रितकोशपाठः.

(ततः प्रविशति नायको विदूषकश्च ।)

**नायकः**[1]—

प्रतिपाद्य नायकप्रवृत्तिप्रवेशसूचनं कृतम् । तत्रामुखस्य षोडशाङ्गानि—कथोद्घातप्रवर्तकप्रयोगातिशयाः । वीथ्यङ्गानि च त्रयोदश । तेषां सर्वेषामेकत्र न नियमः,

"एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् ।
प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत् ॥"

इत्युक्तत्वात् । स्वेतिवृत्तसमशब्दग्रहणेनार्थग्रहणेन च द्विधा कथोद्घातः । 'द्वीपादप्यन्यस्मादि'ति, 'स्वस्था भवन्त्वि'ति च शब्दग्रहणम् । अर्थग्रहणमिहैव । पितृशुश्रूषणार्थं वनगमनमङ्गीकृत्य पात्रप्रवेशः,

"कालसाम्यसमाक्षिप्तः प्रवेशः स्यात् प्रवर्तकः"

इति यामीति स्वगमनसमकालतया नायकप्रवेशस्याक्षिप्तत्वात् प्रवर्तकः, एष यथेति साक्षात्कृतत्वात् प्रयोगातिशयश्च, 'एष राजेव दुष्यन्त' इतिवत् । एभिस्त्रिभिरामुखाङ्गैर्नायकप्रवेशस्यैव सूचनम्, अन्तरा नीरसवस्त्वभावात् । तत्र सति हि विष्कम्भः ।

"यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥"

इति नीत्या आमुखेनाङ्काद् बहिर्भूतेन नायकप्रवेशसूचनम् । अत एव आमुखमिति संज्ञा । ईषन्मुखं प्रकृतारम्भ इति संज्ञा । भारत्याः पाठ्यरूपत्वेन प्रबन्धव्यापिन्या अपि पूर्वरङ्गे प्राधान्यम् । 'स्वनामधेयैर्भरतैरनुकार्यरूपतामनापन्नैः प्रयोज्ये'ति प्रायिकं लक्षणं प्रस्तावनादिष्वेव संभवति । सूत्रधारादिशब्दा नटानामेवावस्थानामभेदाः । एवं प्रस्तुत्य तयोर्निष्क्रान्तयोस्तदनन्तरमेवाङ्कादौ सूचितस्य नायकस्य प्रवेशः । इह वस्तुनेतृरसानां स्वरूपे निरूप्यमाणे वस्तु तावत् 'लोके हारि च बोधिसत्त्वचरितमि'त्यनेन प्रसिद्धत्वेनोक्तम् । नेता नान्दीश्लोकेन कारणात्मना

1. 'कः—(सनिर्वेदम्) वयस्य ! आत्रेय ! रा' मुद्रितकोशपाठः.

सूचितो जीमूतवाहन इति साक्षादुक्तः उदात्त इति धनिकादिभिर्निरूपितः, कथमिव नागानन्दादौ जीमूतवाहनादिरुदात्त इत्युच्यत इत्यारभ्य सपूर्वपक्षसिद्धान्तं निश्चितश्च । रसस्तु शमापरपर्यायनिर्वेदस्थायिभावयुक्तः शान्तोऽपि नवमोऽस्ति रसः । स एव हि नागानन्दादावङ्गित्वेन प्रकाशते । तत्र शान्तशृङ्गारयोर्नैरन्तर्यविरोधिनोर्विरोधपरिहाराय 'रागस्यास्पदमि'त्यादिना विषयविरागहेतुकप्रशमरूपशान्तसमारम्भे 'अहो गीतमहो वादित्रमि'त्युभयाविरोधिन्यद्भुते पदं निधाय क्रमेण शृङ्गारप्रवेशः । पुनस्तृतीयाङ्कावसाने मित्रावसुप्रवेशे 'संसर्पद्भिरि'त्यादिना वीरे पदं न्यस्य पुनरपि शान्ते प्रवेशः । एवं नैरन्तर्यविरोधपरिहारेण शान्तस्यैवाङ्गित्वम्, अन्येषां तदङ्गत्वमेवेत्यानन्दवर्धनादिभिः समर्थितः । अन्यैः शान्तरस एव नाङ्गीकृतः । कुतः पुनरङ्गाङ्गिभावनिरूपणम् । कथमिति चेद्, भरतमुनिना अष्टावेव स्थायिनः प्रतिपादिताः—

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥"

इति । तत्र त्रयस्त्रिंशद्व्यभिचारिणः, अष्टौ स्थायिनः, अष्टौ सात्त्विका इत्येकोनपञ्चाशद्भावाः । तैः सामान्यगुणयोगेन निष्पद्यन्ते रसाः । तत्र स्थायिन एव भावा रसत्वमाप्नुवन्ति । यथा हि समानलक्षणास्तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गाः कुलविद्याकर्मशिल्पविचक्षणत्वाद् राजत्वमाप्नुवन्ति, तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति । बह्वाश्रयत्वात् स्वामिभूताः स्थायिनो भावाः । त एव रसत्वमाप्नुवन्ति । परिजनतुल्या अन्ये भावा इत्यादिना चाष्टौ रसा इति साधितम् ।

"यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥"

इति च, 'अष्टौ नाट्यरसाः स्मृता' इति च ।

---

१. 'थं जीमूतवाहनादिर्नागानन्दादावुदा' क. पाठः. २. 'ये' ख. पाठः. ३. 'मो र' क. पाठः.

"एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः ।
अतः परं प्रवक्ष्यामि भावानामपि लक्षणम् ॥"

इति रसाध्यायोपसंहारश्च कृतः । यत् पुनः, 'अथ शान्तो नाम शमस्थायिभावात्मको मोक्षप्रवर्तक' इत्यारभ्य

"मोक्षाध्यात्मनिमित्तस्तत्त्वज्ञानार्थहेतुसंयुक्तः ।
निःश्रेयससंयुक्तः शान्तरसो नाम विज्ञेयः ॥
न यत्र दुःखं न सुखं न द्वेषो नापि मत्सरः ।
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः ॥
भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः ।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते ॥
स्वं स्वं निमित्तमाश्रित्य शान्ताद् भावः प्रवर्तते ।
पुनर्निमित्ताभावे तु शान्त एव प्रलीयते ॥
एवं नव रसा दृष्टा नाट्यज्ञैर्लक्षणान्विताः ।"

इत्यन्तेन मध्ये शान्तः परिगृहीतः, तद् मतान्तरानुसारेण, न स्वसिद्धान्तेन। ततः परमतमप्रतिषिद्धमनुमतमेवेति नीत्यान्यैः सोऽपि समर्थितः[1]। तन्मतानुसारिभिर्मुनिहृदयं ज्ञात्वा निरस्तः । भावप्रकाशकारेणापि शान्तस्य वैकल्यं समर्थितम् ।

"शान्तो विषयहेयत्वदर्शनश्रवणादिभिः ।
धर्माख्यानपुराणैश्च पुण्यतीर्थावगाहनैः ॥
पुण्याश्रमनिवासैश्च योगिभिर्नित्यसङ्गमैः ।"

इत्यारभ्य

"मानावमानयोः शोकहर्षयोः सुखदुःखयोः ।
समवृत्तितया प्रायो नानुभावा भवन्ति हि ॥
नोपकुर्वन्ति शान्तस्य भावाः सञ्चारिणो यतः ।
तस्माच्छान्तरसस्यैवं विकलाङ्गत्वमुच्यते ॥

१. 'मुनिमता' क. पाठः.

यतोऽनुभावाभिनयो न शक्यो नाट्यकर्मणि ।"

इत्यादिनानभिनेयत्वेन विकलत्वं समर्थितम् । विकलत्वे सत्यङ्गित्वमतीव न घटते ।

"यथा कारणवैकल्यात् कार्यं नोत्पद्यते दृढम् ।
तथा कारणभावादिवैकल्यान्न रसोदयः ॥
तस्माद् विभावानुभावसात्त्विकव्यभिचारिभिः ।
वर्धिताः स्थायिनो भावा नायकादिगताः पुनः ॥
अनुकार्यतया नाट्ये क्रियमाणा नटादिषु ।
रसतां प्रतिपद्यन्ते सामाजिकमनस्सु ते ॥"

इत्यादिना च विभावादिसामग्र्य एव रसत्वमङ्गीकृतम् । अस्तिवादिभिरपि विभावादिजीवितावधिरित्यनेन तत्सामग्र्यमङ्गीकृतम् । अनभिनेयत्वं हृदि निधाय च 'अष्टौ नाट्यरसाः स्मृता' इति मुनिना नाट्यशब्देन रसा विशेषिताः । तन्मतानुसारेण —

"रत्युत्साहजुगुप्साः क्रोधो हासः स्मयो भयं शोकः ।
शममपि केचित् प्राहुः पुष्टिर्नाट्येषु नैतस्य ॥"

इति धनञ्जयेन सूत्रितम्[1] ।

"निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम् ।
वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः ॥"

इति स्थायिनियमनद्वारा रसा नियमिताः । धनिकेनापि धनञ्जयसूत्रविवरणे तथा समर्थितम् । इह शान्तरसं प्रति वादिनां बहुधा विप्रतिपत्तयः । केचिदाहुः — नास्त्येव शान्तो रसः, तस्याचार्येण विभावाद्यप्रतिपादनादिति । अन्ये तु वस्तुतस्तस्याभावं वर्णयन्ति । एवञ्च वदन्तः शममपि नेच्छन्ति । यथा तथास्तु । सर्वथा नाटकादावभिनेयात्मनि स्थायित्वमस्माभिः शमस्य नेष्यते, तस्य समस्तव्यापारप्रविलयरूपस्याभिनयायोगात् । यत्तु कैश्चिन्नागानन्दादौ शमस्य स्थायित्वमुपवर्णितं, तन्मलयवत्यनुरागेण प्रबन्धप्रवृत्तेनान्ते विद्याधरचक्रवर्तित्वावाप्तिरूपेण फलेन च विरु-

१. 'चि' ख. पाठः.

द्धम् । नह्येकानुकार्यविभावालम्बनौ विषयानुरागापरागावुपलभ्येते । अतो दयावीरोत्साहस्यैव तत्र स्थायित्वम् । अतोऽष्टावेव स्थायिन इति । अमुमेव सिद्धान्तमाश्रित्यात्र रसो निरूप्यते । तत्र विनयाध्यवसायसत्त्वामोहाविषादाद्युत्थापितोत्साहप्रभवो मतिधृतिप्रहर्षाद्युपबृंहितो दयावीर आदिमध्यान्तव्यापितया प्रतिपाद्यते ।

"दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥"

इति मुनिवचने सामान्यवाचिना धर्मशब्देन दयैव विवक्षिता, धर्मसारत्वात् तस्याः । सात्त्वती वृत्तिरपि सत्त्वत्यागदयारूपा यथापेक्षं सल्लापाद्यङ्गविशिष्टा तत्र तत्र प्रतिपादिता । तत्र—

"बुद्धिचित्ताहङ्कृतयस्तिस्त्रस्त्रिगुणसंश्रयाः ।
सर्वेषामपि जीवानां सर्वव्यापारहेतवः ॥
एतेभ्यः सर्वभावानां सर्वव्यापारहेतवः ।
एतेभ्यः सर्वभावानां प्रभवः कथ्यते बुधैः ॥"

इत्युक्तक्रमेण रजःक्षोभे युद्धवीरोत्साहस्य प्रसरः, सत्त्वोदये दानवीरस्य, तस्य मध्यावस्थायां विनयप्रधानदयावीरोत्साहस्य, परकाष्ठायां मैत्र्यादिरूपस्य शान्तस्येति विवेकः । यदि पुनरभिनवगुप्ताचार्येण काव्यालोकव्याख्याने शान्तश्चेत्यादिग्रन्थविवरणे 'ननु नास्त्येव शान्तो रसः । तस्य स्थाय्येव नोपदिष्टो मुनिना' इत्यारभ्य 'इयतैव विभावानुभावव्यभिचारिसद्भावः स्थायी च दर्शितः' इत्यन्तेन युक्तिपुरस्सरं मुनेरङ्गीकारं समर्थ्य शान्तस्यानन्दवर्धनाभिप्रायेणाभिनेयत्वं प्रकृष्टत्वादत्राङ्गित्वं च समर्थितं, तस्माच्छान्त एवाङ्गी रसः, अन्ये त्वङ्गभूता इति साध्यते, तर्हि किन्नश्छिन्नं, द्वयोरङ्गित्वं न घटत इति सर्वसम्मतम् । तच्छान्तो वास्तु वीरो वा । शृङ्गारस्तूत्तमप्रकृत्याश्रयस्तत्तद्देशकालादिविभावसमुचितव्यभिचारिभावस्तम्भरोमाञ्चाद्यनुभावोपबृंहितरतिस्थायिभावात्मकः अभिलाषविप्रलम्भसंभोगरूपः नर्माद्यङ्गपरिशोभितकैशिकीवृत्तिविशिष्टः सार्धाङ्कद्वयव्यापी तज्जन्यहास्यपरिशोभितो वीराङ्गत्वेन प्रकाशितः । तत्र दूरानुवृत्त्या उत्साहस्य विच्छिन्नवत्प्रतिभासेऽपि मन्त्रिप्रवृत्त्या नायकोत्साहस्येव न विच्छेदः, किन्तु

परिपोष एव । अङ्गस्यापि स्वरूपोपलब्धये दूरानुवृत्तिः, न त्वङ्गिनो निह्नवाय । अन्यथा स्वात्मन्यपरिपूर्णस्य कथमङ्गत्वम् । अङ्गस्य पौष्कल्येऽङ्गिनो भूयानुपकारः 'गुणः कृतात्मसंस्कार' इति न्यायेन । तत्राङ्गत्वं 'परार्थघटनावन्ध्यैर्वृथा किं धीयत' इत्यारब्धदयाध्यवसायनिर्वाहाय संबन्धिना सह समुद्रतटगमनेन नागास्थिदर्शनेन तद्वृत्तान्तश्रवणेन रक्तांशुकरूपवध्यचिह्नलाभेन सफलीभूतो मलयवत्याः पाणिग्रहणविधिरिति स्वयं साध्याङ्गतया श्लाघितेन पुनः प्राणापाये, 'तुवं पि अलिअवादिणी संवुत्ता' इति भक्ताया नायिकाया अधिक्षेपमसहमानया गौर्या 'वत्से ! कथमहमलीकवादिनी, दृश्यताम्' इत्युक्त्वा नायिकानुग्रहार्थं नायकस्य जीवितदानेन पुनश्चक्रवर्तित्वतदनुगुणरत्नादिदानेन च दयावीरानुसारेण स्वपरिपोषानुरूपं निर्व्यूढम् । शान्तवादिभिरपि

''सत्त्वोदये सुखं प्रीतिः शान्तिलज्जाङ्गलाघवम्''

इत्यादिना सत्त्वगुणकार्यत्वेन शमादीनामभिधानाद् गुणकार्यत्वमेव शमस्याङ्गीकार्यम् । तत्रान्तर्मुखतया निवृत्तिः बहिर्मुखतया प्रवृत्तिरित्यङ्गीकरणीयम् । दयोत्साहस्यापि विषयेष्वनास्था, धर्मादिषु निर्बन्धः । अन्यत्र विषयनिवृत्तिः, मैत्र्यादिनिर्बन्ध इति दयोत्साहशमयोर्नातीव भेदः । गुणातीतसंविदनन्तरूपत्वे तु शान्तस्य गुणमयभावाश्रयशृङ्गारादिरसपङ्क्तौ निवेशो न जाघटीति । अत एव तद्वादिभिरपि तस्य परकाष्ठा न व्यावर्णनीयेत्युक्तं 'न च तदीया पर्यन्तावस्था व्यावर्णनीया, येन सर्वचेष्टोपरमादनुभावाभावेनाप्रतीयमानता स्याद्' इत्यादिना । यत्तु रसास्वादस्य परब्रह्मानन्दसब्रह्मचारित्वं समर्थितं, तदनुभूतिप्रकर्षोद्घोषणायैव । तदलमतिप्रसङ्गेन । सर्वथा शृङ्गारस्य दूरानुवृत्तस्याप्यङ्गत्वं न यत्ननिष्पाद्यम् । रौद्रस्य प्रचुरारभटीवृत्तिकस्य गरुडवृत्तान्तविस्तृतस्य वीराङ्गत्वमतिस्फुटम् । यतस्तद्भयान्नागस्य दयनीयत्वम् । अत एव 'त्रातोऽयं शङ्खचूडः पतगपतिमुखादि'ति दयानिर्वहणे प्रस्तुतम् । तज्जन्यस्य करुणस्यापि वृद्धाद्याश्रयस्य 'त्राये नैन'मित्यादिना दयोत्साहपोषकत्वेनाङ्गत्वमतिस्फुटम् । बीभत्सभयानकयोस्तु जनकत्वेन जन्यत्वेन च श्मशानवर्णने प्रतिपादनं शङ्खचूडमतिभेदनायेति तयोरप्यङ्गत्वम् । अद्भुतस्तु दयावीर्यकारितया

रागस्यास्पदमित्यवैमि नहि मे ध्वंसीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ।
एवं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद् यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे॥६॥

देवीप्रादुर्भावामृतवर्षनागजीवनादिभिर्निर्वहणे निर्व्यूढ इति महाकविनास्मिन्नाटके सर्वे रसाः स्रक्सूत्रन्यायेनाङ्गाङ्गिभावेनोपनिबद्धाः। एवमत्रास्माभिर्यथामति रसविचारः कृतः। सन्धिसन्ध्यङ्गानां निरूपणं दुर्विज्ञेयतया न कृतम्।

"कुन्दमालात्र सुश्लिष्टसन्धिपञ्चकसंयुता।
तथाच वेणीसंहारः षट्त्रिंशद्भूषणोज्ज्वलः॥
देवीपरिणयः सर्ववृत्तिनिष्पन्न उच्यते।
प्रवेशकादिनिष्पत्तिर्नागानन्दे प्रदर्शिता॥"

इति भावप्रकाशे सन्ध्यादीनां भिन्नतया विषयप्रतिपादनाच्च।

अथामुखाक्षिप्तस्याङ्कस्यारम्भः। तत्र नाट्यशास्त्रोदितधीरोदात्तोचितमहासत्त्वतादिगुणविशिष्टः अवस्थान्तरपरिगृहीतबुद्धभावस्य मधुरिपोरंशभूतो विद्याधरकुलप्रदीपो जीमूतवाहनाभिधानो नायकः क्रमप्राप्तमपि राज्यभोगं वस्तुविचारेणानतिसम्मानयन् वनस्थयोरपि पित्रोर्वरिवसनमेव समुचितं मन्यमानस्तदन्तिक एव वर्तमानः कदाचित् पितृनियोगेन निवासोचितं स्थानमन्वेष्टुं मलयं प्रति नर्मसचिवेन सह प्रस्थितो दयादानाभ्यामेव जन्मसाफल्यमध्यवस्यन् वर्धमानकमनीययौवनस्तस्य दुस्तरत्वं विमृशन्नात्मन्यविश्वासमवलम्बमानस्तटस्थवृत्त्या यौवनं प्रति विचारयति— रागस्येत्यादिना। इदं यौवनं मे प्रीत्यै भवेत्। इदमिति अवयवोपचयादिना कालवत् कार्येणावगम्यमानमात्मीयं सामान्यं चाभेदेन निर्दिशति। यौवनं युवत्वम्। कालकृता शरीरावस्था हि वयः। तत्र विवर्धनविपरिणामनिमित्तमध्यमावस्थारूपं यौवनम्। मे परोपकारैकफलं शरीरं मन्य-

१. 'मीप्सितफलप्राप्त्यै भवेद्' इति मुद्रितकोशपाठः. २. 'सस्था' ग. पाठः.

मानस्य, न तु भोगप्रवणस्य। प्रीत्यै प्रथमं निमित्तान्तरप्रवृत्तायाः सत्त्वोन्मेषरूपायाश्चित्तवृत्तेरानुकूल्येनावैकल्याय। आनुकूल्यमपि क्लेशसहिष्णुत्वादिना प्रकृतोपकारकत्वेन घटते। भवेदिति विकल्परूपयद्यर्थानुप्राणितसंभावनागर्भोक्तिः, न भविष्यतीत्यनिश्चयात्। किं यौवनदोषाणामज्ञानात् प्रीतिहेतुत्वं समर्थ्यत इति चेन्नेत्याह — रागस्यास्पदमित्यवैमि। वासनानुबन्धेनेन्द्रियार्थेषु प्रवृत्ताया इदं मे स्यादित्येवंरूपाया इच्छायाः सहकारिसामग्र्यादिना प्रचितायाः प्रवृत्त्युन्मुखाया विवेकोपदेशादिभिरनिवार्यः परिपोषो रागः। तस्यास्पदं स्वैरासिकास्थानम्। क्रोधादीनामप्युपलक्षणमिदम्। सङ्गरूपस्य तस्य क्रोधाद्युत्थानहेतुत्वस्य पूर्वैरुक्तत्वात्। यद्यपि यौवनं शरीरावस्थारूपं, रागादयश्चित्तधर्माः, तथापि यौवने चित्तस्य रागानुबन्धनैयत्यं द्योतयितुं यौवनस्य रागास्पदत्वमारोपितम्। यदि यौवनं, तर्हि रागः। तत् किमस्यान्याश्रयत्वकथनेन। इदमेवास्पदमिति प्रौढोक्तिः। इत्यवैमि एवम्प्रकारं दोषं हेयताहेतुत्वेन जानामि। न खलु गुरूपदेशादिना विना विद्युदुन्मेषादिवद् यदृच्छोदिता सा मनोवृत्तिः, अपितु निरन्तरमनुवर्तत एवेति वर्तमाननिर्देशः। तर्हि 'एको हि दोषो गुणसन्निपाते निमज्जती'ति युक्त्या गुणान्तरपरिग्रहेण किमस्य प्रीतिहेतुत्वं साध्यत इति चेत्, तन्नेत्याह — ध्वंसीति न मे प्रत्ययो न। अकालपुष्पोद्गमवदापातरमणीयमप्यवश्यमनर्थहेतुकमचिरनश्वरं चेति प्रत्ययो विश्वासः। विषयरसमत्तानां मदिरामत्तानामिवास्य नश्वरत्वं न सम्भावनाभूमिमभ्येति। तथा न मम, क्षणनश्वरमित्येव निश्चयः। 'यथा प्रतिषेधद्वयानुमितस्य प्रकृतस्यैवार्थस्य विधेश्चारुतावगतिः, न तथा स्वशब्दस्य वाच्यस्य' इति व्यक्तिविवेककारोक्तदिशा प्रत्ययस्थैर्याय तथोक्तिः। सम्भाव्यनिषेधनिवर्तने हि द्वौ प्रतिषेधौ। एतद् विवेकिजनवेद्यम्। सर्वजनवेद्यं दोषान्तरमाह —कृत्याकृत्यविचारणासु विमुखम्। धर्मादिशेषतया कर्तव्यत्वेन विहितानां विपर्ययेण निषिद्धानां च कर्मणां विचारणानुग्राह्यतया त्याज्यतया च विविच्य विमर्शनेषु विमुखं विपरीतम्। एतदधीनत्वेन चेतसस्तद्वैमुख्यमत्रारोपितं पूर्ववत्। को वा न वेत्ति क्षितौ। स्वच्छन्दाचरितेषु तस्य यौवनविलसितमेतादिति पामरैरपि कुत्स्यमानत्वाद् न विद

ग्धवेद्योऽयमर्थः । अत्राहं वेद्मीति किमुच्यत इति भावः । अत्र विचारवैमुख्यसम्पादनेन विहिताकरणे निषिद्धाचरणे च निरर्गलप्रसरहेतुत्वादनेकदोषोत्थापकत्वेनायं प्रधानदोष इत्येतत्कथनेनैव 'दोससअदुक्खबोळे एव्वं' इत्यादिना महद्भिरुद्घोषितानां दोषान्तराणामप्यङ्गीकरणं सिद्धम् । अत एवैवमित्युपसंहारः । ननु अत्र महाकविना किमेवमुदीर्यते । यौवनदोषोऽत्र समर्थनीयः । तत्र रागास्पदतया ध्वंसितया विचारविमुखतया च निन्द्यमपीति वक्तुं युक्तम् । रागास्पदं नश्वरं विचारविमुखं जानामीति वा । एवं लाघवेन वक्तव्ये वाक्यभेदेन गौरवमापाद्यानवीकृतत्वपरिहारायावैमीति, प्रत्ययो विद्यत इति, वेत्तीति शब्दभेदेन एकमेवार्थं वाक्यभेदेनाभिधाय पुनरेवमिति निन्द्यतासमापादने किं प्रयोजनम् । निन्द्यताहेतुकस्य इन्द्रियवशत्वस्य तद्धेतूपसंहारानन्तरं पुनरुपादाने च किं फलम् । अत्रोच्यते—इह

"पुंसि पुंसि विशेषेण कापि कापि सरस्वती"

इति सर्वसम्मतम् । तदस्मदादीनां मनोवृत्तिवद् वाक्यवृत्तेरपि भेदे कोऽत्र पर्यनुयोगावसरः । नात्र महाकविवचने दोषो निरूप्यते । एवमुक्तिप्रकारे तात्पर्यं विचार्यते । अत एव किं प्रयोजनमित्युक्तमिति चेत्, तर्हि श्रूयताम् । वक्तृस्वभावानुसरणं सर्वत्र युक्तम् । तत उदात्ताभिमतस्य नायकस्य विमर्शक्रमानुसारेण एवमुक्तिः । तत्र यौवनदोषेषु मूर्धाभिषिक्तो रागः प्रथमं स्वहृदयसंवादेन निरूपितः । तत्रैव हेयताहेतुताया विश्रान्तिः । पुनरन्यो निरूपितः, पुनरन्यः । एतस्यैव हेयताहेतुत्वं प्राधान्यं च वाक्यभेद एव घटते । अन्यथा प्रवाहरूपेण बहूनां कथने तस्य तस्य प्राधान्यं झटिति न प्रतीयते वाक्यविदां नयेन यावदपेक्षं विधेयत्वेऽपि । अयं दोषः पुनरयं दोष इति पुङ्खानुपुङ्खवृत्त्या सहस्रमुखेषु दोषेषु सिद्धेष्वपि सर्वानुलङ्घ्य गुरुशुश्रूषणशेषत्वस्य गुणस्य पाक्षिकेऽपि लाभे प्रीतिहेतुत्वं समर्थ्यते । तदानुगुण्येनैवमुक्तिः । इन्द्रियवशत्वस्य तु चित्ते रागं समर्प्य विषयोन्मुखतानयनेन दोषत्वं परिस्फुटम् । कदाचिद् मन्दोच्चारणश्रवणादिसामर्थ्येन गिरिवनचङ्क्रमणादिशक्तिसंपादनेन च प्रकृतं प्रति गुणत्वमप्यस्तीति पूर्वेभ्यो व्यतिरेकेण पश्चादुक्तिरिति सर्वं समञ्जसम् । निन्द्य-

विदूषकः—(सरोषम्) (क) भो वअस्स! ण णिव्विण्णो एव्व तुवं एत्तिअं काळं एदाणं जीवन्तमुदाणं वुड्ढाणं किदे ईदिसं वणवासदुक्खं अणुहवन्तो। ता पसीद। दाणिं पि

(क) भो वयस्य! न निर्विण्ण एव त्वमेतावन्तं कालमेतयोर्जीवन्मृतयोर्वृद्धयोः कृत ईदृशं वनवासदुःखमनुभवन्। तत् प्रसीद। इदानीमपि तावद्

मपि विचारपरविगर्हणीयमपि। निन्द्यतया अप्रीतिहेतुकमपीत्यर्थः। प्रीत्यप्रीत्योः साक्षाद् विरोधात्। साक्षाद् विरोधे कथं प्रीतिहेतुत्वं सम्भाव्यते। अत्राह— भक्त्या पितरौ शुश्रूषमाणस्य इत्थमेव याति यदि। गुरुदेवद्विजादिपूजनेषु इदमेव श्रेयस्करमिति बहुमानपूर्विका आर्द्रा मनोवृत्तिर्भक्तिः, तया, न तु तन्निर्बन्धादिनान्येन हेतुना। अनेनाभिसन्धिखलीकाराविषयत्वेन शुश्रूषणस्य सौभाग्यं गम्यते। पितरौ मानने रक्षणे च स्वयमधिकृतौ अस्मदुत्पत्तिहेतुभूतौ। भेदेऽप्येकार्थतया एकतामिवापन्नौ अपृथग्यत्नसेव्यौ निखिलनिःश्रेयससंपादकौ च। न तु कल्पितगुरू। शुश्रूषमाणस्य परिचरतः दिवानिशमेतदेकपरस्य, न तु साध्यान्तरेऽपि प्रवृत्तस्य। शुश्रूषाशब्दः शुश्रूषाहेतुके सेवने रूढः। इत्थमेव अनेनैव प्रकारेण, प्रकृतशुश्रूषणानुकूल्येनैवेत्यर्थः। तच्छैथिल्यहेतुं निवारकं च प्रकारमेवकारो व्यावर्तयति। याति व्याक्षिप्तचित्तस्य मार्गदैर्घ्यमिव एतदतिवाहनेऽस्मत्प्रयासं विना स्वयं प्रकृतानुकूल्येनातिगच्छति। यदि, नायमर्थोऽस्माभिरवधारयितुं शक्यः, स्वयमेव चित्तस्य चलत्वादस्य दौश्शील्याच्चेत्यर्थः। आत्मधैर्यं प्रत्यविश्वासगर्भेयमुक्तिः। इह यद्यर्थस्य रसान्तरं प्रति मार्गपरिशोधकत्वं कविना सूत्रितम्। पितृशुश्रूषणानिर्बन्धेन विनयाध्यवसायहेतुकोत्साहभूर्वीररसश्च प्राधान्येन ध्वन्यते।

एवमुदात्तनायकस्य गुरुशुश्रूषानिर्बन्धपिशुनं वचनमाकर्ण्य तदसहमानः सुखार्थी नर्मसचिवस्तं व्यावर्तयितुं सामभेदगर्भमाह। शृङ्गारविषयकैशिकीवृत्त्यङ्गं हि नर्म, तत्सहकारी साचिवो नर्मसाचिवः। तस्य स्वाधिकारसिद्धये प्रशान्तमेनं शृङ्गारवीथ्यां व्यावर्तयितुमुद्यतस्य तदानुगुण्येनो-

दाव गुरुजणसुस्सूसानिब्बन्धादो निव्वत्तिअ इच्छापरिभोअ-रमणिज्जं रज्जसोक्खं अणुभवीअदु ।

---

गुरुजनशुश्रूषानिर्बन्धान्निवृत्त्येच्छापरिभोगरमणीयं राज्यसौख्यमनुभूयताम् ।

---

क्तिः—भो वयस्य! न निर्विण्ण एव त्वम् इयन्तं कालमेतयोर्जीवन्मृतयोर्वृद्धयोः कृते ईदृशं वनवासदुःखमनुभवन् । भो इति मदुक्तिं प्रत्यभिमुखेन भवितव्यमिति भावः । वयस्येति । अपृष्टोऽपि वात्सल्येन कल्याणं वच्मीत्यभिप्रायः । न निर्विण्ण एव निर्वेद एव नाङ्कुरितः । कथं पुनस्तत्कार्यं व्यावर्तनमित्येवकारेण द्योतितम् । त्वम् अतिविशेषज्ञः स्वयमेव कर्तव्याकर्तव्यविवेकनिपुण इत्यर्थः । इयन्तं कालमिति कालस्य दैर्घ्येणापरिगण्यत्वं ध्वनितम् । न तु कानिचिदहानि । तेन निर्वेदस्य योग्यता व्यज्यते । एतयोरिति । सदा तन्निकटवर्तित्वेनोद्वेगः । जीवन्मृतयोरिति । जीवतोरेव मृतयोः निश्चेष्टयोः जीवनमप्यस्मद्दण्डनायैवेति भावः । वृद्धयोः प्रत्युपकाराद्यसमर्थयोः । कृते शुश्रूषणादिरूपं कार्यं निमित्तीकृत्य न तु कार्यान्तरेणापि । ईदृशम् एवमिति वक्तुमशक्यम् अनुभवगम्यं वनवासदुःखं वासशब्देन नैरन्तर्यं दुःखशब्देन सुखामिश्रत्वं च द्योत्यते । अनुभवन्निति दिवानिशमविश्रान्तिः । हेतौ शता । निर्वेदहेतौ सत्यपीत्यर्थः । तत् प्रसीद । इदानीमपि तावद् गुरुजनशुश्रूषानिर्बन्धान्निवृत्त्य इच्छापरिभोगरमणीयं राज्यसौख्यम् अनुभूयताम् । तत् प्रसीद तस्मान्निर्वेदापरिग्रहात् प्रसादः प्रार्थ्यते । विषयोपभोगं प्रतीति शेषः । अस्मिन् प्रसादे जातेऽन्यत्र निर्वेदो भविष्यतीति भावः । इदानीमपि तावदियन्तं कालमरण्यरुदितायमानः अपुरुषार्थशेषः परिक्लेशस्तिष्ठतु । इतःप्रभृति हितार्थिनो वचनं प्रमाणीकृत्य राज्यसौख्यं सिंहासनाधिरोहणादिकृतम् । राज्यशब्देन सुखस्य निस्सामान्यता व्यज्यते । तदेव विवृणोति—इच्छापरिभोगरमणीयमिति । इच्छाशब्देन तद्विषया लक्ष्यन्ते । भोग्यसाकल्यप्रतीतिश्च फलम् । इच्छाविषयाणां सर्वेषां परितो भोगेन रमणीयं हृद्यतमं राज्यसौख्यम् अनुभूयतामित्यनेन रक्षादीनां सम्पादितत्वात् सुखानुभव एव

नायकः — सखे! न सम्यगभिहितम्। कुतः,

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
किं[1] संवाहयतः सुखानि चरणौ तातस्य किं राजकम्।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तेनास्ति कश्चिद् गुणः॥ ७॥

---

परिशिष्यते। तत् परमसाध्यं किमुपेक्ष्यते। किं वा तत्र विलम्ब्यते अन्यत् सर्वं परित्यज्य तत्रैव प्रयतस्वेति भावः। निर्बन्धान्निवृत्त्येति। निर्बन्ध एव दोषः, येनान्यत्राप्रवृत्तिः। कादाचित्कत्वे तथा न दोषः। निवृत्य मनो देहं च व्यावर्त्येत्यर्थः।

इति तस्य स्वसाध्यानुगुणं वचनं निशम्य सत्त्वाधिकतया कोपमनवलम्ब्य तं युक्तमनुशास्ति — सखे! न सम्यगभिहितम्। अस्मत्साक्षित्वस्य नायं युक्तो मार्ग इति भावः। न सम्यग् ग्राह्यत्याज्ययोर्विपर्ययेणाभिधानाद् न समीचीनम्। कुत इति। कस्मादेवमुच्यत इति चेत्। न प्रतिज्ञामात्रेण, युक्त्या साध्यत इत्यर्थः। युक्तिमाह — तिष्ठन्निति। सर्वेषामधिपतीनां समुचितोऽयं प्रकारः। न ममैकस्य इति बोधयितुं सामान्येन समर्थयति। तिष्ठन् उपविशन्, आज्ञां प्रतीक्ष्येति शेषः। भाति विनयादिना महतां दर्शनीयो भवति। पितुरिति। एतदिच्छानुसरणमेवास्य जन्मफलम् इति द्योतयति। पुर इति। झटिति नियोगकरणानुगुण्येनाग्रतः भुवि केवले स्थले। सिंहासनप्रतियोगितया[2] भुवीति निर्देशः। अन्यथा पुर इत्येवालम्। यथा येन प्रकारेण सिंहासने राजोचिते नियोक्तृतामवलम्बमानः तिष्ठन् भातीत्यनुषङ्गः। तथा तेनैव प्रकारेण किमिति विपर्यस्तचित्तं व्यावर्तयितुं किमाक्षेपगर्भं निषिध्यते। नञा निषेधमात्रं प्रतीयते। प्रकारसाम्ये त्वदुक्तमङ्गीक्रियते, विनयधर्मादिबन्धुरे भानस्यातिशये कथमेवमङ्गीक्रियतामिति भावः। एवं तत्र तत्र शुश्रूषणस्याधिक्यमित्याह — तातस्य चरणौ संवाहयतः किं सुखानि किं राजकम्। अत्र संवाहयतः

---

१. 'यत् संवाहयतः सुखं हि चरणौ तातस्य किं राजके' मुद्रितकोशपाठः. २. 'गिनि' ख. पाठः.

सुखानीत्यनुषङ्गः । तातस्येति । गौरवेण तत्र शब्दान्तरेण पितुरेव निर्देशः । अन्यथा तस्येत्यादिनापि सम्बन्धः सिध्यति । चरणौ उभयलोकसिद्धिमार्गाविव समं निजाङ्कमारोपितौ वार्धकेन वातोपद्रुतौ पादपद्मौ संवाहयतः वरोरुजानुजङ्घाप्रपदतलाङ्गुलीषु सदयं करौ विन्यस्य मन्दं मन्दं तदिच्छानुसारेण निरन्तरमुपमर्दनं कुर्वतः । वहेरन्यो वाहिः णिजन्तः । सुखानि मङ्गलाङ्गसंस्पर्शदर्शनमधुरोपदेशश्रवणदयादृष्टिपातादिभिः समकालमहमहमिकया प्रादुर्भवन्ति । कारणद्वारकं सुखस्य बहुत्वम् । राजकं राजसमूहम् । गोत्रादिना समूहार्थे वुञ् । स्वयं सम्राट्पदस्थस्य संवाहयतः, सम्यगप्रतिहतं वाहयतः निजाज्ञामिति शेषः । अत्र वहेर्द्विकर्मकस्य ण्यन्ततया निर्देशः । चरणौ राज्ञां शिरसि विन्यस्य भारवद्वहनं कारयत इत्यर्थः । उभयत्र प्रयुक्तेन विकल्पार्थेन काकुगर्भेण किमा प्रकरणेन च गुरुचरणसंवाहनस्य सुखाधिक्यं प्रतीयते । सुखानीत्यनेन सर्वेषां सुखार्थं हि प्रवृत्तिः इति मुख्यं फलं निर्दिशति । भातीत्यत्रापि भानेन तत्कारणं सुखमेव प्रतिपाद्यते । सुखाभावे कथं भानमुपपद्यते । उपरि च धृतिशब्देन तदेवोच्यते । यद्यपि रजस्समाश्रयेण तत्रापि क्षणिकसुखोदयः, तथापि अनश्वरबहुप्रकारसुखसम्पादकं परित्यज्य कथमल्पसुखमनुन्मत्तः समाश्रयेद् इति बहुवचनाभिप्रायः । गुरोर्भुक्तोज्झिते या, असौ धृतिः भुवनत्रये भुक्ते किमित्यन्वयः । अनूद्यमानस्य यद्वृत्तवाक्यस्यान्यत्र विश्रान्तेः । भुक्ते तत्तद्भोग्यसाकल्यस्वीकारेणानुभूते पालिते च वशीकरणस्य सिद्धत्वेन सुखहेतुत्वं प्रतिपादयितुं भूतप्रयोगः, न तु भुज्यमान इति । भुवनत्रये, न तु भूमण्डले राज्यमात्रे वा । भुवनत्रय इत्येकवचनेन गृहाङ्गणवत् स्वाधीनत्वं द्योत्यते । धृतिः सुखम् । असौ एतत्सब्रह्मचारिणी । तस्यान्यत्रासम्भवात् । भुक्तोज्झिते भुक्ते भोजने उज्झिते अर्धभुक्तपरित्यक्ते वा, भुक्तोच्छिष्ट इत्यर्थः । भुक्त इत्यनुषङ्गः । भुक्ते अभ्यवहृते । गुरोरिति पितुरेव निर्देशः । किमतः परं श्रेयस्करमिति भावः । अत्रापि धृतेराधिक्यं वाक्यवृत्त्या प्रकाश्यते । अत्र तिष्ठन्नित्यादिक्रियाणामुभयत्रैक्येऽपि फलं प्रत्यतीव विशेष इति प्रकाशितं सुखाधिक्यमेव शुश्रूषणस्य भवता साध्यते नान्यस्य निस्सु-

१. 'ते भो' ख. ग. पाठः.

विदूषकः—(आत्मगतम्) (क) अहो[1] से गुरुजणसुस्सूसाणुराओ। (विचिन्त्य) भोदु[2], एव्वं दाव भणिस्सं। (प्रकाशम्) भो वअस्स! ण खु अहं केवळं रज्जसोक्खं उद्दिसिअ एव्वं भणामि। अण्णं पि दे करणिज्जं अत्थि एव्व।

---

(क) अहो अस्य गुरुजनशुश्रूषानुरागः। भवतु, एवं तावद् भणिष्यामि। भो वयस्य! न खल्वहं केवलं राज्यसौख्यमुद्दिश्यैवं भणामि। अन्यदपि ते करणीयमस्त्येव।

---

खत्वम्। अतस्तत्परिग्रहेऽपि केचन गुणाः सन्ति इति चेत् तत्राह—आयासः खलु राज्यम्। त्वदनुसारायैव मया सुखतारतम्यं निरूपितम्। वस्तुत आयासः श्रमः। तेन आयासकरत्वं लक्ष्यते। नियतहेतुत्वं फलम्। अत एव दुःखरूपमिति च सिद्धम्। दूरे सुखतारतम्यम् इत्यभिप्रायः। एवं राज्यस्य तुच्छत्वं प्रतिपाद्य तत्साध्यं साक्षात् प्रतिक्षिपति—उज्झितगुरोः परित्यक्तगुरुशुश्रूषणस्य। शुश्रूषानिर्बन्धान्निवृत्त्येति तदुक्त्यनुवादः। तेन उक्तप्रकारेण दुःखरूपेण राज्येन। अस्तीति। गुरुनिरसनमसहमानस्य नायकस्य राज्यस्य निर्गुणत्वे साध्ये तदनुगुणमसृणसाकाङ्क्षकाकुविशिष्टेन गम्भीराक्षेपेण निरसनातिशयः प्रकाश्यते। नैवेत्यर्थः। कश्चित्। आसतां बहवः। यद्येकोऽपि दोषमध्ये गुणश्चकास्ति, तर्हि तत्सौख्यानुभवो युक्तः। अन्यथा गुणबहुलस्य गुरुशुश्रूषणस्य परित्यागः, निर्गुणस्य परिग्रहः इति कोऽयं नयः। अतो न सम्यगभिहितमिति मयोक्तम्।

एवं परमसात्त्विकस्य राजसेषु भोगेष्वप्रविष्टस्य स्वाभिप्रायविरुद्धं वचनमाकर्ण्य स स्वयं निरूपयति—अहो अस्य गुरुशुश्रूषानुरागः। अहो इति नैवं निरूपितम्। अनुरागो निर्बन्धः। नासौ राज्यसुखप्रकाशनेन तस्माद् व्यावर्तयितुं शक्य इत्यर्थः। पुनः प्रकारान्तरेणापि प्रयतिष्य

---

१. 'हो अस्स गुरुचअण', २. 'दु, ता एदं पि दा' मुद्रितकोशपाठः.

**नायकः**—वयस्य! ननु कृतमेव करणीयम् । पश्य,

न्याय्ये वर्त्मनि योजिताः प्रकृतयः सन्तः सुखं स्थापिता
नीतो बन्धुजनस्तथात्मसमतां राज्येऽपि रक्षा कृता ।
दत्तो दत्तमनोरथाधिककफलः कल्पद्रुमोऽप्यर्थिने
किं कर्तव्यमतःपरं कथय वा यत् ते स्थितं चेतसि ॥ ८ ॥

---

इति निरूप्य प्रकाशमाह—न खल्वहं केवलं राज्यसौख्यमुद्दिश्य भणामि । अन्यदपि ते करणीयमस्त्येव । केवलमिति ।

"सुखं हि फलमर्थस्य तन्निरोधे वृथा श्रियः ।"

इत्युक्त्या श्रीपतीनां राज्यसुखमप्यादेयमेव इति लोकवृत्तिमनुसृत्य कर्तव्यान्तरमन्तर्निधाय मयोक्तम् । तत् त्वया न निरूपितम् । केवलं श्रुतमेव प्रतिक्षिप्तम् । तत् तदपि कथयामीत्यभिप्रायः । अन्यदपि, प्रकृताच्छुश्रूषणादिति शेषः । करणीयम् अवश्यकर्तव्यम् । आवश्यके कृत्यः । तेनाकरणे प्रत्यवायो व्यज्यते । अस्त्येव, नैतत् पूर्ववत् प्रतिक्षेप्यमित्येवकारेण द्योतितम् । अन्यदिति निर्देशेन तत्स्वरूपं सापेक्षश्चेत् कथयामीति सूचितम् ।

इति तद्वचः श्रुत्वा कृत्यपरतया शङ्कमान आह—**वयस्येति** । त्वत्समक्षमेव सर्वं मयानुष्ठितं, तत् किमेवं वदसीत्याशङ्कया प्रश्नः । नन्विति । कृतमेव, न किञ्चिदपि कर्तव्यतया स्फुरति इति स्वप्रतीत्यनुसारेणावधारणं, तदुक्त्यनुसारेण नन्विति प्रश्नः । अवधारणं समर्थयति—पश्य अवधेहि । कृतानि प्रत्येकं परिगणयामीत्यर्थः । तत्र 'प्रकृतिसंपदा ह्यनायकमपि राज्यं नीयते' इति गौरवेण प्रथमं प्रकृतिविषयां प्रवृत्तिमाह—न्याय्य इति । न्यायादनपेते तस्य तस्य स्वाधिकारसदृशे वर्त्मनि आचारे । वर्त्मशब्देन आचारो लक्ष्यते । अलङ्घनीयता च फलम् । सतां मार्ग इत्यादिवत् । योजिताः स्वयमेव प्रस्थिताः अपुनर्निवृत्तिसुभगं स्थिरीकृताः । प्रकृतयः अमात्याद्याः । पुनः,

---

१. 'कः—(सस्मितम्) व' क. पाठः. २. 'व यत् क' मुद्रितकोशपाठः.

"यासु सन्तो न तिष्ठन्ति ता वृथैव विभूतयः"

इति सत्संग्रहस्य मुख्यत्वात् तद्विषयां प्रवृत्तिमाह—सन्तः विद्वांसः। वेश्मादिप्रदानेनान्यत्र गमनाभिरुचिर्यथा न भवेत्, तथा सुखं स्थितिं प्रापिताः। पुनः 'कृताधिपत्यामिव साधु बन्धुताम्' इत्यादिश्रवणाद् बन्धुसंग्रहणस्य मुख्यतया तदपि कृतमित्याह—नीतो बन्धुजनस्तथात्मसमताम्। तथा तेन प्रकारेण कृत्येषु सर्वेषु तत्परता एकप्रकारैव, न कुत्राप्यालस्यमित्यर्थः। बन्धुजनः मातृपितृगोत्रसंबन्धी। आत्मसमतां वसनाशनादिकल्पनैः आत्मनिर्विशेषतां नीतः तत्र देशकालाद्यनतिलङ्घनेन प्रापितः। तर्हि राज्यस्य रक्षणं कर्तव्यमिति चेत्, तदपि कृतमेवेत्याह—राज्येऽपि रक्षा कृता। सप्ताङ्गं राज्यम्। तत्र स्वस्य प्रयोजकत्वकथनेन स्वामिसंपदुक्ता। प्रकृतय इत्यनेनामात्यसंपत्। बन्धुजनशब्देन सुहृदोऽपि स्वीकृताः। अतो राष्ट्रस्य साक्षान्निर्देशः। मण्डले रक्षा कृतेत्युक्त्या दुर्गसैन्यादिविनिवेशनस्य रक्षासाधनत्वेन दुर्गसैन्ययोरपि कार्यमुक्तम्। कोशस्य कार्यद्वारा गौरवं वक्ष्यते। तेन सप्ताङ्गेष्ववैकल्यमुक्तम्।

"एकाङ्गेनापि विकलमेतत् साधु न वर्तते"

इत्युक्तत्वात्। कृतेति। सदा कर्तव्यस्य रक्षणस्य भूतनिर्देशायोग्यत्वात् तत्कारिसंपादनद्वारा भूतत्वम्। अत एवोपर्यनुवादः 'पहाणामच्चसमहिट्ठिदमि'ति। तर्हि अर्थिजनमनोरथपूरणं कर्तव्यम् इति चेत्, तदपि कृतमेवेत्याह— दत्त इति। सर्वसाधारण्येनेति शेषः। दत्तमनोरथाधिकफलः येन यद् यावत् प्रार्थ्यते, तत् तस्मै ततोऽधिकं दातुमुद्युक्त इति दानस्य लोकोत्तरतया कृतार्थता द्योत्यते। अपिशब्देन पूर्वमेव धनान्तरदानं ध्वनितम्। अत्र,

"तं सर्वगुणसंपन्नमभिषिच्यात्मजं पिता।
कल्पवृक्षं ददावस्मै नानासिद्धिसुधाफलम्॥

कान्ताकटाक्षविक्षेपचपलं यौवनं धनम्।
जीवितं चेति स ध्यात्वा तमर्थिभ्यस्तरुं ददौ॥

विदूषकः—(क) भो वअस्स! अच्चन्तसाहसिओ मदङ्गदेवहदओ दे पडिवक्खो। तस्सिं च समासण्णट्ठिदे पहाणामच्चसमहिट्ठिदं पि ण तुए विणा रज्जं सुत्थिदं ति मे पडिभादि।

---

(क) भो वयस्य! अत्यन्तसाहसिको मतङ्गदेवहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थितमिति मे प्रतिभाति।

---

कुलक्रमागते तस्मिन् कल्पवृक्षे व्ययीकृते।
अपूर्वत्यागिना तेन त्रिलोकी विस्मयं ययौ ॥"

इति क्षेमराजकथानुसंहिता। अर्थिने, जनायेति शेषः। एवं कृतानि विविच्य कर्तव्यान्तरं क्षिपति— किं कर्तव्यमतःपरम्। क्षेपे किंशब्दः। कृतेषु पृथक् पृथक् परिगणितेषु न कर्तव्यान्तरं स्फुरति। तेन एभ्योऽन्यत् किं कर्तव्यं, न किमपि इति स्वप्रतीत्या अवधारणमुपपाद्य तत्प्रतीत्यनुसारेण विकल्पयति। कथय वा। सर्वथा न क्षेपः। त्वद्बुद्धौ किमपि स्फुरति यदि, कथय 'सर्वः सर्वं न जानाती'ति नीत्या अस्मदज्ञातं यदि त्वया ज्ञायते, तत्तदप्यनुष्ठास्याम इति भावः। यत् ते स्थितं चेतसि। अवश्यं किञ्चिदस्तीति निश्चयः। अन्यथा करणीयमस्त्येवेत्यवधारणानुपपत्तिः।

इति श्रुत्वा स स्वसाध्यानुगुणमाह— अत्यन्तसाहसिको मतङ्गदेवहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थितम् इति मे प्रतिभाति। मया निरूपितमेभ्योऽन्यत् कर्तव्यान्तरं कथयामि, यत् त्वत्सन्निधाने साध्यम्। अत्यन्तसाहसिकः तदग्रगण्यः पर्यालोचनं दीर्घसूत्रतां मन्यमानः स्फुरणानन्तरमेव कर्माध्यवसायी साहसिकः। मतङ्गदेवहतकः कुत्सितं नामैवास्य द्वेषावहम्। स ते प्रतिपक्षः विश्वजनीनचरितस्य तव स एक एव प्रतिपक्षशब्दवाच्यः। तस्मिंश्च समासन्नस्थिते। साहसिकत्वं समासन्न...

**नायकः**— किं मतङ्गो राज्यं ग्रहीष्यतीत्याशङ्कसे । यद्येवं, ततः किम्[1] । स्वशरीरतः प्रभृति परार्थमेव सर्वं मया परिपाल्यते । यत् तु स्वयं न दीयते, तत् तातानुरोधात् । तत् किमनेनावस्तुना[2] चिन्तितेन । वरं तातज्ञैवानुष्ठिता । आज्ञापितोऽस्मि तातेन । यथा—वत्स! जीमूतवाहन! बहुदिवसपरिभोगेन[3] दूरीकृतं समित्कुशकुसुमम् । उपयुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्तते । तन्मलय-[4]

तिश्च दौःस्थ्यहेतुः । प्रधानामात्यसमधिष्ठितत्वेन साक्षादाक्रमणं नास्तीत्येव जनपदक्षोभो निवार्यः । अतः स्वामिना त्वया सततसन्निहितेन भवितव्यम् । एतदपेक्ष्य मयावश्यकर्तव्यमस्तीत्युक्तम् ।

तच्छ्रुत्वा राज्यनिःस्पृह आह— किं मतङ्गो राज्यं ग्रहीष्यतीत्याशङ्कसे । दुःस्थमिति वदतस्तव ग्रहीष्यतीति मनोवृत्तिः । ततः किम् इति । किमनिष्टमायातं, न किमपीत्यर्थः । कथमिति चेत् स्वशरीरतः प्रभृति । स्वशब्देन देहे तावदहम्बुद्धिर्नास्तीति मनोवृत्तिः । शरीरशब्देन विशीर्यमाणे पिण्डे ममतापरिकल्पनमपि गुणान्तरनिरूपणेन, न भोगसाधनतया इति प्रकाशितम् । प्रभृतीत्यनेनान्यत् सर्वं कबलीकृतम् । परार्थमेव परप्रयोजनायैव, न किञ्चिदपि स्वप्रयोजनं पश्यामीति सर्वस्य दयादानशेषत्वमध्यवस्यति । ततश्चोत्साहस्थायिभावानुबन्धः । सर्वं राज्यादि । मयेति । अन्येषां देहराज्याद्यपेक्षया सकलसंपादनं, न ममैवं स्वभावः । स्वभावे कः पर्यनुयोगावसर इति भावः । परिपाल्यते, अभ्यवहारभरणादिभिरिति शेषः । तर्हि परेणापहृतस्यानुमोदनात् स्वयं दानं वरम् इति चेत् तत्राह— यत्तु स्वयं न दीयत इति । स्वयं दानं

१. 'किं स्यात् । ननु स्व' मुद्रितकोशपाठः. २. 'नाचि' ख. पाठः. ३. 'गदूरीकृतसमित्कुशकुसुममुपभुक्तफलमूलकन्दनीवार', ४. 'तदितो मलयपर्वतं गत्वा किञ्चित् तस्मिन् निवा' मुद्रितकोशपाठः.

मह्यं न रोचते, तद् अकरणं तातानुरोधात् । कुलक्रमागतस्य राज्यस्यास्मत्कर्तृकं पालनं तातस्याभिमतम् । तदनुवृत्तिरेव स्वयं दानाभावे हेतुः, न लोभशाबल्यमित्यर्थः । तदनुरोधोऽपि स्वाभिप्रायविरुद्धश्चेत् किमाद्रियत इति चेत् तत्राह— वरं ताताज्ञैवानुष्ठिता । राज्यं त्वया रक्ष्यतामित्येवंरूपा ताताज्ञा विद्याधरचक्रवर्तिनस्तस्य केनाप्यलङ्घितपूर्वा अनुष्ठिता, आत्मना मन्त्र्यादिभिश्च यथोक्तं निर्व्यूढा । एवकारेण स्वयं दानादस्य गौरवातिशयः । वरमिति । तदाज्ञयापि राज्यभरे नातीव रुचिः । ताताज्ञाविषयत्वेन किञ्चित् प्रियत्वमस्ति स्वयं दाने न तथा, ताताज्ञाविरुद्धत्वात् । वरमित्यव्ययम् । 'वरं क्लीबे मनाक्प्रिय' इति, 'याच्ञा मोघा वर'मित्यादिवत् । दानरसिकतया स्वयं दाने ताताज्ञा लङ्घिता । तस्य स्वयंग्रहणे न तथेत्यभिप्रायः । परमिति पाठे स्वयमदाने हेत्वन्तरव्यावृत्तिरेव स्फुटीकृता । तत् किमनेनावस्तुना चिन्तितेन इत्यद्यतनः पाठः । तत्रासारस्य निरूपितस्य राज्यादेर्निरसनमभिप्रायः । एवं प्रसङ्गागतं समाप्य स्वाध्यवसायशेषमाह— आज्ञापितोऽस्मीति । न केवलमनुष्ठिता, यावज्जीवं तदाज्ञानुष्ठानमेवास्माकं कृत्यम् । इदानीमपि तदर्थमध्यवसायः । पुरः आज्ञां प्रतीक्ष्य तिष्ठतः अद्य वृथासिका न जाता, आज्ञामहोत्सवलाभादिति भावः । यथेति तत्प्रकारोपक्रमः । येन प्रकारेणाम्रेडनीयं, तं प्रकारं कथयामीति शेषः । वत्सेति । सर्वसहस्य दीर्घायुषस्तवास्माकं शुश्रूषणमेव सततमिष्टं, तत् त्वदिच्छानुगुणं नियोक्ष्यामि । विनयावनतमुग्धं मुखकमलमुन्नाम्यास्मन्नयनानन्ददानपूर्वमाकर्णय इति संबोधनाभिप्रायः । जीमूतवाहनेति । अस्मन्निर्मितस्य नामामृतस्य चिरकालं भाजनं भव, अस्माकमनन्यशरणत्वाद् इति वात्सल्यातिशयः प्रकाश्यते । बहुदिवसपरिभोगेन न तु शून्यतया इति पूर्वमसमीक्ष्यकारिताशङ्का व्यावर्तिता । दूरीकृतमिति । अस्मदुपभोग एवात्र हेतुः । समित्कुशकुसुममिति । पूर्वं कर्मशेषाणामभावः । उपयुक्तेति वृत्तिशेषाणाम् । इदमस्मदधिष्ठितं स्थानम् । वर्तत इति त्वया दूरादानीतैरप्यस्मद्वर्तनस्य न काचित् क्षतिः इति द्योत्यते । तदिति स्थानान्तरपरिग्रहस्य युक्तत्वात् । मलयपर्वतमिति वासोचितस्थानान्वेषणेन तत्र तत्र गिरिषु न भ्रमितव्यम् । वासयोग्यतया पूर्व-

पर्वतं गत्वा निवासयोग्यमाश्रमपदं निरूपयेति । तद्[1] याव-न्मलयमेव गच्छावः ।

(उभौ परिक्रामतः।)

विदूषकः[2] —(क) भो वअस्स! पेक्ख पेक्ख। एसो खु सरसघण[3]सिणिद्धचन्दणवणुच्छङ्गपरिमिळणळग्गबहळपरिमळो विसमतड[4]पडणजज्जरिज्जन्तणिज्झरुच्चळिअसिसिरसीअरासारवा-

(क) भो वयस्य! पश्य पश्य। एष खलु सरसघनस्निग्धचन्दनवनोत्सङ्गपरिमिलनलग्नबहलपरिमलः विषमतटपतनजर्जरीक्रियमाणनिर्झरोच्चलितशिशिरशीकरासारवाही प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः ।

मेवास्मत्सिद्धमित्यर्थः । तत्रास्मदभीष्टवस्तुसम्पूर्णतया निवासयोग्यमाश्रमपदं निरूपय निरीक्षस्व । आश्रमपदमिति पूर्वसिद्धमेवास्तु, नेदानीमपूर्वनिर्माणाय प्रयासः कर्तव्यः । इतीति ताताज्ञोपसंहारः । तद्यावदिति । अद्य सुदिनत्वेन तदाज्ञानुग्रहस्य सिद्धत्वात् । यावदित्यध्यवसाये । मलयमेव । गन्तव्यस्य पूर्वमेव तातेन निर्दिष्टत्वान्नान्यत्र भ्रमितव्यम् । अन्यार्थं च इत्येवकाराभिप्रायः । अत्र स्वशरीरतः प्रभृतीति देहस्यापि परार्थं दित्सितत्वं प्रकाश्यते । उपरि च 'असूनपि सन्त्यजे'दिति, अन्यमुखेन 'परार्थघटनावन्ध्यै'रिति, 'परार्थसम्पादनमनोरथस्ये'ति, 'परार्थः खलु देहलाभ' इत्यादिना स्वयमेव परोपकारः परमसाध्यतया प्रकाशयिष्यते । तच्च दयानिमित्तम् इति विनयाध्यवसायसत्त्वादिसमेधितोत्साहस्थायिभावात्मकस्य दयावीरस्याङ्गित्वं न यत्नसाध्यम् । अत एव परार्थमेव सर्वमित्यध्यवसायोपक्षेपः ॥

१. 'तदेहि मलयपर्वतमेव गच्छावः । विदूषकः— जं भवं आणवेदि । एदु भवं । इत्युभौ प' मुद्रितकोशपाठः. २. 'कः—(विलोक्य । सविस्मयम्) भो' क., 'कः—(अग्रतोऽवलोक्य) भो', ३. 'णयसि', ४. 'डोपहदज' मुद्रितकोशपाठः.

ही पउमसङ्गमुक्कण्ठिअपिआकण्ठग्गहो व्विअ मग्गपरिस्समं अवणअन्तो रोमञ्चेदि पिअवअस्सं मळयमारुओ ।

---

अथ नर्मसचिवो विफलप्रयासोऽपिच्छिद्रान्वेषी तं भोगवीर्थी निनीषुर्मलयतटनैकट्येन यद्यर्थासूत्रितं तस्य किञ्चिद्विकारस्फुरणमनुभावमुखेनालक्ष्य रसिकजनोचितदृष्टान्तगर्भं मरुद्वर्णनेन तदेवोद्दीपयति---एष खलु सरसघनस्निग्धचन्दनवनोत्सङ्गपरिमिलनलग्नबहलपरिमलः विषमतटपतनजर्जरीक्रियमाणनिर्झरोच्चलितशिशिरशीकरासारवाही प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः । एष इति स्वकार्यपौष्कल्येन मूर्तवदतिपरिस्फुटः । खल्विति रसिकजनसध्रीचीनतया सर्वत्र प्रसिद्धः । सरसानि गिरिनद्यादिसमीपस्थतया आप्यांशबहलसंस्कारेणार्द्रीणीवोपलक्ष्यमाणानि निरन्तराणि स्निग्धानि स्नेहलिप्तानीव मसृणानि यानि चन्दनवनानि तदुत्सङ्गे यत् परिमिलनं सललितं सुहृदुत्सङ्ग इव परिवर्तनं तेन लग्नः निरन्तरश्लिष्टः बहलः अखिलदिगन्तविहरणेऽप्यपरिक्षीणः परिमलः सकलमनोहर आमोदो यस्य । चन्दनवनविशेषणैरनायासलभ्यत्वं परिमलस्य प्रकाश्यते । विषमाणि शिलापटलनिम्नोन्नतानि यानि तटानि तत्पतनेन जर्जरीक्रियमाणेभ्यो निर्झरेभ्य उच्चलिता ये शिशिरशीकराः सूक्ष्मकणाः तेषामासारान् प्रसृमरान् सञ्चयान् वोढुं शीलमस्येति सुभगशैत्यसम्बन्धस्य नैरन्तर्यं प्रकाश्यते । प्रथमसङ्गमे उत्कण्ठितायाश्चिरानुबद्धाभिलाषसमुत्सुकाया लज्जादिनिरुद्धप्रसरायाः प्रियायाः प्रेमसर्वस्वविषयभूतायाः तत्कर्तृकः कान्तकर्मकः औचित्यात् सर्वत्र तथा प्रसिद्धः कण्ठग्रहः अनेकजन्मसुकृतलभ्यः समाश्लेष इव । प्रथमशब्देनातिलोभनीयत्वमुत्कण्ठितशब्देन प्रियाशब्देन च परस्परालम्बनत्वेन रतिपरिपोषो द्योत्यते । भवदनुभवसंवादविधुरोऽप्ययं दृष्टान्तस्तृतीयसब्रह्मचारिणो दुर्लभत्वादङ्गीकृतः । विधिरनुकूलश्चेदनुभवसंवादो भविष्यतीति स्वसाध्यानुगुण्येन नर्मप्रकाशनम् । मार्गपरिश्रममपनयन् आश्रमादियतीं भूमिमागतस्य गमनकृतं खेदं निरस्यन् इति तत्राविश्रान्तिः । दृष्टान्ते मार्गं उपलक्षणमयोगपरिश्रमाणाम् । मार्गणं मार्गः सङ्गमोपायान्वेषणं, तेन परिश्रममिति वा । रोमाञ्च-

**नायकः—** (विलोक्य) **अये कथं प्राप्ता ए[1]वं[2] मलयपर्वतम्।** (स[3]र्वतो दत्तदृष्टिः) **अहो रामणीयकमस्य[4]। तथाहि—**

---

यति रोमाञ्चवन्तं करोति सुखयतीति स्वसंवेद्यमेव दृष्टमेवास्माभिर्वक्तुं शक्यमिति भावः। प्रियवयस्यम्, इयन्तं कालं निस्सुखत्वेनासंश्लेषेऽपि सेवोचितं वयस्यत्वमेवाङ्गीकृतम्, इदानीं रसिकजनवीथीप्रवेशेनातिसंश्लेषसूचकं प्रियशब्दमङ्गीकरोमि इति द्योत्यते। कर्मविशेषेणास्मदादीनां लघुधियां विकारजननं सुकरं, सत्त्वाधिकानां भवादृशामतिदुष्करमिति मारुतस्य गौरवं प्रतीयते। मलयमारुतः मलयजन्मा प्रदेशान्तरेष्वपि सकलरसिकजनसुखकरसाधनस्य स्वसूतिकासद्मनि समग्रसाधने सुखकरत्वं किं वर्ण्यत इति द्योत्यते। कर्तृत्वेन निजगृहागतं महान्तं प्रति विशेषज्ञतया सत्कारोद्यत इवेत्युत्प्रेक्षा व्यज्यते॥

अथ गुरुनियोगरसिकतया झटित्यकलितान्तरं मलयान्तिकमुपगतस्य प्रकृतदयावीराङ्गत्वेन महता प्रकरणेन शृङ्गारवर्णने मार्गपरिशोधकत्वेन रम्यदेशकालादिषु प्रथमोद्दिष्टदेशवर्णनेन

"बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति"

इति युक्त्यनुसारेण विषयोन्मुखत्वं प्रतिपादयितुमुपक्रमते। अन्यथा तुङ्गतमनिस्सङ्गत्वविश्रान्तस्य झटिति रतिसागरावतरणं दुर्घटं स्यात्। ननु उद्दीपनत्वेन देशोऽभिमतः। रत्यनुदये कथमुद्दीपनम्। कुड्ये सति हि चित्रकर्म। सत्यम्। पूर्वमनङ्गीकृतविषयसुखस्य इन्द्रियार्थेषु सामान्येन कौतुकमापाद्य विशेषेऽपि कौतुकद्वारा प्रवेशं प्रतिपादयितुमुपक्रमः। अत एव उत्सुकं करोतीति अनुलिङ्गितविषयविशेषं वक्ष्यते। उद्दीपकत्वं पश्चादेवास्तु। किञ्च रतिरपि वासनारूपेणान्तःकरणे लीनैव, अन्यथा विभावादिभिः कथं व्यज्यते भाव्यते वा। तथापि न विरोधः। वासनानुसरणम् अनुकार्यस्य सामाजिकानां च साधारणम्। प्राप्ता एवेति। नखल्वस्माभिर्मार्गदैर्घ्यादिकं निरूपितम्। श्रमोऽपि नाङ्कुरितः। झटिति गन्तव्यदेश-

---

१. 'वे' क. ख. पाठः, २. 'व वयं म', ३. '(समन्तादवलोक्य) अ', ४. 'स्य मलयाचलस्य।' मुद्रितकोशपाठः, ५. 'यं' ख. पाठः.

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः ।
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतैः
सेव्यो[२]ऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥

सन्निधिरेव बुद्ध्युपारूढ इत्येवकारेण द्योतितम् । मलयदर्शने तत्तदिन्द्रियार्थसौभाग्येनाहमहमिकया श्रोत्रादिभिराकृष्यमाणमानसो भवितव्यताप्रभावेन भोग्योन्मुखः सकौतुकमाह — अहो रामणीयकमस्य । अहो इत्यद्भुते अद्भुतं रामणयिकं रमणीयत्वम् । 'योपधाद् गुरूपोत्तमाद् वुञ्' (५. १. १३२) ।

रमणीयतोपपादनद्वारा आत्माश्रयं तत्फलमाह — माद्यदिति । माद्यतां प्रारब्धमदानां दिग्गजानां विरूपाक्षादीनाम्, अन्येषां भारप्रवृत्तत्वात्, तेषामपि विग्रहद्वयेन सञ्चरणाद् वा । गण्डभित्तीनां कण्डूतिशमनाय घर्षणैः भग्नानि स्रवन्ति चन्दनानि यत्र, रसस्य कर्मणोऽनिर्देशः प्रसिद्धेः । नयनमश्रु स्रवति, नदी स्रवति इत्युभयथापि स्रवतेः प्रयोगः । गजविशेषपरिग्रहेण दिव्यदेशत्वं, गण्डभित्तीनां स्थौल्यं, तेन द्रुमाणां विमर्दसहत्वेन महत्त्वं, कषणस्य बहुदेशव्यापित्वं, तेन चन्दनरसस्य बाहुल्यं, तेन सेव्यताप्रकर्षश्च पारम्पर्येण द्योत्यते । बहुवचनेन बहुवृक्षव्यापित्वम् । अत्र कषणभङ्गयोः समासे नैराकाङ्क्ष्येण बन्धसौभाग्ये सति किमेवमुक्तमिति चेत्, प्रतीतिक्रमानुसारेणैवमुक्तम् । चन्दनस्रावो भङ्गश्च प्रथमं दृष्टः । पश्चात् तद्गौरवेणोपपत्त्या गण्डकषणस्य हेतुत्वं समर्थ्यते । तदर्थमेवमुक्तिः । अतश्च महिम्ना—

"तस्याच्छिन्नः पदार्थानां सम्बन्धश्चेत् परस्परम् ।
न विच्छेदोऽन्तरा कार्यो रसभङ्गकरो हि सः ॥"

इत्युक्त्वामुं श्लोकमुदाहृत्य 'अत्र क्षुण्णद्रवच्चन्दन इति युक्तः पाठः' इत्युक्तं पौरोभाग्यनिर्बन्ध एव । अनूद्यमानतायां हेतोरपरिस्फुटत्वम् ।

१. 'यत्कुञ्जर', २. 'दृष्टोऽयं' मुद्रितकोशपाठः.

एवमुपर्यपि। क्रन्दत्कन्दरगह्वरः गम्भीरं नदद्गुहाकुहरः । अत्र हेतुर्जलनिधेर्वीचिभिरास्फालित इति । सलीलमाक्रान्तः । सन्निहितेन परिक्रीडमानेन सुहृदा हस्तास्फालनाकर्षणादिषु क्रियमाणेषु यथा तद्वयस्यः कश्चिदलीकपीडाभावनया क्रन्दति, स्वयमपि मन्दमन्दं प्रहरति, तथायमपि क्रन्दनशिलापातवृक्षप्रेरणादीनि समुद्रं प्रति करोति । उभयोरुभाभ्यां शोभमानत्वम् । अन्यथा समुद्रेण ताडितः क्रन्दतीति वर्णनीयस्य शोच्यता प्रतिपादिता भवति । ततश्च न सेव्यत्वसिद्धिः । उपरि वृक्षानवलोक्य शब्दानुसारेण पर्यन्तभागमालोक्य मणिमयीषु तटभूमिषु सकौतुकं विलोचने प्रेरयन्नाह — पादालक्तकरक्तमौक्तिकशिलः प्रत्यग्रप्रसाधनानुगुणं मृदुलपादतलसान्द्रलिप्तेन तलाङ्गुलिव्यापिनालक्तकेन तदानीमेव सलीलचङ्क्रमणसङ्क्रान्तेन रक्ताः भाग्योदयेन स्वगुणादप्युत्कृष्टगुणग्राहिण्यो मौक्तिकशिला यत्र । पादालक्तकस्य दृष्टस्योपपत्तिं साधयति — सिद्धाङ्गनानां गतैरिति । तत्र सिद्धराजमन्दिरसान्निध्येन सिद्धग्रहणम् । अङ्गनाशब्देन तद्वंशे कल्याणाङ्गीनामेव जन्मेति स्फुरति । अलक्तकालङ्कृतपदतलचातुर्येणापि तदनुमातुं शक्यम् । गतैः सलीलमन्दसुन्दरचङ्क्रमणैः हेतुभिः न स्थितैः । तेन सुखप्रधानतया बह्वीनां सुन्दरीणां स्वैरसञ्चारविषयतया देशस्य धन्यत्वं द्योत्यते ।

"सञ्चरत्सिद्धललनाचरणाम्भोजकान्तिभिः ।
बिभ्राणमिव पर्यन्तसक्ताब्धेर्विद्रुमावलीम् ॥"

इति क्षेमराजकथा भङ्ग्यन्तरेणोक्ता । इह मौक्तिकशिलानां वस्तुसंपद्रूपतया स्वगुणत्यागेन विशिष्टलाक्षारञ्जितत्वकथनेन च उदात्ततद्गुणयोर्वाक्यार्थरूपकाव्यलिङ्गं प्रत्यनुग्राहकत्वं, तस्य च सेव्यताप्रकर्षप्रतिपादनेनालङ्कार्यनिष्ठत्वम् । सेव्य इति । कियद् वर्ण्यते, सर्वैः सर्वत्र सर्वदा सर्वेन्द्रियार्थसंपत्त्येत्यर्थः । सेव्यशब्देन सर्वजनीनभोग्यभूमिरभिगम्यो महीपतिर्यथा, तथेति स्फुरति । एवं वर्णितस्य गुणप्रकर्षस्यात्मसंबद्धं फलमाह — किमपीति । अनुल्लिङ्गितविषयविशेषत्वेनाव्यपदेश्यत्वेन झटिति प्रवृत्तत्वेन चापरिच्छेद्येन हेतुना । किमपीत्यव्ययम् । मे चेतः विषयमार्गवै-

तदेह्यारुह्य निवासयोग्यमाश्रमं[2] निरूपयाव[3]ः ।

(आरोहणं नाटयतः ।)

**नायकः**— (निमित्तं[4] सूचयन्) । सखे[5] !

स्पन्दते दक्षिणं चक्षुः फलकाङ्क्षा न मे क्वचित् ।
न च मिथ्या मुनिवचः कथयिष्यति किन्न्विदम् ॥ १० ॥

---

देशिकम् । उत्सुकं करोति[6] । किं वृथासिकया, इदमिदं भोग्यमिति सहस्र-मुखप्रसरसरभसं करोति इति देशसौन्दर्येण भोग्योन्मुखत्वं प्रतिपादितम् ॥

तदेहीति । यदस्य सेव्यत्वं तस्माद्धेतोः । अथवा उत्सुकयति, तत्र तत्राक्षिपति । एतदनुसारेण प्रकृतप्रमोहो भवेत् । गन्तव्यमेवेत्यर्थः । एहीति, आत्मनस्त्वरा सूचिता । आरुह्येति, आश्रमस्यादृष्टत्वात् । निवासयोग्यमाश्रममिति पितृनियोगानुवृत्तिः । आरोहणं नाटयत इति अनुकार्याभिमतस्य नटस्य प्रवृत्तिः । नखल्वनुकार्यस्यारोहणनटनम् । देहोन्नमनपादोत्क्षेपणादिभिः रङ्गस्थ एव तदारोहणं तद्भावेनाभिनयेद्, यथा सामाजिकानां साक्षात्कारो भवेत् । एवं सर्वत्र क्रियाभिनये द्रष्टव्यम् ॥

निमित्तं सूचयन्निति । प्रकृताङ्गभूतस्य रसान्तरस्योपक्षेपात् प्रागेव सुनिमित्तेन शान्तमप्यात्मानं मनोरथपदवीं नयति । सखे ! मदाश्रयस्य शुभाशुभस्य संविभागी भवान् । तच्छृणु इत्यर्थः । स्पन्दते अविच्छिन्नं स्फुरति । दक्षिणं निमित्तेषु शुभत्वेन प्रसिद्धम् । तर्हि किमपि समीहितं द्योतयतीति शङ्कायामाह— फलकाङ्क्षा प्रयोजनाभिलाषः । क्वचिद् अर्थादिविषये । इदं मे कथं भवेद् इति न भोग्यविशेषाभिलाषः । तर्हि मुधै-

---

१. 'तत्रारुह्य वा' २. 'मपदं नि', ३. 'वः । विदूषकः—एव्वं करेह्म । (अग्रतः स्थित्वा) एदु भवं । (आ', ४. 'दक्षिणाक्षिस्पन्दं सू', ५. 'अये ! स्प' मुद्रितकोशपाठः. ६. 'ति । 'कालाक्षमत्वमौत्सुक्यं रम्येक्षारतिसम्भ्रमैः' इत्येवं लक्षितस्य........द्वारफलं करोति । किं' ग. पाठः.

**विदूषकः**—(क) भो वअस्स! आसण्णं दे पिअं णिवेदेदि।

**नायकः**—एवं नाम, यथा भवान् ब्रवीति।

**विदूषकः**[2]—(सहर्षम्)[1] (ख) भो वअस्स[3]! एदं खु सविसेसघणसिणिद्धपादवोवसोहिदं[4] सुरभिहविग्गंधगब्भिणुद्दाम-

(क) भो वयस्य! आसन्नं ते प्रियं निवेदयति।

(ख) भो वयस्य! एतत् खलु सविशेषघनस्निग्धपादपोपशोभितं सुरभिह-

वेति शङ्कायामाह—न च मिथ्या मुनिवचः मुनिशब्देन मिथ्यात्वासंभावना प्रकाश्यते। अनेनेदं भवेदिति त्रिकालज्ञैरुक्तमवश्यं भवत्येव। तत् किंन्विव्येव विचारः। कथयिष्यति अचिरभावित्वेन स्फुटं द्योतयति। अकाङ्क्षितमप्यदृष्टबलाद् भवति। तत्र नानुपपत्तिः। किन्न्विति विचारः। अनेनौत्सुक्यं द्योतयति। वक्तृत्वकथनेन स्फुटता द्योत्यते। यथा विदग्धः सुहृद् भाविनमर्थं ज्ञात्वा प्रागेव प्रतिबोधयति, तथेति दक्षिणशब्दशक्त्या च द्योत्यते इति॥ १०॥

एतेनौत्सुक्यं ज्ञात्वा तदेव पोषयन्नाह—आसन्नं ते प्रियं निवेदयति। किमत्र विचार्यते। आसन्नं देशतः कालतश्च। प्रियं प्रीतिकरं किमपि लोकोत्तरं वस्तु। ते सर्वसंपत्स्वयंवरपतेः। तन्नात्र विचिकित्सा कार्या। दैवादागतं प्रत्युद्गम्य स्वीक्रियतामिति भावः। अत्र प्रियम् इति प्राकृते पुलिङ्गादिसाधारण्येन प्रियामिति च भाविशेषत्वेन कविबुद्ध्यनुसारेण स्फुरति॥

इति तदुक्तिमास्तिक्येन बहुमन्यमान आह—एवं नाम अस्त्विति वाक्यशेषः। नामेत्यभ्युपगमे। नैतत् प्रतिक्षेप्यं भवितव्यस्य प्रभावाद् ब्राह्मणस्य

१. 'कः—सहर्षम् भो' क. पाठः. २. 'कः—भो' क. ख. पाठः. ३. 'स्स! पेक्ख पेक्ख। ए', ४. 'वविसो' मुद्रितकोशपाठः.

धूमणिग्गमं अणुव्विग्गमग्गसुहणिसण्णसावअगणं तवोवणं विअ ळक्खीअदि ।

**नायकः**—सखे! सम्यगुपलक्षितम् । तपोवनमेवैतत । कुतः,

वासोर्थं दययैव[2] नातिपृथवः कृत्तास्तरूणां त्वचो
भग्नालक्ष्य[3]जरत्कमण्डलु नभःस्वच्छं पयो नैर्झरम् ।

---

विर्गन्धगर्भितोद्दामधूमनिर्गमम् अनुद्विग्नमार्गसुखनिषण्णश्वापदगणं तपोवनमिव लक्ष्यते ।

---

तव वचनगौरवाच्चेत्यर्थः । अनेन निमित्तफलं प्रति सापेक्षत्वप्रकाशनेन पूर्वं प्रस्तुतस्यौत्सुक्यस्योपोद्बलनं कृतम् ॥

अथ प्रकृतमनुसरति—भो वयस्येति । अस्माभिरन्विष्टमासादितमिवेति प्रहर्षः । एतत् खलु सविशेषघनस्निग्धपादपोपशोभितं सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गमम् अनुद्विग्नमार्गसुखनिषण्णश्वापदगणं तपोवनमिव लक्ष्यते । सविशेषपदेन पूर्वोक्तं स्मारयति । मुनिगौरवेण वनचरदवाग्निद्विपादिभिरनुपप्लुतत्वात् स्थलगौरवाच्च सविशेषत्वम् । सुरभिहविर्गन्धगर्भितः उद्दामः तत्र तत्रोन्मिषन् सङ्घीभूय बहलत्वेन प्रकाशमानः धूमनिर्गमो यत्र । हविर्गन्धगर्भितत्वं तपोवनोपलक्षणार्थम् । अनुद्विग्नाः अत एव मार्गे सुखनिषण्णाः श्वापदगणाः परस्परविरुद्धा अपि मृगसङ्घा यत्र । अत्रानुद्विग्नत्वं सम्मेलनं चोपलक्षकम् । तपोवनमिव लक्ष्यते । स्थूलैरुपलक्षणैः संभावयितुमेवास्माकं बुद्धिप्रसरः । सूक्ष्मचिह्नैर्भवानेव निश्चेतुं निपुण इतीवशब्दाभिप्रायः । एवमुपर्यपि ॥

सखे इति । एवं बुद्धिमतस्तव सखित्वं हृद्यमिति भावः । सम्यग् यथातत्त्वम् उपलक्षितम् असाधारणेन चिह्नेन बोधितम् । तपोवनमेवैतत् । किमत्र सम्भावनागर्भत्वेनाभिधीयते इत्येवकाराभिप्रायः । कुत इति अवधारणोपपादनोपक्रमः । वासोर्थमिति । तरूणां त्वचः कृत्ताः । ज्ञायन्त

---

१. 'कः—वयस्य! सम्य' क., 'कः - सम्य' ख. पाठः. २. 'ये', ३. 'भानेकज' मुद्रितकोशपाठः. ४. 'णम् । अ' क. ख. घ. पाठः.

दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्यः क्वचिन्मेखला
नित्याकर्णनया शुकेन च पदं साम्नामिदं पठ्यते ॥ ११ ॥

तदेहि । प्रविश्यावलोकयावः ।

(प्रवेशन नाटयतः)

---

इति शेषः । दृष्टस्योपपादनाय वासोर्थमिति प्रयोजननिर्देशः । नातिपृथव इत्यत्र हेतुर्दययैवेति । एवकारेण लोभादिकं व्यावर्तयति ।

"अमनस्त्वमसम्प्राप्तं मनस्त्वादपि विच्युतम् ।
तटस्थं रूपमाश्रित्य स्थितैषा स्थावरेषु चित् ॥"

इत्युक्तत्वाच्छेदभेदादिषु तेषामपि पीडा भवेदिति दयोपपत्तिः । नातिपृथव इति परिधानस्यानन्ययोग्यत्वात् तावन्मात्रमेव गृह्यत इत्यर्थः । एतदसाधारणं चिह्नं भग्नालक्ष्यजरत्कमण्डलु इति बोध्यम् । भग्नाः तथा आलक्ष्याः स्पष्टं दृश्याः जरन्तः कमण्डलवः मृद्दार्वादिपात्रविशेषा यत्र । जरत्तया भग्नत्वं, न तु मुनिप्रमादेन । भग्नत्वेन जले त्याग इत्युपपत्तिकल्पनम् । नभस्स्वच्छमिति, तथालक्षणे हेतुः स्वच्छत्वम् । मुनिगौरवाच्च क्वचिद् न त्वनेकत्र, आक्रमणादिदोषात् । त्रुटितत्वमुज्झने हेतुः ।

"मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्[2] ॥"

इति वचनानुसारेणेयमुक्तिः । वटुभिरिति धारणौचित्यात् । मौञ्जीति योग्यत्वात् । चकारो लक्षणान्तरसमुच्चये, उपर्यपि । नित्याकर्णनयानेकवारं तस्यैव श्रवणात् । शुकेनेति । उक्तानुकथनं जातिस्वभावः । धारणस्वयंपठनादिकं त्वत्र विशेषः । पदमिति । परिस्फुटबिन्दुविसर्गस्वरादिलक्षणम् । साम्नामिति । अत्र वेदसामान्य एव विवक्षा 'येनावृत्य मुखानि साम पठतामत्यन्तमायासितम्' इत्यादिवत् । इदमिति इदानीमपि श्रोत्रमार्गं प्रविशत् । पठ्यते आवृत्त्या कथ्यते वटूननुकुर्वतेवेति व्यज्यते ॥ ११ ॥

---

१. 'गीयते' मुद्रितकोशपाठः. २. 'वि' क. ख. पाठः. ३. 'प्र' ख. पाठः.

**नायकः** — (सर्वतो विलोक्य) अहोतुखलु मुदितमुनि-जनप्रविचार्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्वटुजनो-च्छिद्यमानार्द्रसमिधः, तापसकुमारिकापूर्यमाणबालवृक्षकाल-वालस्य प्रशान्तरम्यता तपोवनस्य । इह हि,

---

एवमवधारणमुपपाद्य साध्यानुगुणमाह—तदेहीति । आश्रमत्वेन निश्चितत्वात् प्रविश्यावलोकयावः । तथा सति निवासयोग्यत्वं निश्चेतुं शक्यमिति भावः ॥

प्रवेशनं नाटयत इति पूर्ववत् प्रविश्य मुनिपरिपूर्णस्य तपोवनस्य लोकोत्तरत्वेन सविस्मयमाह — अहोतुखलु तपोवनस्य प्रशान्तरम्यता । अहोतुखल्विति निपातसमुदाय आश्चर्ये, क्वचित् कौतुकमात्रे । 'अहो बतासि स्पृहणीयवीर्ये' इति । क्वचिद् विस्मयनीयवस्तूपाधित्वेन । यथात्र । प्रशान्तरम्यता आश्चर्यभूतेत्यर्थः । यत् प्रशान्तं, तस्य इन्द्रियाविषयत्वान्न लौकिकं रम्यत्वम् । यद् रम्यं, तस्य इन्द्रियार्थरूपत्वान्न प्रशान्तत्वम् । इहोभयमप्यस्तीति विस्मयः । तपोवनस्य शान्तत्वं शान्तजनभूयस्त्वात् । उभयमुपपादयति—मुदितेति । मुदितेनात्मारामतया नित्यसन्तुष्टेन मुनिजनेन प्रविचार्यमाणः प्रकर्षेण विचार्यमाणः यावता निश्चयो भवेत्, तावता शीक्षानिरुक्तादितत्तदङ्गपाठक्रमाद्यनुसारेण निरूप्यमाणः सन्दिग्धः अनिश्चितः वेदवाक्यविस्तरो यत्र । सन्दिग्धत्वं विचारे हेतुः । विस्तरशब्देन शाखानां बहुत्वेन सन्देहविचारयोः सङ्गतिः प्रकाश्यते । मुदितत्यनेन तत्त्वबुभुत्सातात्पर्यम् । अत्र मुदितत्वं वेदविचारश्च प्रशान्ततातिशयः । पठद्भिर्वटुजनैराच्छिद्यमानाः समन्तात् छिद्यमाना आर्द्रा अशुष्काः तदानीमानीताः समिधो यत्र । अत्र पठनेन छेदनस्य छेदनेन पठनस्य न विच्छेदः । समकालमेवोभयं निरूप्यते इति रम्यत्वम् । पठदित्यनेन न स्वाचार्यसान्निधेः श्रवणं, श्रुतस्य गुणनमेव क्रियते । इन्द्रियान्तरेण छेदनमिन्द्रियान्तरेण

---

१. 'कः—अ' क. पाठः., 'कः— (सविस्मयं विलोक्य) अहोतुख', २. 'न', ३. 'नार्द्रार्द्र', ४. 'रमणीयता' मुद्रितकोशपाठः.

मधुरमिव वदन्ति स्वागतं[1] भृङ्गशब्दै-
नेतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः ।
मम ददत इवार्घ्यं पुष्पवृष्टीः[2] किरन्तः
कथमतिथिसपर्यां शिक्षिताः शाखिनोऽपि ॥ १२ ॥

पठनम् । प्रत्येकं निर्वहणे कालक्षेपो भवेत् । तद् युगपन्निर्वहाम इति तद्बुद्धिरुत्प्रेक्ष्यते । अविवक्षया पठनकर्मानिर्देशः । तापसकुमारिकाभिरापूर्यमाणा बालवृक्षकाणामालवाला यत्र । कप्रत्ययेन कुमारीणां शिशुत्वेऽपि कृत्यतात्पर्यं वृक्षाणां लोभनीयत्वं च द्योत्यते । एतदपि नयनप्रियतया रम्यम् । उपलक्षणत्वेन किञ्चिदुक्तम् । हेतुबाहुल्ये सति सर्वसङ्ग्रहणायाश्चर्यत्वकथनम् । इह हीति विशेषान्तरसंभावनेन प्रस्तुतस्यैव लोकोत्तरत्वं प्रतिपादयितुमुपक्रमते । इहैव एवं संभाव्यत इत्यर्थः । उत्तरवाक्यानुप्रवेशस्य दुर्घटत्वात् । कुत इत्यादिष्वपि कस्मादेतदिति प्रतिपाद्यते इति तत्रैव विश्रान्तिः । यथाकथञ्चिद् वाक्यानुप्रवेशेऽपि नान्यत्रैवं दृष्टमिति तात्पर्यम् । मधुरमिति । अमी शाखिनोऽपि कथमतिथिसपर्यां शिक्षिताः । अमी निरन्तरदृश्यमानाः शाखिनः समग्रावयवास्तरवः अपि, न केवलं मुनयः, तद्वैभवात् तरवोऽपि । अतिथीनां पूजां तत्स्थैः कर्तव्यां शिक्षिताः । क्रमादिपुरस्सरमभ्यस्तवन्तः । कथमिति किमित्यर्थे वितर्के । यथा 'त्वमेव देवेन्द्र! यथा निगद्यसे' इत्यादिषु प्रत्ययार्थमनादृत्य यदर्थ एव गृह्यते, तथेहापि । शिक्षिता इत्यनेन नेदानीमुपक्रम इति पाटवात् कल्प्यते इति व्यज्यते । अत्र तरुषु सपर्याकर्तृत्वसन्देहः संभावनायां पर्यवस्यतीति तद्विवरणाय संभावनान्तरम् । अन्यथा तत्रापि सन्देहो युक्तः । अपीति विरोधपक्षे तु तच्छेषतया कथमिति प्रकाराक्षेपः । तथा सति कथमेतदेषामचेतनानामित्यनुपपद्यमानतायां विश्रान्तिः । न तच्छेपतया संभावनान्तरस्योत्थानम् । तत्र 'आगते स्वागतं कुर्यादि'ति क्रमप्राप्तमाचारं संभावयति— भृङ्गशब्दैर्मधुरं स्वागतं वदन्तीव । ममेति सर्वशेषः । मद्विषय-

१. 'न्तः', २. 'ष्टिं' मुद्रितकोशपाठः. ३. 'दा' ग. पाठः.

मित्यर्थः। भृङ्गशब्दैर्हेतुभूतैः। प्रतीतिक्रमेण भृङ्गशब्दश्रवणादेवं संभाव्यत इति व्याख्यानेऽपि भृङ्गशब्दस्य तरुकर्तृकवादसंभावनायां साधनत्वेनानुप्रवेशो दुष्परिहर इति तथैव व्याक्रियते। भृङ्गशब्दैः करणभूतैः मधुमदमुदितमधुकरमधुरझङ्कारस्यास्मदागमने एभ्यः प्रसरणादेतेषां स्वागतगीतिरियम् इति संभाव्यत इत्यर्थः। प्रतीतिक्रमस्य तथापि न विरोधः। यथा 'आलोकशब्दं वयसां विरावैरि'त्यत्र। तत्रापि साक्षात्कृतवर्णनीयकविप्रतीतिक्रमेण हेतुत्वं सुयोजम् इति चेदस्तु। नेयता संभावनासिद्धिः। वृक्षाणामाश्रमस्थितिः, तत्सन्निधावागमनं, तदानीं भृङ्गशब्दोद्गतिः, श्रोतुरवधानम् इत्यादिसंभावनाङ्गानां मध्ये हेतुत्वमप्यनुप्रविशतु। न चैवंविधे विषये सर्वत्र हेतुत्वस्फुरणम्। यथा—

"तया व्याहृतसन्देशा चाबभौ निभृता प्रिये"

इत्यत्र,

"दृष्टापि सा ह्रीविजिता न साक्षाद्
वाग्भिः सखीनां प्रियमभ्यनन्दत्।"

इत्यत्र च। स्वसन्देशव्याहारे तस्याः करणत्वं स्वकर्तृकस्याभिनन्दनस्य सखीवाचां करणत्वं चात्र परिस्फुटमेव। दृष्टान्ते च परभृतोन्मुखी मयूरकेकाभिरिति करणत्वमेव प्रतिबिम्बितम्। कथं 'धनुषा प्रहरती'तिवद् वक्तृधर्मस्य वादस्य वक्त्रन्तरवचनं करणं भवेत्। कथं देवदत्तपादेन यज्ञदत्तस्य गमनम् इति चेद्, नेदृशमस्माभिर्भवद्वैषम्यं चेतितं, स्वसाध्ये दुराग्रहं विमुच्य निरूपयतु भवान्। औचित्यशरणा महाकवयस्तदविरोधेन सर्वत्र सारस्यमापादयन्तीति सर्वत्र तदेवान्विष्यताम्। अन्यथा अनन्तरोक्ते महाकविवचसि दुर्घटत्वं स्फुरेत्। सा सखीनां वाग्भिः प्रियमभ्यनन्दद् इत्यत्रान्यमुखेनाभिनन्दनं समर्थयितुं दृष्टान्तः। तत्राचेतनायाः स्थल्याः कर्तृत्वं मयूरकेकानां च करणत्वं कथं घटते। दृष्टान्तस्यावस्तुतायां दार्ष्टान्तिकमपि दुस्स्थं भवेद्, यथा तदेव हेतोरसिद्धत्वादिना, इति शोभार्थमङ्गीकृतेन भूषणेन वैरूप्यं जातमिति भवेत्। तत् कविसरणिमनुसृत्य विचारयतु भवान्। कवयः क्वचित् सादृश्यमङ्गीकुर्वन्ति, क्वचिदारोपं, क्वचिदध्यवसायं, क्वचित् सन्देहं, क्वचिच्छ्लेषं, क्वचित् समासोक्तिं,

क्वचिच्चेतनेष्वचेतनस्वरूपं, क्वचिदचेतनेषु चेतनस्वरूपं, क्वचिदुभयस्य व्यवहारमात्रं, क्वचिन्मूर्तस्यामूर्तत्वं, क्वचिदमूर्तस्य मूर्तत्वं, मूर्तधर्मस्यामूर्ते, अमूर्तधर्मस्य मूर्ते योजनम् इत्याद्यनन्तं निर्माणप्रकारं प्रकाशयन्ति । न च कुत्रापि रसिकानां विपश्चितामनुपपत्तिः । अत एवोक्तं--

"भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेच्छं सुकविः काव्ये स्वतन्त्रतया ॥"

इति ।

"अपारे काव्यसंसारे कविरेकः प्रजापतिः"

इति च । 'नियतिकृते'त्यादि च । सर्वत्र कवीनां स्वातन्त्र्यमेवोद्घोष्यते । औचित्यमेवात्र शरणम् । प्रकृते दृष्टान्तेऽपि स्थल्या दर्पण नैर्मल्यं, प्रमुदितमयूरकेकानां तत्र भावः, मेघस्योपरिस्थितिः, प्रकृतानुगुण्येन लिङ्गनिर्देशः, आरोपितमभिनन्दनं च प्रतिबिम्बितम् उपमेयस्य सौन्दर्यमापादयत्येव । नात्राचेतनत्वादि निरूप्यते । उपमायां च सर्वत्र वस्तुस्थितिं नाङ्गीकुर्वन्ति । 'कृष्णपक्ष इव बहुलतागहन' इत्यादिपूभयत्र समानशब्दश्रवणमेवोपमाप्रतिपादकं नार्थस्य वस्तुस्थितिः । अत एव शब्दालङ्कारत्वेनेदृशे विषये उपमामिच्छन्ति केचित् ।

"‡ धुअमेहमहुअराओ घणसमआअड्ढिओणअविमुक्काओ ।
णहपाअवसाहाओ णिअअट्ठाणं व पडिगआओ दिसाओ ॥"

इत्यत्रामूर्तस्य नभसः पादपत्वारोपः दिशां शाखात्वारोपः घनसमयस्य तदाकर्षणविमोचनकर्तृत्वं निजस्थानप्रतिगमनोत्प्रेक्षा चारोपितचेतनव्यवहारं विना कां वस्तुस्थितिमनुसरति । वस्तुस्थित्यनुसरणनिर्बन्धे माधवचन्द्रापीडादिचरितानां मूलत एवोच्छेदो भवेत् । न खलु बुद्ध्युपारोहं विना काचिदत्र वस्तुस्थितिः । रामादिचरितेऽप्यागमप्रामाण्यं विना न वस्तुस्थितिर्निश्चीयते । औचित्यानुसरणेन वृत्तान्तयोजने माधवादीनामपि रसालम्बनत्वं, तदननुसरणे रामादेरपि न रसाश्रयत्वम् । यथा — रावणाद् भीतः पलायते राम इत्युक्तौ तदौचित्यमेव साम्राज्येऽभिषिच्य श-

१. 'ङ्ग', २. 'ष्ट' ग. पाठः. ३. 'दनु' ख. ग घ. पाठः.

‡ धुतमेघमधुकरा घनसमयाकृष्टावनतविमुक्ताः ।
नभःपादपशाखा निजकस्थानमिव प्रतिगता दिशः ॥

तन्निवासयोग्यं[1] तपोवनम् । मन्ये भविष्यतीह[2] निवसतामस्माकं निर्वृतिः ।

---

ब्दार्थव्यवहारे प्रयतन्ते महाकवय इति निरूपणे न काचिदनुपपत्तिः । तदलं शाखाचङ्क्रमणप्रयासेन । प्रकृतं निरूप्यते । फलनम्रैः फलभरेण किञ्चिदधोमुखैः । शिरोभिः अग्रभागैः । नतिं सपर्याविशेषरूपं नमस्कारं कुर्वेत इव । अत्र शिरोभिरिति श्लिष्टशब्देन उत्तमाङ्गत्वारोपशेषतया शाखिनां नन्तृत्वारोपेऽपि उत्प्रेक्षाङ्गत्वमेव । अर्घ्यं ददत इव । अत्र ददते इति पदच्छेदः । अविवक्षया संप्रदानत्वानिर्देशः । पुष्पवृष्टीः शाखोपशाखादिषु निचितानां पुष्पाणां वृष्टीः अविच्छिन्नप्रसराणि पुष्पाणि । किरन्तः मन्दवायुना शिरसि पादयोरग्रभागे च विक्षिपन्तः । अर्घ्याङ्गेषु मुख्यस्य पुष्पस्य निर्देशाद् अर्घ्यसमष्टिः कल्पिता । एवं कायिकस्य वाचिकस्य सत्कारस्य संभावनायां शिक्षिताः इत्यनेन मानस्याविप्रतिपत्तिः संभाविता । अनेन श्लोकेनाचेतनेष्वप्येवं संभावनायोग्यत्वाद् मुनीनामाचारपूर्तिर्दण्डापूपिकयापतत्येव । अत इदमेव स्थानं मुख्यमिति निश्चिततम् ॥ १२ ॥

तेनैवाह — तन्निवासयोग्यं तपोवनमिति । तदिति पूर्वोक्तस्य गुणसामग्र्यस्य हेतुत्वेन संग्रहः । निवासयोग्यमिति ताताज्ञानुसारेण समित्कुशादिसंपन्नत्वादित्यर्थः । निवासे पार्यन्तिकं मुख्यं फलमाह — मन्ये, दृष्टैरनुमितैश्च हेतुभिरित्यर्थः । इह निवसतामस्माकं पित्रोः तेनैवावयोश्च निर्वृतिः सुखं दुःखत्रयराहित्येनात्मनो व्यवसायस्थानोन्मीलिनी अवस्था न तु कैवल्यं, तस्य देशविशेषानपेक्षत्वात् । समीहितानां दैवादागतानां च परार्थसंपादनादीनां फलानां निर्विघ्नसिद्ध्या परिपूर्णः परितोषो भविष्यतीत्यर्थः ॥

एवं प्रकृतं पितृनियोगं संसाध्य प्रकृतदयावीराङ्गत्वेन महता प्रबन्धेन रसान्तरे प्रवेशं प्रतिपादयितुं मध्यमस्थमद्भुतमारोढुं नर्मसचिवमुखेनोपक्रमते । महासत्त्वानां दैववशाद् विकारोदयेऽपि परप्रेरणया प्रथमप्रवृत्तिः किमपि गौरवमाविष्करोति । रामस्यापि मायामृगग्रहणे सीतानिर्बन्धेन प्रवृत्तिरुदर्के चानुग्रहहेतुः, एवमिहापि नर्मसचिवमुखेन प्रवृत्तिः,

---

१. 'ग्यमिदं त', २. 'इ व' मुद्रितकोशपाठः.

**विदूषकः** — (क) भो वअस्स! किंणुखु एदे ईसिवळिअकन्धरा णिच्चळमुहोसरंतदरदळिअदब्भगब्भकबळा समुण्णमिअदिण्णेक्ककण्णा णिमीळिदळोअणा आअण्णअंतो विअ हरिणा ळक्खिअंति।

**नायकः** — (कर्णं दत्त्वा) सखे! सम्यगुपलक्षितं भवता। तथाहि[2] —

---

(क) भो वयस्य! किंनुखल्वेते ईषद्वलितकन्धराः निश्चलमुखापसरद्दरदलितदर्भगर्भकबलाः समुन्नमितदत्तैककर्णाः निमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते।

---

इत्युपरि सर्वत्रावसेयम्। भो वयस्य! किंनुखल्वेते ईषद्वलितकन्धरा निश्चलमुखापसरद्दरदलितदर्भगर्भकबलाः समुन्नमितदत्तैककर्णाः निमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते। भो इति। इतो दृष्टिर्दीयतामित्यर्थः। ईषद्वलितकन्धरा इत्यवधानदानोपक्रमः। निश्चलान्मुखादपसरन्तः गलन्तः वदनविवृत्त्या ईषत्खण्डिता दर्भगर्भाः कबला येषां ते। समुन्नमितः शब्दप्रवेशाय दत्तः अवधानं प्रापितः एकः कर्णो यैः। निमीलितलोचना अनुभूतिवशात्। आकर्णयन्त इव, इवेत्यनेन एतावदेव मया स्थूलधिया ज्ञातुं शक्यम्। आकर्णनकर्मादिकं तु सूक्ष्मतया भवता ज्ञातुं शक्यम्। भवन्मुखान्मयापीति द्योत्यते॥

इति तद्वचनेन झटिति कर्णं दत्त्वा गीतामृतं श्रोत्रपात्रेण पीत्वा हरिणान् दृष्ट्वा तदुक्तमनूद्य तं बोधयति—सखे! सम्यगुपलक्षितं सरसवस्तूपभोगे आत्मम्भरित्वं विहाय सखित्वोचितप्रथमार्पणमेव त्वया कृतं न त्वपाण्डित्यमत्र किञ्चित्। सम्यग् यथावस्तु। उपलक्षितं चिह्नेन बोधितम्। तथाहीति तद्विवरणोपक्रमः॥

---

१. 'तम्। त' मुद्रितकोशपाठः. २. 'कुतः, स्था' मूलपाठः.

स्थानप्राप्त्या दधानं प्रकटितगमकां मन्द्रतारव्यवस्थां
निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वनेन ।
एते दन्तान्तरालस्थिततृणकबलच्छेदशब्दं नियम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥

स्थानेत्यादि । एते कुरङ्गाः गीतमाकर्णयन्ति । एते त्वया बोधितावस्थानप्रकाराः कुरङ्गाः । कुरङ्गः परिभ्रमणस्थानम् एषाम् इति भ्रमणशीलतया नाम्नो रूढिः । गीतश्रवणतात्पर्येण निश्चलतया विपर्यस्ता इति गीतस्य सौभाग्यातिशयः प्रकाश्यते । गीतं ग्रामरागम् । स्फुटललितपदं स्फुटानि ललितानि च पदानि यत्र । अनेन निबद्धमिति प्रकाशितम् । अनिबद्धं निबद्धं च द्विधा गीतम् । अनिबद्धं जात्युद्भवकेवलग्रामरागनिर्व्यूढम् । निबद्धस्य पदमङ्गम् । आकर्णयन्तीति तदुक्तानुवादः । गीतमिति बोध्यम् । स्रक्सूत्रन्यायेन स्वराणामाश्रयभूतानि पदानि स्फुटानि स्थानप्रयत्नविशुद्धवर्णसुप्तिङादिविशिष्टानि ललितानि मधुरस्वररूषितानि । स्फुटत्वेन लालित्यं लालित्येन स्फुटत्वं च न निह्नूयते । तत्र,

"नादाच्छ्रुतिसमुत्पत्तिः श्रुतिभ्यः स्वरसम्भवः"

इति स्वरोत्पत्तिक्रमः । ते,

"षड्जस्तथर्षभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव सप्तमश्च निषादवान् ॥
चातुर्विध्यमथैतेषां विज्ञेयं गानयोक्तृभिः ।
वादी चैवाथ संवादी अनुवादी विवाद्यपि ॥"

इति । तत्र स्थानप्राप्त्या मन्द्रतारव्यवस्थां दधानं, स्थानानाम् उरःकण्ठशिरसां प्राप्त्या प्रकृष्टया आप्त्या, कण्ठादिस्थानानां वर्णाश्रयत्वात् तेषां च पदावयवत्वात् तत्स्फुटत्वेनैवोक्तिरिति स्वरस्थानान्युच्यन्ते ।

"यदूर्ध्वं हृदयग्रन्थेः कपालफलकादधः ।
प्राणसञ्चरणस्थानं स्थानमित्यभिधीयते ॥
उरः कण्ठः शिरश्चेति तत्पुनस्त्रिविधं मतम् ।"

१. 'समनामन्द्र', २. 'स्था' मुद्रितकोशपाठः.

इति । यद्यपि 'मन्द्रात् तारं न गच्छेत् ताराद् वा मन्द्रम्' इति न्यायाद् मध्यमस्थानं कण्ठमस्पृष्ट्वा उभयत्र व्यवस्था न घटते । तथापि व्यवस्थायां द्वयोर्विशेषः । व्यवस्थाशब्देन स्वराणामूनाधिक्यं तद्वादनदण्डेन्द्रियवैगुण्यादुपजायते इति मुनिप्रतिपादितदोषनिरासः प्रकाश्यते । मध्यमस्य व्यवस्थाया उत्थानविश्रान्तिलक्षणाया अभावाद् द्वयोरुपादानम्।

"मन्द्रो वक्षसि मध्यमोऽप्यथ गले तारः पुनर्मस्तके
दारव्यां तु विपर्ययादिह भवेत् तारो ह्यधोऽधः क्रमात् ।"

इति स्थानसंबद्धानां स्वराणां संज्ञाः । प्रकटितगमकामिति व्यवस्थायां गमकानामुपयोगात् तद्विशेषत्वेनोपादानम् ।

"स्वरोत्थानप्रकारस्तु गमकः परिकीर्तितः ।
स कम्पितादिभेदेन स्मृतः सप्तविधो बुधैः ॥"

इति गमकलक्षणम् ।

"स्वश्रुतिस्थानसम्भूतां छायां श्रुत्यन्तराश्रयाम् ।
स्वरो यद् गमयेत् गीते गमकोऽसौ निरूपितः ॥"

इति निर्वचनम् ।

"द्रुतत्रिगुणवेगेन यत्र स्यात् स्वरकम्पनम् ।
कम्पनं नाम गमकमाहुर्गमककोविदाः ॥
द्रुतद्विगुणवेगेन विद्यात् स्फुरणसन्निभम् ।
गमकं स्फुरिताख्येयमभ्यधाद् गायकोत्तमः ॥
मसृणो द्रुतमानेन स्वरो यत्र विधीयते ।
लीनाभिधानो गमको गायकैरुक्त उत्तमः ॥
स्थानत्रितयसंस्पर्शी त्यक्तखेदघनस्वरः ।
त्रिभिन्ननामकोऽसौ स्याद् गमको हृदयङ्गमः ॥
ध्वनिर्डमरुकस्येव लघोरास्फोटने द्रुतम् ।
यादृक् तदनुकारी स्याद् गमकस्त्रिरूपाभिधः ॥
स्वरस्य लघुमानेन यस्मिन्नन्दोलनं भवेत् ।
अन्दोलिताभिधानोऽसौ गमको लक्षितः स्फुटम् ॥

---

१. 'रू' घ. पाठः.

**विदूषकः—** (क) भो वअस्स को णु खु एसो तवोवणे गाअदि ।

(क) भो वयस्य! कोनुखल्वेष तपोवने गायति ।

आग्रहं स्वरमाहत्य स्वरो यत्र निवर्तते ।
आहताख्यः स गमको गीतज्ञैः संप्रकीर्तितः ॥
कम्पात् कम्पितमीरितं स्फुरितमित्युक्तं द्रुतावर्तनात्
त्रिस्थाने चलनात् त्रिभिन्नमुदितं लीनं च मासृण्यतः ।
तोयावर्तवदामनन्ति [2]तिरुपं डोलावदन्दोलितं
तोयाघातवदाहतं च गमकान् सप्तस्वराणां विदुः ॥"

इति । तेषां प्रतिनियतलक्षणमारोहावरोहक्रमेण तैरेव ग्रामरागाणां व्याप्तिरिति तेषां प्रकटनेन स्वरपूर्तिः । शङ्कितं भीतम् उत्कृष्टम् अव्यक्तम् अनुनासिकं काकस्वरम् उरसिगतं स्थानवर्जितम् असम्पूर्णं गाद्गद्यम् इत्यादिदोषनिरासश्च प्रकाश्यते— निर्ह्रादिन्याः प्रशस्तनादवत्याः विपञ्च्याः वीणायाः तन्त्रीस्वनेन मिलितम् अपरिस्फुटं विभिन्नरूपं यथा भवति तथा श्लिष्टम् । अनेन

"शारीरवांशवैणानामैकरूप्यं प्रशस्यते"

इत्युक्तमनुसृतम् । अलिरुतेनेवेति दृष्टान्तेन श्रुतिपरिग्रह एव तन्त्रीस्वनव्यापार इति सूचितम् । अनेन वाद्यानुगतगीतं वर्णितम् । दन्तान्तरालेति । अनेन पूर्वोक्तस्य मुखनैश्चल्यस्य हेतुरुक्तः । व्याजिह्माङ्गा इति । अनुभूतिक्रमेणाङ्गानां श्रोत्रान्तिकपिण्डीकरणेच्छयेव प्रतिक्षणं वक्रता कथिता । त्वद्दर्शने ईषद्वलितकन्धरा एव । ततोऽपीदानीं विशेष इति प्रकाश्यते । अतः सम्यगुपलक्षितमिति । अनेन विस्मयस्तदुत्थापितमौत्सुक्यं च व्यज्यते ॥ १३ ॥

एवमनाघ्रातविषयस्य विकारोन्मुखं चित्तमालक्ष्य पुनरपि तत्रैव प्रसारयितुं नर्मसचिवः पृच्छति—कोनुखल्वेष तपोवने गायति । तपोवने नृत्तगीतादिप्रसरविपक्षभूते । कस्य पुंसः एवमनुचितं प्रागल्भ्यमिति ॥

१. 'तः । कम्पितं स्फुरितं त्रिभिन्नं लीनं त्रिरूपम् आन्दोलितम् आहतम् । कम्पात्' क. पाठः. २. 'त्रिरूपं' घ., 'त्रिरिपुं डो' क. पाठः.

**नायकः — यथा कोमलाङ्गुलितलाभिहन्यमाना नातिस्फुटं क्वणन्ति तन्त्र्यः, काकलीप्रधानं च गीयते, तथा तर्कयामि** (अङ्गुल्यग्रेणाग्रतो निर्दिशन्) **अस्मिन्नायतने देवतामाराधयन्ती काचिद् दिव्ययोषिदुपवीणयतीति ।**

अस्योत्तरमवधार्याह—यथा तन्त्र्यः नातिस्फुटं क्वणन्ति तथा तर्कयामीति संबन्धः । नातिस्फुटमित्यत्रोपपत्तिं कल्पयति—कोमलाङ्गुलितलाभिहन्यमाना इति । क्वणनस्य नातिस्फुटत्वेनाङ्गुलीनां कोमलत्वं कमलान्तर्दलानामिव मृदुत्वं कल्पयितुं शक्यम् । नातिस्फुटशब्देन स्वरपरिपूर्तेर्न वैषम्यं, प्रत्युत हृद्यतैवेति द्योत्यते । काकलीप्रधानं च गीयत इति । अत्र चाप्तोपदेशसिद्धो निषादवानेव काकलीसंज्ञो भवति । को दृष्टान्तः । यथा हि षण्णां रसानां मध्येऽन्यतमः क्षारसंज्ञितो भवति । एवं लक्षिता या काकली, तत्प्रधानं गीयते । अत्र निषादस्य द्विश्रुतित्वादनुदात्ताविष्टत्वाच्च मन्दशक्तीनां स्त्रीणां प्रयोगे प्राचुर्यं कल्प्यते । तथा तेन प्रकारेण, गात्रतन्त्रीनिबद्धेन लिङ्गेन तर्कयामि । अस्मिन्नायतन इति अभिनयपूर्वं निर्देशः । अत्र,

"ददर्श तत्र कैलासशिखरास्फारविग्रहम् ।
शशाङ्कितपताकान्तं गौर्याः प्रासादमुन्नतम् ॥
स्वयमेत्य सितच्छायास्पष्टीकृतदिगन्तरम् ।
स्थितं दुहितृवात्सल्यादिव तत्र हिमालयम् ॥"

इति क्षेमराजकथानुबन्धः सूचितः । देवतामाराधयन्तीति । आयतनस्य देवतासंबन्धित्वं विन्यासेनैव सिद्धम् । तत एव तां देवतामाराधयन्ती तच्छेषतया वीणया स्तौति । देवतामाराधयन्तीत्यनेन तस्यानुपपत्तिं परिहरति । देवताराधने गीतस्य सर्वत्रौचित्यात्,

"अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः ।
गन्धर्वाणां च यदिदं तस्माद् गान्धर्वमुच्यते ॥"

१. 'इयं' मुद्रितकोशपाठः ।

**विदूषकः**—(क) भो वअस्स एदं देवाअदणं पेक्खह्म ।

**नायकः**—साधूक्तम् । वन्द्याः खलु देवताः । (उपसर्पन् सहसा स्थित्वा) वयस्य ! कदाचिद् द्रष्टुमनर्होऽयं[2] जनो भवि-

(क) भो वयस्य ! एतद् देवायतनं पश्यावः ।

इति मुनिवचनात् । दिव्ययोषिदिति । देशौचित्याद् मानुषीष्वेवं गानासंभवाच्च कल्प्यते । योषित्पदेन कोनुखल्विति शङ्का निरस्ता । इतिशब्दस्तर्कप्रकारोपसंहारे ॥

एवं देवायतनप्रस्तावादेर्निनीषुराह—एतद् देवायतनं पश्याम इति । गीतविशेषप्रशंसाप्रकारेणास्यौत्सुक्यमालक्ष्य गायिकादर्शनेन तदेव परिपोषयितुमस्य निर्बन्धः । देवायतनं पश्याम इति तच्चित्तानुसरणप्रकारः ॥

एवमुक्ते देवतादर्शनापेक्षयानेन कथितमिति मत्वाह—साधूक्तं, वन्द्याः खलु देवताः, तत् त्वदुक्तिमनुसरामीत्यर्थः । उपसर्पन् सहसा स्थित्वेति । विमर्शे किञ्चिदनौचित्यमाशङ्कमान आह । कदाचिदिति पाक्षिकशङ्कायाम् । द्रष्टुमनर्हः कुलस्त्रीत्वादिना । देवतादर्शनमस्माकमपेक्षितम् । तत् परस्परदर्शनस्य पक्षे परिहर्तव्यत्वात् । अनेन सन्निधिलब्धेन तिरोहितौ अवसरं प्रतिपालयावः । कस्यापि वैषम्यं मा भूत् । इत्युक्त्वा तेन सह तिरोहितः ॥

अथाद्भुते दत्तपदस्य नायकचेतसो रतौ प्रवेशं वर्णयितुं नायकमुखेनैव काचिद् दिव्ययोषिदित्यादिना प्रकारान्तरेण सूचितं नायिकाप्रवेशं प्रतिपादयति । तत्र पूर्वमेव गुणश्रवणेनाभिलाषविषयीकृतस्यास्यैव

१. 'कः—वयस्य! साधूक्तं भवता । वन्दनीयाः' ख, २. 'यं स्त्रीजनो भवति। तदावां तमा' मुद्रितकोशपाठः.

ष्यति । तदनेन तावत् तमालगुल्मेनान्तरितौ देवतादर्शनावसरं प्रतिपालयावः । (तथा कुरुतः) ।

(ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च । )

**नायिका** — (वीणया सह गायति । )

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥ १४ ॥

---

नायकस्य भर्तृत्वेन लाभाय भगवतीभजनम् । ततः स्वप्ने तदनुग्रहलाभपरितोषेण तमेव वरं हृदि निधाय सविशेषं पूजां विधाय तदन्ते वीणया सह गानपूर्वं देवीं प्रार्थयते । तत्र,

"कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः"

इति विशेषविधिमनुसृत्य उत्तमदेवताया वागुपहारे संस्कृतमङ्गीकरोति । उत्फुल्लेति संबोधनं मूर्तिभेदानुसन्धानपरम् । तत्र परमकूटस्थायाः संविद्रूपिण्याः परदेवतायाः साध्यानुगुणसकलविग्रहपरिकल्पने शरदादिषु नवविकाससुन्दरं यत् कमलं, तस्य बहलकेसरपरिस्फुटोऽयं परागसञ्चयः, तद्वत् पीता द्युतिर्यस्याः इति अनुसन्धाने प्रधानभूतस्य रूपस्य साक्षात्कारपूर्वकं संबोधनेन मूर्तिभेदानुगुणानामवयवादीनां संग्रहः सिद्धः । एवंविधदेवतावर्णानुसन्धानस्य वशीकरणसाधनत्वं 'ये सिन्दूरे'त्यादिना पूर्वैरुक्तम् । अत्र उत्फुल्लकेसरपरागाणामवाच्यत्वं, कमलद्युते इत्येतावतैव विवक्षितार्थसिद्धिः इति व्यक्तिविवेककारेण यद् दूषणमुदघोषि, तदात्मनः पौरोभाग्यविलसितेनैव, न वस्त्वनुसारेण, यतः गौरीति वर्णप्राधान्येन देवताविशेषसंबोधनं, तेन तत्स्फुटीकरणाय प्रसिद्धोपमानपरिग्रहः, तद्विशेषणैः

---

१. 'का—(गा' मुद्रितकोशपाठः.

**नायकः**—(कर्णं दत्त्वा) वयस्य! अहो गीतम्। अहो वादित्रम्।

---

तद्गतवर्णगरिम्णा दार्ष्टान्तिकस्य कोऽपि विशेषः प्रतिपाद्यते। अन्यथा गौरीत्येवालं, किं दृष्टान्तपरिग्रहप्रयासेनेत्यलम्। ममाभिवाञ्छितमिति विनयेन विशेषं निगूह्य प्रार्थना। प्रसिध्यतु प्रतिबन्धरहितं सिध्यतु। भगवतीति।

"भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु"

इति प्रोक्तानां भगशब्दार्थानाम् एकाश्रयभूते!। अतः किं दुर्लभम् इति भावः। प्रार्थनयैव प्रसादस्य साधनत्वे सिद्धे युष्मदिति निर्देशो नियमार्थः, नान्यदत्र साधकं पश्यामीति। अन्यदत्र पौरुषमस्तीति मा निरूप्यताम्। अहं युष्मत्प्रसादमेकमेवाश्रय इति। हिशब्दस्यापि एतत्स्फुटीकरणादृतेऽन्यत् फलं न पश्यामि। अत्र विशेषकथनसौकर्यार्थमेकवचनान्ततया संबोधनम्। बहुमत्यपेक्षया बहुवचनं तच्छब्दोपाधिकमेव। बह्वर्थाविवक्षायां कथं बहुवचनमिति चेत्। एकस्मिन् बहुवचनं कथं विधीयत इति वैयाकरणः प्रष्टव्यः। अत्र बहुत्वस्फुरणनिमित्तं प्रतीतिवैषम्यं नास्ति, यतः प्रक्रमभङ्गदोषः। इत्येवास्माकमभिप्रायः। इतीमां गाथां वीणया सह गायति। पूर्वं गात्रप्रयोगः। पश्चात् तस्यैव यन्त्रप्रयोगः। पश्चाद् यन्त्रस्यैव स्वकरणबाहुल्येन द्रुतलये गीतार्थं विना प्रयोगः इति प्रकारत्रयमुपलक्षितं, तथानुवादात्॥ १४॥

एतच्छ्रुत्वा विस्मयेनाह—वयस्य! अमृतरसास्वादेऽसंविभागी भवानिति पश्चात् कोपं मा कृथाः। प्राप्तकालमवधानं देहि। अहो आश्चर्यसीमानमधिवसति गीतम्, अहो वादित्रं, तदर्धासने स्पर्धते वीणावादनप्रकारः। नैतच्चेतितम्। गानस्यैवात्र वैशिष्ट्यं वादनस्य तदनुसारित्वमेवेत्यस्माभिर्निरूपितम्। वादनश्रवणे तु डोलायते मन इत्यर्थः। अस्य

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः ।
गोपुच्छाप्रमुखाः क्रमेण यतयस्तिस्रोऽपि संवादिताः
सत्त्वौघानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः ॥

---

वैशिष्ट्यं शृणु । व्यक्तिर्व्यञ्जनधातुनेत्यादि । व्यक्तिः स्पष्टता । व्यञ्जनधातुनेति । धातुर्वाद्यवादनविधिः । यदुक्तं —

"विस्तारः करणश्चैव आविद्धो व्यञ्जनस्तथा ।
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रयाः ॥"

इति । तत्र व्यञ्जनधातुर्वीणावादनप्रकारः । तथा चोक्तं मुनिना —

"इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः"

इति । दाशविध्यं चोक्तं —

"व्यञ्जनधातोर्ज्ञेयं कलंतलनिष्कोटितं तथोत्कृष्टम् ।
रेफोऽवमृष्टपुष्पावनुस्वनो बिन्दुरधरश्च ॥"

इति ।

"अङ्गुष्ठाभ्यां तु यत् तन्त्रीस्पर्शनं स्यात् कलं तु तत् ।
वामाङ्गुष्ठकमूलेन पीडनं तु तलं स्मृतम् ॥
सर्वाङ्गुष्ठप्रहारश्च निष्कोटितमिहोच्यते ।
सव्यप्रदेशिन्याघात उत्कृष्टं परिकीर्तितम् ॥
सर्वाङ्गुलिसमाघातो रेफ इत्युच्यते बुधैः ।
तन्त्रीषु त्रिप्रकारं वा व्यवमृष्टमिति स्मृतम् ॥
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पं तु परिकीर्तितम् ।
तलस्थानेऽधरन्यासस्तथानुस्वनितं भवेत् ॥
गुर्वक्षरमयी तन्त्री बिन्दुरित्यभिधीयते ।
कनिष्ठाङ्गुष्ठकाभ्यां तु तन्त्रीभ्यामधरो गतम् ॥
व्यासस्समासादेषामनुबन्धः सार्वधातुको ज्ञेयः ।"

१. 'त' क. पाठः. २. 'र' ख. ग. पाठः. ३. 'म' क. पाठः.

आसारप्रसारविधिना सकलशाखासु सामग्रीमनुभवन् विस्तारः, शाखाभेदमात्रविधायी करणः, तदन्योन्यानुरूपमेलनकृदाविद्धः, सर्वस्याप्यस्य मूलभूतो व्यञ्जयति विशेषानिति व्यञ्जनधातुः । दशविधेनापीति । बहुभिरपि धात्ववयवैरहमहमिकयात्र वादिते तत्तत्काले स्वप्राकाश्यं प्रथीक्रियते । अमुना त्रिधा विस्पष्टोऽयं लय इति व्यक्तिमुपगच्छता व्यञ्जनधातुनैव सह लयभेदोऽप्यभिव्यक्तः । अयमिति लयप्रकाराणामसङ्कीर्णानुभवं दर्शयन् हन्तावधानं देहीति तं बोधयति । नामतोऽपि लयभेदानुदीर्य पुनस्त्रिधेत्युक्तिस्तत्रैव राद्धादिभेदानुगतिव्यञ्जिका । पाणीनां त्रिविधः संयोगो राद्धं विद्धं शय्यागतमिति । एषु व्यवस्थितपाणिप्रयोगाणां लयानां यतीनां च संश्लेषनियमः । तद् यथा—

"समा यतिर्लयश्चैव द्रुतो यत्र भवेदिह ।
तथैवोपरिपाणिश्च राद्धं वाद्यं तु तद् भवेत् ॥
अवपाणिस्तु यत्र स्यात् प्रयोगो लम्बितो लयः ।
गोपुच्छा च यतिर्वाद्यं तद्वै शय्यागतं भवेत् ॥
स्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिप्रयोगश्च विद्धवाद्यं तु तद् भवेत् ॥"

एषु पुनस्तत्त्वौघानुगता इति त्रयो भेदाः । एते सर्वे लयादयः प्रयोगे परस्परपरिस्यूताः । अपिशब्देन व्यञ्जनधातोः परिपूर्णत्वमुक्तम् । द्रुतमध्यलम्बितपरिच्छिन्न इति । लम्बित इति विलम्बित उच्यते । यदुक्तं—

"तालान्तरालवर्ती यः स कालो लय उच्यते ।
त्रिविधः स च विज्ञेयो द्रुतो मध्यो विलम्बितः ॥"

इति । यतिर्विच्छेदः । तदुक्तं—

"तालच्छन्दोवगतिविधये वाद्यते यो विरामो
वाद्यैर्हीनः श्रवणसुभगो नामतः सा यतिः स्यात् ।"

इति,

"लयगानाद् यतिः सम्यक् कथिता दत्तिलादिभिः ।
समा स्रोतोवहा चैव गोपुच्छा चेति सा त्रिधा ॥"

**चेटी** — (क) भट्टिदारिए! चिरं खु वाइदं। ण खु दे परिस्समो अग्गहत्थाणं।

**नायिका** — (ख) हञ्जे! चउरिए! भअवदीए पुरदो वादयन्तीए कुदो मम परिस्समो।

(क) भर्तृदारिके! चिरं खलु वादितम्। न खलु ते परिश्रमोऽग्रहस्तयोः।

(ख) हञ्जे! चतुरिके! भगवत्याः पुरतो वादयन्त्याः कुतो मम परिश्रमः।

इति च। अतो गोपुच्छाप्रमुखा इति पाठो न तु गोपुच्छ इत्यदीर्घान्ततया। तत्त्वौघानुगता इति। अत्रोक्तं—

"त्रिविधं गीते कार्यं वादित्रं वैणमेव वाद्यज्ञैः।
तत्त्वं तथाप्यनुगतमोघो वा नैककरणं तु॥
लयतालवर्णपदयतिगीत्यक्षरवादकं भवेत् तत्त्वम्।
गीतं तु यदनुगच्छत्यनुगतमिति तद् भवेद् वाद्यम्॥
आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च।
अनपेक्षितगीतार्थं वाद्यमथौघो विधातव्यम्॥"

इति। अन्यथाप्येतेषां लक्षणं वर्णयन्ति। इदमेव मुनिमतमिति तदेव विवृतम्। अत्र सङ्ख्यानिर्देशेन लब्धा विस्पष्टं संवादिता दर्शिता इति विशेषकथनेन च पूर्णत्वं प्रयोगे जितश्रमत्वं च प्रतिपाद्यते। अत एव अहो इति विस्मयहेतुत्वं समर्थितम्॥

एवं नायिकाया वीणावादननिर्बन्धमालक्ष्य प्रसादाप्रदर्शनकृतं प्रत्यमर्षमन्तर्निधाय सोल्लुण्ठनमाह चेटी — भर्तृदारिके! चिरं खलु वादितम्। न खलु ते परिश्रमोऽग्रहस्तयोः। चिरवादनं परिश्रमहेतुः। ते इति सौकुमार्यातिशयेनाङ्गुलीनां तन्त्रीविमर्दासहत्वं प्रकाशितम्। परिश्रम एवात्र फलति, नान्यत् किञ्चिदित्यधिक्षेपगर्भोक्तिः॥ १५॥

एवं तस्याः साभिप्रायं वचनमनिरूप्य भक्त्यतिशयेन स्वपरिक्लेशविषय एव प्रश्न इति मत्वा प्रतिक्षिपति — हञ्जे! चतुरिके! भगवत्याः

**चेटी** — (साधिक्षेपम्) (क) भट्टिदारिए! णं भणामि किं एदाए णिक्करुणाए पुरदो वाइदेण[1] । एत्तिअं काळं कण्णआजणदुक्खरेहिं णिअमोपवासेहिं आराहअन्तीए ण दे पसादं दंसेदि ।

---

(क) भर्तृदारिके! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन । इयन्तं कालं कन्यकाजनदुष्करैर्नियमोपवासैराराधयन्त्या न ते प्रसादं दर्शयति ।

---

पुरतो वादयन्त्याः कुतो मे परिश्रमः । जगन्मातुरग्रे भक्तिपूर्वं वीणां वादयन्त्याः क्लेशासहिष्णोरपि तत्प्रभावेन परिश्रमहेतुः कोऽपि प्रकारो न सम्भावनीयः । अतो वादनं करोमि ॥

इति निजाभिप्रायमज्ञातवत्यास्तस्या भक्त्यनुगुणं वचनमाकर्ण्य साधिक्षेपमाह— भर्तृदारिके! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन । इयन्तं कालं कन्यकाजनदुष्करैर्नियमोपवासैराराधयन्त्या न ते प्रसादं दर्शयति । ननु भणामीति । त्वया मदुक्तेरभिप्रायो न ज्ञातः । अतस्तमपि विवृणोमि । निष्करुणाया इति । अस्या निष्करुणात्वं कार्येण कल्प्यत इति भावः । पुरत इति । पुरतः स्तवनं झटिति प्रसादहेतुरिति तव मनोरथ एव । एतत्सन्निधौ तदप्यन्यथा इति क्षेपः । तन्निमित्तं प्रतिपादयति— इयन्तं कालमिति । अनेनाराधनस्य चिरकालानुवृत्तत्वं प्रकाशितम् । साध्यगौरवेणान्यासामप्येवं प्रवृत्तिश्चेत् को विशेष इत्यत्राह— कन्यकाजनदुष्करैरिति । अन्यासामुमादेवीप्रभृतीनामपि नैवं सामर्थ्यम् । व्रतोपवासैः जपानुसन्धानपूजादिनियमैः तच्छेषैरुपवासैश्च आराधयन्त्याः दिवानिशमेतदेकपरायाः प्रसादम् अस्मत्साध्यं प्रत्यात्मानुग्रहनिमित्तभूतं परितोषं न प्रकाशयति । वरदानादिनेति शेषः । एतदपेक्ष्य मया परिश्रमप्रश्नः कृतः । न खलु निरन्तरशिक्षाजितश्रमायास्तवापाटवमाशङ्क्येत्यर्थः ॥

---

१. 'ण जा ए' मूलपाठः.

**विदूषकः** — (क) भो वअस्स ! कण्णआ खु एसा कीस ण पेक्खह्म ।

**नायकः** — को दोषः । निर्दोषदर्शना हि कन्यकाः । किन्तु कदाचिदस्मान् दृष्ट्वा बालभावसुलभलज्जासाध्वसान्न चिरमिह तिष्ठेत् । तदनेनैव तावल्लताजालान्तरेण पश्यावः ।

(उभौ पश्यतः ।)

**विदूषकः** — (दृष्ट्वा सविस्मयम्) (ख) भो वअस्स[1]! पेक्ख पेक्ख । एसा ण केवळं वीणाए कण्णाणं एव्व सुहं उप्पादेदि ।

(क) भो वयस्य ! कन्या खल्वेषा कस्मान्न पश्यावः ।

(ख) भो वयस्य ! पश्य पश्य । एषा न केवलं वीणया कर्णयोरेव सुखमु-

एवं तयोः संव्यवहारे कन्येयमिति निश्चित्य प्रेरको नर्मसचिवः साभिप्रायमाह—कन्यका खल्वेषा कस्मान्न पश्यावः । कुलकलत्रशङ्कया दर्शनं परिहृतम् । इयं कन्यका । अतः कस्माद् अतिकुशलाया अस्या वैरूप्याद्वा असौकर्याद्वा अस्माकं नीरसत्वाद्वा दर्शनाभावः । सर्वथा दृश्यैवेयम् । तत् किं कालप्रतीक्षणेन । गच्छावः ॥

इति तस्य प्रेरणमनुसृत्याह— को दोषः परकलत्रदर्शन एव दोषः । निर्दोषदर्शना हि कन्यकाः । हिशब्देन नैतदस्मदपेक्षया कल्पितं पूर्वसिद्धमेवेति द्योत्यते । तर्हि गच्छावः इत्यत्राह — किन्त्विति । कदाचिदिति पाक्षिकोऽप्यन्तरायः परिहर्तव्यः । बालभावसुलभलज्जासाध्वसाद् बालभावेन सुलभा अयत्नसाध्या या लज्जा तया साध्वसं भीतिः, तस्मान्न चिरमिह तिष्ठेत्, पलायेतैव । तदस्मन्निमित्तं साध्यविरोधो भवेत् । अस्माकमपीयमपसरत्विति न बुद्धिः । तद् उभयाविरोधेनैव । तावदिति क्रमापेक्षया । लताजालच्छिद्रेण प्रथमं पश्यावः । अवसरे पुनर्गन्तव्यमित्यर्थः ॥

अथ तथावलोकने स मार्गदर्शी सकौतुकं विस्मयारूढस्य नायकचेतसः रतिसागरसुखावताराय प्रश्नद्वारेण मार्गपरिशोधनं करोति — भो

१. 'स्स अच्छेरं । ए' मूलपाठः.

इमिणा (वीणा) विण्णाणाणुरूवेण रूवेण अक्खीणं पि सुहं उप्पादेदि। का वुण एसा, किं दाव देवी, आदु णाअकण्णआ, आहो विज्जाहरदारिआ उदाहो सिद्धउळसंभवत्ति।

**नायकः —** (सस्पृहमवलोकयन्) वयस्य! केयमिति नावगच्छामि। एतत् पुनरहं जाने।

---

त्पादयति। अनेन (वीणा)विज्ञानानुरूपेण रूपेणाक्ष्णोरपि सुखमुत्पादयति। का पुनरेषा, किं तावद् देवी, अथवा नागकन्यका, आहोस्विद् विद्याधरदारिका, उताहो सिद्धकुलसम्भवेति।

---

वयस्य! पश्य पश्य एकवारं दर्शने कियत् फलितम्। पौनःपुन्येन इदमेव चक्षुषो रूपं विषयतामर्हति नान्यदिति द्योत्यते। श्रोत्रसुखमेवानया सिध्यतीति निरूपितम्। वीणाविज्ञानं वीणाकौशलं तदनुरूपेण हृद्यतया तत्सब्रह्मचारिणा रूपेणानाकलितभूषाद्याडम्बरेण सौन्दर्येणाक्ष्णोरपि सुखमुत्पादयति। दृष्टिपात एव प्रीतिर्भवतीति भावः। अतः सर्वथास्या वंशः कथ्यताम्। तत् का पुनरेषा भविष्यति। किं तावद् देवी, उत नागकन्यका, आहोस्विद् विद्याधरदारिका, उताहो सिद्धकुलसम्भवा इति। कथ्यतामिति वाक्यशेषः॥

इति तद्वचनं निजमनोनुसारि निशम्य विस्मयाकृष्टमानसो विवशं रतिसागरे प्रवेशोन्मुखः तद्वचनानुसारपुरःसरं विशेषकथनेन स्त्रीरत्नस्य लोकोत्तरत्वमुपपादयति— वयस्येति। अत्र त्वत्सब्रह्मचारित्वमेव ममापि। केयं किञ्जातीया इति नावगच्छामि तत्तज्जातिषु तरुणीरूपेषु भेदेन दृष्टेषु कुत्रापीदृशस्य रूपस्यादृष्टत्वादिति भावः। तर्हि किमपि न जानीषे इति चेत् तन्नेत्याह — एतत्पुनरहं जाने। पुनरिति विशेषे। तिष्ठतु वंशः, रूपावलम्बनेनान्यं विशेषं कथयितुं त्वत्तो मम पाण्डित्यमस्तीति। अनेन तद्गुणवर्णनौत्सुक्यं व्यज्यते॥

**स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुःसहस्रं हरे-**
**र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सति।**

---

तदेव स्फुटयति— स्वर्गस्त्रीति। अन्यासां देवयोनित्वाद् मुख्यतया स्वर्गस्त्रियः शच्यादयः। तासां मध्ये काचिदियं यदि, इयमिति पूर्ववाक्यादनुषङ्गः। तत् तर्हि कृतार्थं संपादितनिजबाहुल्यानुगुणलोकोत्तरफलम् अन्येषामपि नयनबाहुल्यरुचिसम्पादकमभवत्। प्राथमिकेन दर्शनेन जन्मसाफल्यं वारं वारं दर्शने किमुच्यताम् इति लङा निर्देशः। अस्माकं बहुत्वस्य किं फलम् अन्यच्चक्षुर्द्वयं यत् पश्यति तदेव वयमपि इति, किमेभिर्बहुभिः कार्यं न त्वेतदनुरूपविषयसिद्धिः तत् कोऽस्मत्तो विशेष इति सजातीयपरिहासशङ्कया च पूर्वं खेदः। सोऽपनीत इति कर्तृत्वेन द्योत्यते। एवं प्रथमप्रश्नं प्रति विशेषमुक्त्वा द्वितीयं प्रत्याह— नागी चेदिति। रसातलं तमोमयत्वेन प्रसिद्धम्। अस्या मुखे सति यत्र कुत्रापि प्रकाशमाने शशभृता पूर्णचन्द्रेण न शून्यम्। लोकान्तरे कादाचित्कमेव पूर्णचन्द्रसाहित्यं, तत्र न तथा इति लोकान्तराद् व्यतिरेको रसातलस्य व्यज्यते। पूर्णे शशव्यक्तिरिति शशभृच्छब्देन पूर्णत्वं गम्यते, मुखस्याध्यवसायाच्च। अत्र लोकस्यैव वैशिष्ट्यम्। विद्याधरी चेदिति। प्रश्नानुसारेण निर्देशः। जातिर्न इति पूर्वं कुलाभिमानेनास्था। एतत्सम्बन्धेन कुलाभिमानोऽपि मह्यं रोचतेतराम् इति व्यज्यते। अत एव सकलान्यजातिजयिनीत्युक्तम्। सकलां लोकत्रयप्रसृतां सुरासुरादिजातिं जेतुं शीलमस्या इति. शीलं कदाचिन्नापगच्छतीति आकल्पान्तमतिशयिनी भविष्यतीत्यर्थः। सिद्धान्वयजा स्यादिति। तत्र संभावनाप्रकर्षात् स्यादिति निर्देशः। तत्र स्त्रीरत्नबाहुल्यस्य पूर्वोपलक्षितत्वात् म(ह?)दन्तःकरणस्य तत्त्वप्रसराच्च संभावनाधिक्यम्। त्रिभुवने प्रसिद्धा इति। ततः एतज्जन्मना अन्येभ्यः प्रसिद्धाः। अनर्घस्य कौस्तुभस्य जन्मना मकराकरस्य रत्नाकरत्वमाकल्पं यथा जागर्ति,

जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियं
स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥

विदूषकः — (नायकमवलोक्य सहर्षमात्मगतम्) (क) दिट्ठिआ चिरस्स दाव कालस्स पडिदो खु एसो गोअरे वम्महस्स । (आत्मानं निर्दिश्य) अहवा मम एव्व बह्मणस्स ।

---

(क) दिष्ट्या चिरस्य तावत् कालस्य पतितः खल्वेष गोचरे मन्मथस्य । अथवा ममैव ब्राह्मणस्य ।

---

तथेत्यर्थः । एवं कौतुकानुसारेण लोकोत्तरतरुणीदर्शनेन नयनप्रीत्यनन्तर-भाविरतिसमावेशः ।

"रम्यदेशकलाकालवेषभोगादिसेवनैः ।
प्रमोदात्मा रतिः सैव यूनोरन्योन्यसक्तयोः ॥
प्रकृष्यमाणः शृङ्गारः"

इत्युक्तक्रमेण कलाकौशलोद्दीपितः सप्रेमदृष्टिपातरोमोद्गमादिभिः गुणवर्णनरूपवागारम्भानुभावेन च सत्त्वमाक्रम्य प्रादुर्भूतः ॥ १६ ॥

ततः

"तां दृष्ट्वा विस्मयोत्फुल्ललोचनस्तन्मयोऽभवत् ।
क्षिप्रं नवावतारेण कामेन तरलीकृतः ॥"

इति कथानुसारेण विवशं तमालोक्य नर्मसचिवः स्वसेवासौकर्यं चिराभिलषितं निरूप्य स्वयमेव वदति — दिष्ट्या । नैतन्मया निरूपितम् । शान्तपथप्रस्थितोऽसौ कथमपि भोगसरणिं प्रापितः । अतः परं मद्विधेय एवेति हृष्यन्नाह ॥

**चेटी**—(सप्रणयम्) (क) भट्टिदारिए! णं भणामि किं एदाए णिक्करुणाए पुरदो वाइदेण। (इति वीणामाक्षिपति।)

**नायिका**—(ख) हञ्जे! मा मा भअवदिं गौरिं अहिक्खिवं। अज्ज किदो मे भअवदीए पसादो।

**चेटी**—(सहर्षम्) (ग) भट्टिदारिए! कहेहि दाव कीरिसो सो पसादो।

(क) भर्तृदारिके! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन।

(ख) हञ्जे! मा मा भगवतीं गौरीमधिक्षिप। अद्य कृतो मे भगवत्या प्रसादः।

(ग) भर्तृदारिके! कथय तावत् कीदृशः स प्रसादः।

ततो भगवतीप्रसादादर्शनेन कुपिना चेटी तत्प्रशंसां निरस्यति—भर्तृदारिके! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेनेति। पुनः पुनः कथनेऽपि मूढया त्वया न ज्ञायते। तत् क्रियया रुणध्मि इति तत्कराद् वीणामाक्षिप्तवती॥

तदसहमाना नायिकाह—हञ्जे! मा मा भगवतीं गौरीमधिक्षिप। अद्य कृतो मे भगवत्या प्रसादः। मामेत्यनौचित्याद् वीप्सया निषेधः। भगवतीं गौरीम् इति स्वतोऽधिक्षेपानौचित्यम्। प्रसादाप्रकाशनादधिक्षेप इति चेत् तदपि न युक्तमित्याह—अद्य कृतो मे भगवत्या प्रसादः, सिद्धप्रसादया मया स्तूयते, अतोऽपि नाधिक्षेपो युक्त इत्यर्थः॥

तच्छ्रुत्वा तज्जिज्ञासया सहर्षं सा पृच्छति—भर्तृदारिके! कथय तावत् कीदृशः स प्रसादः। एतन्मया न चेतितम्। अतस्तवैवापराधः। तदिदानीमपि तावत् कथय तत्स्वरूपामित्यर्थः॥

१. 'विअ। अ'

**नायिका** — (क) हञ्जे ! अज्ज जाणामि सिविणए एव्वं एव्व वीणं वादअन्ती भअवदीए गौरीए भणिदह्मि । वच्छे ! परितुट्ठह्मि तुह एदिणा वीणाविण्णाणादिसएण इमाए बाळजण-

---

(क) हञ्जे ! अद्य जानामि स्वप्न एवमेव वीणां वादयन्ती भगवत्या गौर्या भणितास्मि । वत्से ! परितुष्टास्मि तवैतेन वीणाविज्ञानातिशयेन अनया बालजन-

---

इति तया पृष्टा सादरमाह — हञ्जे ! अद्य जानामि स्वप्ने एवमेव वीणां वादयन्ती भगवत्या गौर्या भणितास्मि । वत्से ! परितुष्टास्मि तवैतेन वीणाविज्ञानातिशयेन, अनया बालजनदुर्लभयासाधारणया ममोपरि भक्त्या च । तद् विद्याधरचक्रवर्ती अचिरेण ते पाणिग्रहणं निर्वर्तयिष्यतीति । अद्येति । अतीताया रात्रेः पश्चिमे यामे । अनेन स्वप्नफलस्याविलम्बः प्रकाश्यते । चरमयामस्वप्नफलस्य तथा प्रतिपादितत्वात् । जानामीति । अविस्मरणदार्ढ्याय वाक्यारम्भे वाक्यान्तरम् । अद्य स्वप्न इति संबन्धः । स्वप्न इति स्वप्नदर्शनस्य साक्षाद्दर्शनवत् कृतार्थताप्रकाशनात् प्रसादः कृत इति मयोक्तम् । एवमेवेति । यथेदानीं तथा स्वप्नेऽपि प्रार्थनागर्भं वीणां वादयन्ती, अस्मत्स्तुतिकल्पनानुरूपरूपया भगवत्या भणितास्मि । वत्से ! इत्यारभ्य इतीत्यन्तं भणनप्रकारः । वत्से ! इति वात्सल्यातिशयेन पुत्रीवत् संबोधनम् । परितुष्टास्मि । अस्मत्परितोषणार्थं तव प्रयत्नः, स सफलो जात इति भावः । तत्र हेतुः अमुना वीणाविज्ञानातिशयेनेति । वीणाप्रयोगकौशलातिशयेन । अनया निरन्तरसेवाविष्कृतया बालजनदुर्लभया । तत्त्वज्ञानां तपस्विनामेवेदृशी भक्तिर्घटते, न मुग्धानां कन्यकानाम् । अत एवासाधारण्यं देवतान्तरातिशयाच्च । ममोपरि मयि । भक्त्येति भक्तिपूर्वकस्य व्रतोपवासादेरप्यङ्गीकारः सिद्धः । तत्रापि भक्तिरेव निमित्तमिति भक्तिग्रहणम् । एवं कारणगौरवात् परितोषरूपकार्यगौरवं प्रतिपाद्य तत्फलं प्रकाशयति । तत् तस्मात् प्रसादप्रकर्षादित्यर्थः । विद्याधरचक्रवर्तीति पश्चादवस्थां प्रति पूर्वनिर्देशः । वाजपेययाजी पुत्रो जनिष्यत इतिवत् । यः पाणिग्रहणं निर्वर्तयिष्यति स चक्रवर्ती च भविष्यति ।

दुल्ळहाए असाहारणाए ममोवरि भत्तीए अ। ता विज्जाहर-चक्कवट्टी अइरेण दे पाणिग्गहणं णिव्वट्टइस्सिदित्ति।

**चेटी** —(क) भट्टिदारिए जइ एव्वं किस्स सिविण-एत्ति भणासि। णं हिअएच्छिदो एव्व देवीए वरो दिण्णो।

**विदूषकः** —(ख) भो वअस्स! अवसरो खु अह्माणं

दुर्लभयासाधारणया ममोपरि भक्त्या च। तद् विद्याधरचक्रवर्ती अचिरेण ते पाणिग्रहणं निर्वर्तयिष्यतीति।

(क) भर्तृदारिके! यद्येवं कस्मात् स्वप्न इति भणसि। ननु हृदयेष्ट एव देव्या वरो दत्तः।

(ख) भो वयस्य! अवसरः खल्वस्माकं देवीदर्शनस्य। तदेहि प्रवि-

तथा च सम्पादयामीत्यभिप्रायः। चक्रवर्त्तीति। न यस्य कस्यापि त्वत्पाणिग्रहणौचित्यमिति सिद्धवत् कृत्वा चक्रवर्ती निर्वर्तयिष्यतीत्युक्तम्। अचिरेणेति प्रकारप्रकर्षद्योतनम्। एवं स्वप्ने सिद्धे तत्स्फुटीकरणाय मया प्रार्थ्यते। तत् कृतप्रसादां भगवतीमधिक्षेप्तुं न युक्तमिति तात्पर्यम्॥

एवं स्वप्ननिवेदने प्रहृष्टा सा प्ररोचनार्थं तस्यैव श्लाघां करोति—भर्तृदारिके! यद्येवं कस्मात् स्वप्न इति भणसि। ननु हृदयेष्ट एव वरो देव्या दत्तः। स्वप्ने भगवत्या भणितास्मीति त्वयोक्तम्। किमेवं गुरुतरवरलाभं स्वप्नशब्देन लघूकरोषि। चिरकालमनन्यपरेण मनसा प्रार्थितो वरो दत्त एव इत्येवकारो भिन्नक्रमः। अतः 'अभिवाञ्छितं प्रसिध्यत्वि'ति पुनर्वचनमप्यधिकोक्तिरेव। तत् प्रसादसिद्धिमत्र विश्वसिहीत्यभिप्रायः॥

एवं तयोः संव्यवहारे आत्मप्रवेशावसरमाकलय्य नर्मसाचिव्यं निर्वोढुमिच्छुश्छलेन तं त्वरयति—भो वयस्य! अवसरः खल्वस्माकं देवीदर्शनस्य। तदेहि प्रविशावः। भो वयस्येति। प्रथमं गीतश्रवणं, तदनुसारेणात्रागमनं, ततोऽनिश्चयेन तिरोधानं, पुनः कन्यात्वनिश्चयेन

देवीदंसणस्स । ता एहि पविसह्म । (उपसर्पतः) (अनिच्छन्तमिव नायकं बलादाकृष्य) होदि ! सच्चं एव्व एसा भणादि वरो एव्व एसो देवीए दिण्णो ।

**नायिका** — (ससाध्वसमुत्तिष्ठन्ती)(क) हञ्जे ! को णु खु एसो ।

---

शावः । भवति ! सत्यमेवैषा भणति वर एवैष देव्या दत्तः ।

(क) हञ्जे ! को नु खल्वेषः ।

---

दर्शनं, तत्कौतुकेन वंशविचार इति प्रसङ्गानुप्रसङ्गेनागतान्यवस्थान्तराणि देवीदर्शनावसरप्रतिपालनशेषतया । इदानीं तस्यावसरो जातः । तत् किमिति विलम्ब्यत इति तत्पारवश्यमजानन्निव तद्रूपामृतनिमग्नदृष्टिं चलितुमप्यनपेक्षं नायकमवसरे बलादाकृष्य समीपं प्राप्य तद्वचनं साधारण्येनानुवदति — वर एवैष देव्या दत्त इति । यथा त्वयोक्तं तथैव वर एवैषः भर्तृत्वेन प्रार्थितः । देव्या चानुगृहीत एष महापुरुषः प्राप्तः । तदयमङ्गीक्रियतामिति ध्वनितम् ॥

तदा देवीवरलाभेन कृतार्था वरदानप्रकारं सख्यै निवेदयन्ती सहसा समागतं तमालोक्य,

"लक्ष्मीविलासभवनं भुजस्तम्भविभूषितम् ।
सापि लावण्यनलिनी राजहंसं विलोक्य तम् ॥
लज्जोन्मज्जत्तरलताकम्पसंपत्तरङ्गिता ।
असूत्रमौक्तिकलता बभूव स्वेदबिन्दुभिः ॥"

इति कथानुसारेण तस्यामपि दत्तपदे मदने चतुरिका तदङ्गचातुरीं निरूप्य विमृशति — अनयान्योन्यसदृश्याकृत्या एष स भगवत्याः प्रसाद इति तर्कयामि । अन्योन्यसदृश्या सौन्दर्यादिभिरन्योन्यानुरूपया प्रसादः प्रसादलब्ध इत्यर्थः ॥

**चेटी—** (नायकं निरूप्य) (क) **इमाए अण्णोण्णसरिसीए आकिदीए एसो सो भअवदीए प्रसादत्ति तक्केमि ।**

(नायिका सस्पृहं सलज्जं नायकमवलोकयन्ती तिष्ठति ।)

**नायकः—**

तनुरियं तरलायतलोचने!
श्वसितकम्पितपीनघनस्तनि! ।
श्रममलं तपसैव गता पुनः
किमिति संभ्रमकारिणि! खिद्यसे ॥ १७ ॥

---

(क) अनयान्योन्यसदृश्याकृत्या एष स भगवत्याः प्रसाद इति तर्कयामि ।

---

तद्दशामालक्ष्य नायकश्चाटुगर्भमाह—तनुरित्यादिना । इयं तनुः तपसैव अलं श्रमं गता पुनः किमिति खिद्यसे । अस्याः श्रममापादयितुं तव प्रयत्नः । स पूर्वं तपसैव सिद्धः । किमित्यात्मखेदेन तदर्थं यतसे । तव खेदे श्रान्तायास्तनोः पुनरपि खेदो भवेत् । तत् खेदं मा कृथा इत्यर्थः । यद्येवं न व्याख्यायते तनुः पूर्वमेव श्रमं गता पुनः किमिति खिद्यत इति वक्तुं युक्तं न तु वैयधिकरण्येन खिद्यस इति । अस्याखेदापनयनप्रार्थनं चापेक्षितमिति दुर्घटं भवेत् । इयमिति । अस्मन्नयनचकोरचन्द्रिका पुरः शोभमाना । तनुरिति शब्दशक्त्या कार्श्यमपि स्फुरति । तच्च श्रमासहत्वानुगुणम् । इदमा च रूपचातुर्यकान्तिलावण्याद्यनुभवश्च वक्तृसाचिव्येन व्यज्यते । तपसेति । न तूपवासेन जपादिना वा । शीतातपक्षुत्पिपासादिसहिष्णुभिर्मुनिभिः साध्येन दिवानिशं देहमनःपीडावहेन । एवकारेण श्रमसर्वस्वसंपादनायेदमेवालं किमन्येनान्विष्टेनेति द्योत्यते । तपसेति । अहो दुष्करेऽप्यध्यवसाय इति बहुमानश्च व्यज्यते । तपसः सिद्धवत्कथनेन पान्थबुद्धिमस्मासु मा कृथाः त्वद्वृत्तान्तो जिज्ञासुभिरस्माभिरवगत एवेति विस्रम्भारम्भो व्यज्यते । इयं तनुस्तपसा श्रम-

मिति कर्तृकर्मसाधनानामनौचित्येन साध्यनिर्बन्धेन साधनवैषम्यं न निरूपितम् । को हि नाम मालतीमालया मत्तहस्तिनं ग्रहीतुमिच्छति । अहो साहसिकत्वमित्याधिक्षेपश्च व्यज्यते । इयं तनुरिति । किमर्थं तपः, न खलु महार्घस्य माणिक्यस्य क्रेतृसमन्वेषणव्यग्रता शोभते इति च द्योत्यते । 'श्रमः खेदोऽध्वरत्यादेः' इति भावत्वेऽपि सादादिकार्येण तनावुपचरितः। गतेति शोषणादिना यत्नेन ज्ञातुं शक्येत्यनुकम्पा च व्यज्यते, अभ्युत्थानवचनादिष्वसामर्थ्यं च । पुनरिति श्रमस्य परकाष्ठां गमितयानया प्रायशः सत्तालावण्यमात्रशेषतया किं करिष्यसीति व्यज्यते । किमिति कस्मात् । न खल्वस्मास्वविस्रम्भेण लज्जया भयेन वा खेदो युक्तः । तन्मुग्धतैवात्र हेतुरिति व्यज्यते । खिद्यसे अनुबन्धेन खेदकार्यं प्रकाशयसि । कथं खेदो ज्ञायत इति चेत् । संभ्रमकारिणि पुनःपुनः संभ्रमं लज्जापुरःसरं भयं प्रकाशयसि । तव संभ्रमे तनोः श्रमो दुष्परिहर इत्याह — तरलायतलोचने! लोचनयोः स्वाभाविकमायतत्वमनूद्य संभ्रमकारितया तात्कालिकं तरलत्वं विधेयम् । तरले आयतलोचने यस्या इति । अन्यथा तव लोचने आयते इत्यतिस्फुटे चाटुभाषणे नायकस्य गाम्भीर्यं ह्रियते । एवमुपर्यपि । तरले संभ्रमेण प्रवातनीलोत्पलवद् विसंस्थुले । अत्र 'प्रकामविस्तारफलं हरिण्य' इतिवदुचितविषयलाभे सति हि साफल्यं, तदभावेन परिभ्रमन्ती इवेति व्यज्यते । श्वसितकम्पितपीनघनस्तनि! श्रमनिमित्तेन निरन्तरं निःसरता श्वसितेन कम्पितौ चलितौ पीनघनौ प्राप्तसमुचितपरिणाहोच्छ्रायौ सान्द्रौ अवकाशालाभेन शान्तसंघर्षौ श्लिष्टौ स्तनौ यस्याः । अत्र श्वसितप्रकर्षेण स्तनवेपथुः तेन श्रमप्रकर्षश्च व्यज्यते । तत् पूर्वमेव श्रान्तायास्तनोः श्रमनिमित्तं संभ्रमं तन्निमित्तं खेदं च परित्यज्य स्वैरमास्व । न खलु वयं तव स्वैरासिकाविरोधिनः प्रत्युतानुकूला एवेति रतिसुधासेकसुभगो नायकस्य चाटुविशेषो व्यज्यते ॥ १७ ॥

---

१. 'षादि' ग. पाठः.

**नायिका**—(क) हञ्जे! अदिसक्खसेण ण सक्कुणोमि एदस्स संमुहे ठादुं ।

(नायकं तिर्यक्सलज्जं पश्यन्ती किञ्चित् परावृत्तमुखी तिष्ठति।)

**विदूषकः**—(ख) भोदि! किं एत्थ तुह्माणं तवोवणे ईरिसो आआरो। जेण अदिहिजणो आअदो वाआमत्तेण वि ण संभावणीओ ।

---

(क) हञ्जे! अतिसाध्वसेन न शक्नोम्येतस्य सम्मुखे स्थातुम् ।

(ख) भवति! किमत्र युष्माकं तपोवन ईदृश आचारः । येनातिथिजन आगतो वाङ्मात्रेणापि न संभावनीयः ।

---

अथ सन्निहितं तमवलोक्य किसलयितरतिसध्रीचीनसहजलज्जासाध्वसविवशायास्तस्याः सखीं प्रत्युक्तिः । हञ्जे! अतिसाध्वसेन न शक्नोमि एतस्य सम्मुखे स्थातुम् । अतिसाध्वसेनेति । ऊरुकम्पादिविकारजनकेनासह्येन रणरणकेन एतस्य निस्सामान्यगौरवस्य सम्मुखे अग्रतः स्थातुं न शक्नोमि । किं पुनः समुदाचारादिषु ॥

अतः किं क्रियतामिति इतिकर्तव्यतामौढ्यप्रकाशकेन वागारम्भानुभावेनाभिव्यक्ताभिलाषा समुचितलज्जानुभावरूपाङ्गसाचीकरणवलितललितकटाक्षपाता यदा स्थिताः, तदा नर्मसचिवः संव्यवहारसोपानायमानं वचनं प्रस्तौति—भवति! किमत्र युष्माकं तपोवन ईदृशः समुदाचारः, येनातिथिजन आगतो वाङ्मात्रेणापि न सम्भावनियः । युष्माकं तपोवन इति न सर्वत्र साधारणोऽयमप्रतिपत्तिप्रकारः। युष्माकं तपोवने प्रतिनियतश्चेत्। नायं लोकवृत्तविरोधी मार्गः शोभते । वाङ्मात्रेणापीति । आसतामन्ये पाद्यार्घ्यादयः । स्वागतमिति वा कुत आगम्यत इति वा किं क्रियतामिति वा मधुरालापमात्रमस्ति चेत् तेनैवालमिति ॥

**चेटी** — (नायिकां दृष्ट्वात्मगतम्) (क) अणुरज्जदी विअ एत्थ एदाए दिट्ठी । ता एव्वं दाव भणिस्सं । (प्रकाशम्) भट्टिदा-रिए! जुत्तं भणादि बह्मणो । उइदो खु दे अदिहिजण-सक्कारो । ता कीस एदस्सिं महाणुभावे पडिपत्तिमूढा विअ चिट्ठसि । अहवा चिट्ठ तुवं । अहं एव्व जहाणुरूवं करिस्सं। (नायकमुद्दिश्य) साअदं अय्यस्स । आसणपरिग्गहेण अळंक-रोदु इमं पदेसं अय्यो ।

---

(क) अनुरज्यतीवात्रैतस्या दृष्टिः । तस्मादेवं तावद् भणिष्यामि । भर्तृ-दारिके! युक्तं भणति ब्राह्मणः । उचितः खलु तेऽतिथिजनसत्कारः । तत् कस्मादेतस्मिन् महानुभावे प्रतिपत्तिमूढेव तिष्ठसि । अथवा तिष्ठ त्वमहमेव यथानुरूपं करिष्यामि । स्वागतमार्यस्य । आसनपरिग्रहेणालङ्करोत्विमं प्रदे-शमार्यः ।

---

अथ तद्भावं परीक्षमाणायाश्चेट्या विमर्शप्रकारः । अनुरज्यतीवात्रै-तस्या दृष्टिः । तदेवं तावद् भणिष्यामि । अत्रास्मिन् महापुरुषे समुचित-गुणोज्ज्वलेऽनुरागं बध्नातीवेति संभावयामि । दृष्टिरित्यनेन विकारस्य सूक्ष्मत्वं सूच्यते । तदेतदेवास्याः प्रतिवचनेन विशदीकरोमीति निरूप्याह— भर्तृदारिके! युक्तं भणति ब्राह्मणः । उचितः खलु तवातिथिजनसत्कारः । तत् कस्मादेतस्मिन् महानुभावे प्रतिपत्तिमूढेव तिष्ठसि । अथवा तिष्ठ त्वम् । अहमेव यथानुरूपं करिष्यामि । युक्तं भणतीति । अस्मच्छिक्षणमेवानेन कृतं नाधिक्षेपः । ब्राह्मण इति ग्राह्यवचनत्वमुक्तम् । एतस्मिन् महानुभाव इति । ईदृशस्यातिथिविशेषस्य दुर्लभत्वं द्योत्यते । प्रतिपत्तिमूढेवेति । न खलु विदुष्यास्तव तादृशं मौढ्यम् (उचितम्) । उचितज्ञतायां सत्यां तदकरणे महान् प्रमादः । अथवेति । त्वयैव समुदाचारः कर्तव्य इति संभ्रमं मा कृथाः । सुखं तिष्ठ । अहमेवोचितं समुदाचारं करोमि । मत्कृतं

---

१. 'डाएव्वं' क. पाठः.

**विदूषकः** — (क) भो वअस्स! सोभणं एसा भणादि। उपविसिअ मुहुत्तअं विस्समह्म।

**नायकः** — युक्तमाह भवान्।

(उभावुपविशतः।)

**नायिका** — (सलज्जम्) (ख) हद्धि[1] परिहाससीळे! मा एव्वं करेहि। कदाइ को वि तावसो मं पेक्खे। तदो मं अविणीदत्ति संभावइस्सिदि।

(ततः प्रविशति तापसः।)

---

(क) भो वयस्स! शोभनमेषा भणति। उपविश्य मुहूर्तं विश्राम्यावः।

(ख) हा धिक् परिहासशीले! मैवं कुरु। कदापि कोऽपि तापसो मां पश्येत्। ततो मामविनीतेति संभावयिष्यति।

---

त्वत्कृतमेवेति त्वदपाटवं मयेदानीमपह्नूयते इति तां प्रति व्यङ्ग्यम्। उचितज्ञामिमां मुग्धां दाक्षिण्यहीनां मा मंस्थाः। युष्मन्महानुभावत्वमेवास्याः शालीनतानिमित्तम् इति तं प्रति व्यङ्ग्यम्। एवमुक्त्वा चतुरायाश्चतुरिकायाः समुदाचारप्रकारः — स्वागतमार्यस्य। आसनपरिग्रहेणालंकरोत्विमं प्रदेशमार्यः। आर्यतया येन येन वस्तुना यथा यथा भवतः संम्बन्धो भवति तस्य तस्य तथा तथा लोकोत्तरत्वम्। अतोऽस्य प्रदेशस्य भवदासनपरिग्रहेण प्रदेशान्तरादतिरम्यत्वमिति भावः॥

इत्युभयमनोवृत्त्यनुसारि तद्वचनमाकर्ण्य नर्मसचिवः श्लाघते — भो वयस्य! शोभनमेषा भणति। उपविश्य मुहूर्तं विश्राम्यावः। विश्रमोऽस्माकमपेक्षितः। तदनुगुणमेवास्या वचनम्। अतः शोभनत्वम्। अतः क्रियैवात्रोत्तरम्॥

इति तद्वचनमादृत्य तस्मिन्नुपविष्टे कुलकन्यका सलज्जमाह—हा धिक् परिहासशीले! मा एवं कुरु। कदाचित् कोऽपि तापसो मां पश्येत्। ततोऽविनीतेति संभावयिष्यति। हा धिगिति दुर्विनयशङ्कया विषादः।

---

1. 'भयि प' घ. पाठः.

**तापसः**—आज्ञापितोऽस्मि कुलपतिना कौशिकेन । यथा—वत्स ! शाण्डिल्य ! पितुराज्ञया युवराजो मित्रावसुर्भविष्यद्विद्याधरचक्रवर्तिनं कुमारं जीमूतवाहनमिहैव मलयपर्वते क्वापि वर्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमद्य गतः । तं च प्रतीक्षमाणायाः[1] कदाचिन्मध्यन्दिनसवनविधिरतिक्रामेत् । तदेनामाहूयागच्छेति । तद् यावद् गौरीगृहं गच्छामि । (परिक्रामन् भुवं निरूप्य) अये कस्य पुनरियं पांसुलप्रदेशे प्रकाशितचक्रवर्तिचिह्ना पदपङ्क्तिः । (अग्रतो जीमूतवाहनं निरूप्य) नूनमस्यैवेयं महापुरुषस्य । अपिच,

---

परिहासशीले ! इति । इयमपि समुदाचारव्याजेन क्रीडैव त्वया क्रियते । स च ते स्वभावः । तदेवं मा कुरु । कोऽत्र दोष इति चेद्, एवं महापुरुषसन्निधौ स्थितां मामस्मिन् आश्रमे यदि कोऽपि तापसः पश्येदविनीतेत्येव मंस्यते । इति चेटीं प्रति तस्या अभिजनोचितेन वचनप्रकारेण सूचितस्य तापसप्रवेशस्य नायिकां प्रति नायकस्वरूपप्रतिपादनार्थमस्या वरान्वेषणयोग्यताप्रकाशनार्थं विप्रलम्भोत्थापनार्थं च प्रतिपादनम् ।

प्रविष्टस्तापसः स्वामवस्थामाह—आज्ञापितोऽस्मीत्यादि । कौशिक इति कश्चिद् गोत्रगुरुः । वत्स शाण्डिल्येत्यादि तदाज्ञाप्रकारः । भविष्यद्विद्याधरचक्रवर्तिनमिति । असौ विद्याधरचक्रवर्ती भविष्यतीति पूर्वमेव लक्षणैर्निर्णीतम् । अनेन योग्यत्वं समर्थितम् । कुमारमिति । इदानीं कुमारत्वेन समुचितवयसमिति प्रकाशितम् । जीमूतवाहनमिति नाम्ना प्रसिद्धत्वम् । इहैव मलयपर्वत इत्यन्वेषणसौकर्यार्थम् । वरहेतोर्द्रष्टुमिति वरत्वेनाङ्गीकर्तुम् । अद्य गत इति तदागमनमेवमविज्ञायापि । प्रतीक्षमाणायाः कदाचिदिति । प्रमादेन कालातिपातो भवेत् तदेनामाहूयागच्छ इत्येतत्पर्यन्तमाज्ञावच-

---

१. 'या मलयवत्याः क' मुद्रितकोशपाठः.

उष्णीषः स्फुट एष मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्धते।
चक्राङ्कं च यथा करद्वयमिदं मन्ये तथा कोऽप्ययं
नो विद्याधरचक्रवर्तिपदवीमप्राप्य विश्राम्यति॥ १८॥

नम्। तद् यावदिति। तस्माद्धेतोः। गौरीगृहमिति। तत्र तस्याः स्थितिमनूद्योक्तिः। अथ नायकोत्कर्षप्रतिपादनायास्यानुमितिप्रकारमाह — अये इत्यादि। अये इति कौतुकविषयस्य साक्षात्कारे संभ्रमद्योतकं वचनम्। कस्य पुनरियमित्यादि। पांसुलप्रदेश इति प्रतिबिम्बस्फुटीकरणाय। अत एव प्रकाशितचक्रवर्तिचिह्नेत्युक्तम्। तानि च ध्वजकलशातपत्रादिरेखारूपाणि। पदपङ्क्तिः पदप्रतिबिम्बपरम्परा। पङ्क्तिशब्देन तत्र तत्र परिस्फुटतया बोधस्य सम्यक्त्वं प्रकाश्यते। एवमनुमानेन गौरवं समर्थ्य प्रत्यक्षतो दृष्ट्वा कस्येति विकल्पमपाकरोति — नूनमस्यैवेयमिति। इयमिति उक्तरूपा पदपङ्क्तिः। महापुरुषस्येति उक्तवक्ष्यमाणानां लक्षणानामाश्रयत्वकथनम्। अपिचेति। न केवलं पदपङ्क्तिरेव प्रकाशितचक्रवर्तिचिह्ना, अन्येष्वप्यवयवेषु तानि प्रकाशन्ते।

उष्णीष इति उष्णीषबन्धस्थाने ललाटोपरि पट्टबन्धरेखा कथ्यते। स्फुट इति लक्षणस्य पूर्तिः। मूर्धनीति उचितस्थानसंबन्धित्वम्। अत एव विभातीत्युक्तम्। ऊर्णेति भ्रूमध्यगो रोमावर्तः।

"ऊर्णा भ्रूमध्यगावर्ते तन्तौ मेषादिलोमसु"

इति वचनात्। हरिणेति। हरिशब्देन तद्वक्षो लक्ष्यते। सजातीयेष्वेव स्पर्धा घटते। हरिपदेन तद्वक्षोलक्षणया लक्ष्मीविलासादियोग्यतच्चातुर्यसर्वस्वं स्वीकृतम्। अत एव स्पर्धत इत्युक्तम्। चक्राङ्कं च यथा करद्वयमिति। चशब्दो गुणान्तरसमुच्चयार्थः। यथेति सर्वशेषः। यथा येन प्रकारेणैतानि सर्वाणि प्रकाशन्ते, तथा तेन प्रकारेण मन्ये एतैर्लक्षणैरविनाभावसिद्धैरिदमनुमिनोमीत्यर्थः। कोऽपीति। अनिर्देश्यसकलविशेष ईश्वरवद् बहुमन्तुं योग्य इत्यर्थः। विद्याधरचक्रवर्तिपदवीमप्राप्य विश्राम्यतीति। अस्य

अथवा कृतं सन्देहेन । सुव्यक्तमनेन जीमूतवाहनेन भवितव्यम् । (मलयवतीं निरूप्य) अये इयमपि राजपुत्री । (उभौ[1] विलोक्य) चिरात् खलु युक्तकारी विधिः स्याद्, यदि युगलमिदमन्योन्यानुरूपं घटयेत् । (उपसृत्य नायकमुद्दिश्य) स्वस्ति भवते ।

**नायकः** — (उत्थाय) भगवन् ! जीमूतवाहनोऽहमभिवादये । (आसनं दातुमिच्छति ।)

**तापसः** — अलमलमभ्युत्थानेन । ननु सर्वस्याभ्यागतो गुरुरिति भवानेवास्माकं पूज्यः । तद् यथासुखं स्थीयताम् ।

**नायकः** — बाढम् ।

**नायिका** — (क) अय्य ! पणमामि ।

---

(क) आर्य ! प्रणमामि ।

---

गुणोत्कर्षे निरूप्यमाणे तत्पर्यन्तैवास्योत्साहोत्कर्षविश्रान्तिरिति निश्चीयते। विद्याधरचक्रवर्तीति । लक्षणैश्चक्रवर्तित्वं भविष्यद्विद्याधरचक्रवर्तिनमित्यादिप्रकरणविशेषादन्वय[2]विशेषसंबन्धश्च निश्चीयत इत्यर्थः ॥ १८ ॥

एतदेव विशदयति— अथवा कृतं सन्देहेनेति । व्यक्तिविशेषत्वेन निश्चेतुं शक्यमित्यर्थः । अनेन जीमूतवाहनेन भवितव्यमिति । असावेवास्मदपेक्षितः प्रसिद्धनामधेय इत्यर्थः । एवं नायकस्योत्तमप्रकृतित्वं प्रतिपाद्य तत्सन्निधौ नायिकामपि तदुचितगुणविशिष्टतयावलोक्य लोकोत्तरमुभयोरानुरूप्यं[3] विमृश्य विधिं प्रार्थयते— चिरात् खल्वित्यादि । यद्यन्योन्यानुरूपमिदं युगलं घटयेद् दाम्पत्येन योजयेत् , तर्हि विधिः चिराद् युक्तकारी स्यात् । चिरादिति प्रवाहापतितानां जन्तूनां संघटने विधातुर्युक्तकारित्वं न सर्वत्र प्रकाशते । एतद्घटने पुनरसौ चिरेणापि पाण्डित्यसीमानमधिवसति । तदेवं भवतु इति प्रार्थनागर्भं वचनम् ॥

---

१. 'मेतदन्यो' मुद्रितकोशपाठः. २. 'बयविवि' ङ. पाठः. ३. 'कूल्यं वि' क. ङ. पाठः.

**तापसः** — भद्रे! अनुरूपभर्तृभागिनी भूयाः। राजपुत्रि! आह त्वां कुलपतिः कौशिकः — अतिक्रामति मध्यन्दिनसवनवेला। त्वरितमागम्यतामिति।

**नायिका** — (क) जं गुरू आणवेदि।

(उत्थाय निःश्वस्य सलज्जं सानुरागं च नायकं पश्यन्ती तापससहिता निष्क्रान्ता नायिका चेटी च।)

**नायकः** — (सोत्कण्ठं निःश्वस्य नायिकां गच्छन्तीं पश्यन्)

अनया जघनाभोगभरमन्थरयानया।
अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥१९॥

---

(क) यद् गुरुराज्ञापयति।

---

एवं परस्परदर्शनानुबद्धरतिपरिपोषयोस्तयोरयोगविप्रलम्भहेतुत्वेन तापसागमनमनुवर्ण्यानिष्टमपि गुरुगौरवेण गमनमङ्गीकृत्य नायिकायां

"न्यस्तं त्वयि मनः पाल्यमेतदत्यन्तपेशलम्।
इतीव कान्तं सा प्राह व्रजन्ती नूपुरारवैः॥
ददौ त्रिकपरावृत्तिलक्षितैकस्तनी मुहुः।
तस्मै दृशं सा धम्मिल्लमधुपोत्सारणच्छलात्॥
वेपथुस्तम्भसंरुद्धा तन्वी कृच्छ्रेण सा ययौ।
सुकुमारेण मनसा वहन्ती तं महाभुजम्॥"

इति कथानुसारेण विवशं गच्छन्त्यां नायकस्तद्विश्लेषमसहमानः सनिःश्वासमाह — अनयेत्यादि। अन्यतोऽपि स्वगेहं प्रति व्रजन्त्या मे हृदये पदं निहितम्। गच्छन्तीमपि परित्यक्तुं मनो न शक्नोति। अहं त्वय्यनुरक्तेति मसृणदृष्टिपातेन प्रकाश्यान्तःकरणमाक्रम्य स्थितेयं न कदाचिदपि विश्लेषदशामनुभवति। जघनाभोगभरेण मन्थरं मन्दं सुन्दरं च यानं यस्याः इति गमनदर्शनानुभवः प्रकाश्यते। यानस्य मान्द्यसंपादनेन

**विदूषकः** — (क) दिट्ठं जं पेक्खिदव्वं । दाणिं मज्झण्णसूरसंदावविउणिओ विअ मे जठरग्गी दमदमायदि । ता णिक्कमह्म । जेण अदिही भविअ मुणिजणसआसादो ळद्धेहिं कंदमूळफळेहिं पि दाव पाणधारणं करिस्सं ।

**नायकः** — (ऊर्ध्वमवलोक्य) अये मध्यमध्यास्ते नभस्तलस्य भगवान् सहस्रदीधितिः । तथाहि,

---

(क) दृष्टं यत् प्रेक्षितव्यम् । इदानीं मध्याह्नसूर्यसन्तापद्विगुणित इव मे जठराग्निर्दमदमायति । तन्निष्क्रामावः । येनातिथिर्भूत्वा मुनिजनसकाशाल्लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करिष्यामि ।

---

जघनाभोगस्योपकर्तृत्वं च व्यज्यते । अन्यतो व्रजन्त्यापि मम हृदये पदं निहितम् इत्यनेन अन्यत्र गमनमन्यत्र पदविन्यास इत्यसङ्गत्यलङ्कारेण श्लेषानुगृहीतेनातिलोकसुन्दरवस्तुस्वभावस्यापरिच्छेद्यता व्यज्यते, विप्रयोगेऽपि सन्निधाननिर्विशेषैवान्तःकरणाक्रान्तिरिति च । अनेन श्लोकेन वर्णयिष्यमाणस्यायोगविप्रलम्भस्य पीठबन्धः कृतः ॥ १९ ॥

एवं नायकस्याभिलाषपरिपोषमालक्ष्यैतद्दर्शनस्य लोकोत्तरत्वं समर्थयन् वयस्यः कालविशेषमुद्बोधयति—दृष्टं यत् प्रेक्षितव्यम् । इदानीं मध्याह्नसूर्यसन्तापद्विगुणित इव मे जठराग्निर्दमदमायति । तन्निष्क्रामावः । येनातिथिर्भूत्वा मुनिजनसकाशाल्लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करिष्यामि । यत् प्रेक्षितव्यं तद् दृष्टमित्यनेनेदानीमेवास्मन्नयनसाफल्यमिति तदुत्कण्ठाकरग्रहः कृतः । दमदमायतीति जठराग्निज्वलनेऽव्यक्तानुकरणम् । कन्दमूलफलैरपि तावदिति मृष्टान्नालाभेन खेदः प्रकाश्यते । अत एवोक्तं प्राणधारणं करिष्यामीति । प्राणधारणमात्रमत्र फलति न तृप्तिः, त्वत्सेवानुबन्धादिति भावः ॥

एवं प्रकृताविरोधेन रसान्तरमवगाहमानो नायको वयस्यस्य कालावस्थाप्रतिपादकं वचनमाकर्ण्यावलोकनेन कालविशेषं निश्चित्य प्रकृतानुगुण्येन मध्यन्दिनावस्थां वर्णयति—अये इति चित्तव्याक्षेपहेतुकं पूर्वमनि-

तापात् तत्क्षणघृष्टचन्दनरसापाण्डू कपोलौ वहन्
संसक्तैर्निजकर्णतालपवनैः संवीज्यमाननः।
संप्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः शीकरै-
र्गाढायल्लकदुस्सहामिव दशां धत्ते गजानां पतिः॥२०॥

(निष्क्रान्तौ।)

**प्रथमोऽङ्कः।**

---

रूपितत्वं व्यज्यते। भगवानिति बहुमानातिशयः, सहस्रदीधितिरिति तदानीं प्रसृत्वरसकलकिरणत्वेन दुःसहत्वं, नभस्तलस्य मध्यमध्यास्त इति परोपकाराध्यवसायदर्शनेन तत्सब्रह्मचारित्वाभिरुचिश्च व्यज्यते। तथाहीति कालावस्थाविवरणोपक्रमः।

तापादित्यादि। संप्रति दिनयौवने एष गिरितटे परिभ्रमन् गजानां पतिः यूथपतिः इति उज्ज्वलतया रसिकत्वसंभावनौचित्यं व्यज्यते। गाढायल्लकदुःसहां दशां धत्त इव गाढेन दृढेनानिवार्येणायल्लकेन,

"स्यादायल्लकमाध्यानमुत्कण्ठोत्कलिका रतिः"

इत्युत्कण्ठापरपर्यायेण विशिष्टनिजरमणीनिरन्तरानुसन्धानतदलाभप्रवर्धमानेन रणरणकेन दुःसहां कृच्छ्रेण सह्यमानामवस्थां धत्त इवेति संभावना। तापादिति सर्वशेषः। अस्य मध्यन्दिनतीव्रतापोपशमनव्यापारे एवं रसिकजनोचिता संभावना जाघटीतीत्यर्थः। आतपोष्मोपशान्त्यै तत्क्षणं मुखपार्श्वविमृदितेन चन्दनतरूणां स्रवता रसेन निर्यासेनापाण्डू प्राप्तवर्णान्तरौ कपोलौ वहन्। उत्कण्ठितोऽप्यनङ्गज्वरेण पूर्वं निघृष्टस्य शैत्यं हीयत इति तत्क्षणं हिमजलादिमिलितेन वर्तके परिचारकैः पिष्टस्य चन्दनस्य रसेन ललाटादिषु सान्द्रतरं लिप्तेन धवलौ कपोलौ वहति। तथा सम्यक् सक्तैर्निजकर्णतालान्दोलनप्रसृतैः पवनैः समन्ततो वीज्यमानाननः। इतरोऽपि उभयपार्श्वे चन्दनरसस्याकिञ्चित्करत्वमालक्ष्य बहुभिः परिचारकैरुभयकर्णोपान्तनिरन्तरगृह्यमाणतालवृन्तादिमन्दोदीरितपवनप्रसरप्रकारैः संवीज्यमानाननो भवति। पुनः हस्तोज्झितैः पुष्करमुखोत्सृष्टैः शीकरैः जलाशय-

गृहीतैः जलकणैः । स्वेदशीकरैरित्युक्तौ तापापनयनशेषत्वं न घटते । तैः विशेषसिक्तहृदयः विगतशेषं साकल्येन सिक्ताधोभागः । अपरोऽपि तापौल्बण्येन स्वहस्तेनान्यहस्तेन वा विसृष्टैः जलकणैः मुखपादादीन्यवसिच्य तापाधिक्यात् सविशेषं हृदयं सिञ्चति । एवं प्रवृत्तिसाम्येनास्यावस्थायामेवमुत्प्रेक्षितुं शक्यमिति कालावस्थां प्रतिपाद्य सवयस्यस्य निष्क्रान्तिः प्रतिपादिता । एवं श्लेषानुगृहीतयोत्प्रेक्षयाङ्कान्तरप्रतिपादयिष्यमाणस्य नायकयोरयोगविप्रलम्भस्याङ्कान्तरसमुचितबिन्दूपक्षेपः । कालवर्णनेनैकदिवसप्रयोज्यवृत्तान्तोपसंहारश्च प्रतिपादितः ॥ २० ॥

"अङ्क इति रूढिशब्दो भावैश्च रसैश्च चिह्नयत्यर्थान् ।
नानाविधानयुक्तान् यस्मात् तस्माद् भवेदङ्कः ॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥
एकदिवसप्रवृत्तं कार्यं त्वङ्केऽथ बीजमधिकृत्य ।
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रान्तिः ॥"

इति मुनिवचनानुसारेण प्रथमोऽङ्कः परिसमापितः ॥

इति शिवरामस्य कृतौ नागानन्दविमर्शिन्यां
प्रथमाङ्कार्थविमर्शनं

**समाप्तम्** ॥

---

# अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति चेटी ।)

**चेटी**—(क) आणत्तह्मि भट्टिदारिआए मळअवदीए—हञ्जे मणोहरिए! अज्ज चिराअदि भादुओ मे अय्यमित्तावसू । ता गदुअ जाणाहि[1] किं आअदो ण वेत्ति । (परिक्रामति । नेपथ्याभिमुखमालोक्य) का उण एसा इदो एव्व आअच्छदि । (निरूप्य) कहं चउरिआ ।

---

(क) आज्ञप्तास्मि भर्तृदारिकया मलयवत्या—हञ्जे मनोहरिके! अद्य चिरयति भ्राता मे आर्यमित्रावसुः । तद् गत्वा जानीहि किमागतो न वेति । का पुनरेषा इत एवागच्छति । कथं चतुरिका ।

---

अथ द्वितीयाङ्के नायकयोरयोगविप्रलम्भपरिपोषे वर्णयिष्यमाणे प्रथमं नायिकायाः शिशिरोपचाराद्युपक्रमे उपर्यपेक्षितं मित्रावसुव्यापारं चन्दनलतागृहविरचनादिकं च निवासार्थमपेक्षितं सूच्यमर्थमङ्कसन्धिविनियुक्तेन नीचपात्रद्वयप्रयुक्तेन प्रवेशकाख्येनार्थोपक्षेपकेण प्रतिपादयति

"बह्वाश्रयमप्यर्थं प्रवेशकैः संक्षिपेत् प्रबन्धेषु ।
अङ्केषु संप्रयुक्तो जनयति खेदं प्रयोगस्य ॥
सद्दशाभ्यां प्रयोज्यः स्यादङ्कसन्धौ प्रवेशकः ।"

इत्यादिमुनिवचनानुसारेण—आणत्तह्मीत्यादि । आज्ञप्तास्मि भर्तृदारिकया मलयवत्या—हञ्जे मनोहरिके! अद्य चिरयति भ्राता मे आर्यमित्रावसुः । तद् गत्वा जानीहि किमागतो न वेति । आज्ञप्तास्मीति । आज्ञालाभेन कृतार्थता प्रतीयते । भर्तृदारिकयेत्यनेन बहुमानातिशयः । मलयवतीत्यनेन वात्सल्यातिशयः । हञ्जे इत्यादि आत्मानं प्रति तदाज्ञानुवादोपक्रमः । अद्येति । नैवं गमने पूर्वं विलम्बनं दृष्टम् । चिरयति वरपरीक्षार्थमस्य गम-

---

१. 'हि दाव किं' मुद्रितकोशपाठः.

(ततः प्रविशति चतुरिका ।)

**मनोहरिका**—(उपसृत्य) (क) हञ्जे चउरिए! किंणिमित्तं पुण तुमं एव्वं तुरिअतुरिअं आअच्छसि ।

**चतुरिका**—(ख) आणत्तह्मि भट्टिदारिआए मळअवदीए—हञ्जे चउरिए! कुसुमावचअपरिस्समणिस्सहं मे सरीरं सरदादवजणिदो विअ सन्दावो अहिअदरं बाहेइ । ता गच्छ

(क) हञ्जे चतुरिके! किन्निमित्तं पुनस्त्वमेवं त्वरितत्वरितमागच्छसि ।

(ख) आज्ञप्तास्मि भर्तृदारिकया मलयवत्या— हञ्जे चतुरिके! कुसुमावचयपरिश्रमनिस्सहं मे शरीरं शरदातपजनित इव सन्तापोऽधिकतरं बाधते ।

नमिति । जानत्यापि तदाच्छाद्य कथ्यते । अत एव गमनविषयादिनिर्देशः । भ्रातेति वात्सल्यहेतुत्वम् । आर्य इति ज्येष्ठत्वम् । मित्रावसुरिति बहुमानः । आगतो न वेति । स्वगृहमिति शेषः । इतीति ज्ञानप्रकारोपसंहारः । एतत्पर्यन्तं तद्वचनमनूद्य इत्याज्ञप्तास्मीति अन्य इतिशब्दोऽर्थसिद्धः । प्रयुज्यते वा कैश्चित् । एवं भङ्ग्या सूच्यार्थप्रतिपादनेऽन्यस्याः प्रवेशोपक्रमः । का पुनरेषा इत एवागच्छति । कथं चतुरिका ॥

हञ्जे चतुरिके! किन्निमित्तं पुनस्त्वमेवं त्वरितत्वरितमागच्छसि । अतित्वरितमित्यर्थः । अत एव प्रश्नः ॥

आणत्तह्मीत्यादि तस्याः प्रतिवचनरूपेण सूच्यार्थसूचनप्रकारः । हञ्जे चतुरिके! कुसुमावचयपरिश्रमनिस्सहं मे शरीरं शरदातपजनित इव सन्तापोऽधिकतरं बाधते । तद् गच्छ त्वम् । बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुरु इति । अनुष्ठितं च मया यथाज्ञप्तम् । तद् यावद् गत्वा भर्तृदारिकायै निवेदयामि । अयं गमनत्वराहेतुरित्यनुक्तसिद्धम् । कुसुमावचयेन यः परिश्रमः देवीसमाराधनार्थं कुसुमावचयप्रवृत्तिः तवापि सिद्धा, तेन यः परिश्रमः, तमसहमानं मे शरीरम् इत्यनेन हेत्वन्तरमाच्छाद्य तस्या उक्तिमनुसृत्योक्तिः । शरदातप-

तुवं। बाळकदळीपत्तपरिक्खित्ते चन्दणळदाघरए चन्दमणिसिळादळं सज्जीकरेहित्ति। अणुट्ठिअं च मए जहाणत्तं। ता जाव गदुअ भट्टिदारिआए णिवेदेमि।

**प्रथमा** — (क) जइ एव्वं, ता ळहुअं णिवेदेहि। जेण से तहिं गदाए सन्दावो उवसमं गमिस्सदि।

---

तद् गच्छ त्वम्। बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुर्विति। अनुष्ठितं च मया यथाज्ञप्तम्। तद् यावद् गत्वा भर्तृदारिकायै निवेदयामि।

(क) यद्येवं, तल्लघु निवेदय। येनास्यास्तस्मिन् गतायाः सन्ताप उपशमं गमिष्यति।

---

जनित इवेति शारदस्यातपस्य तीक्ष्णतातिशयात् तत्साम्येन सन्तापस्यातिशयः प्रकाश्यते। सम्यग् अन्तर्बहिर्व्यापी तापः। अधिकतरं बाधते तूष्णीमासितुमप्यसमर्थां विदधाति। तद् गच्छ, शिशिरोपचारस्यापेक्षितत्वादिति शेषः। बालकदलीपत्रेति पर्यन्तशैत्यप्रकर्षः। चन्दनलतागृह इति उपरि पल्लवलतादिनिचितत्वेनासूर्यम्पश्यान्तरत्वं, चन्द्रमणिशिलातलमित्यनेन शिलाविशेषस्यातिशैत्येन सन्तापशमनसमुचितत्वं च प्रकाश्यते। सज्जीकरणं शुष्कपर्णपांसुप्रभृतीनामपनयेन गमनासिकादियोग्यतया निर्मलीकरणम्॥

तदुक्तौ अभिप्रायमजानती अन्या आह — यद्येवं, तल्लघु निवेदय, येनास्यास्तस्मिन् गतायाः सन्ताप उपशमं गमिष्यति। तत्सन्तापोपशमनमेवास्माकमपेक्षितमित्यर्थः॥

**द्वितीया** — (विहस्यात्मगतम्) (क) **ण एरिसो सन्दावो एव्वं उवसमं गमिस्सदि, अण्णञ्च विवित्तरमणिज्जं चन्दणळदाघरअं पेक्खन्तीए अहिअदरं भविस्सदित्ति तक्केमि।** (प्रकाशम्) **ता गच्छ तुवं । अहं पि सज्जं सिळादळं त्ति भट्टिदारिआए णिवेदेमि ।**

(निष्क्रान्ते ।)

**प्रवेशकः ।**

---

(क) नेदृशः सन्ताप एवमुपशमं गमिष्यति, अन्यच्च विविक्तरमणीयं चन्दनलतागृहं पश्यन्त्या अधिकतरं भविष्यतीति तर्कयामि । तद् गच्छ त्वम् । अहमपि सज्जं शिलातलमिति भर्तृदारिकायै निवेदयामि ।

---

इति तद्वचनमाक्षिप्य सा हासगर्भं नाट्यधर्मिन्यायेनात्मगतं वदति— न ईदृशः सन्ताप एवमुपशमं गमिष्यति । अन्यच्च विविक्तरमणीयं चन्दनलतागृहं पश्यन्त्या अधिकतरं भविष्यतीति तर्कयामि । ईदृश इति । पूर्वमेव सिद्धमदनामयनिमित्तः अन्यनिमित्तत्वेनोक्तः । एवमिति लतागृहप्रवेशादिना । अन्यच्चेति । प्रत्युतेत्यर्थः । विविक्तरमणीयमिति । विविक्तत्वं रमणीयत्वं च सन्तापस्योपोद्बलकम् इति तर्कयामि मदनवृत्तान्तस्य स्वभावपर्यालोचनेन कल्पयामि । पूर्वमेवैतन्मया चेतितम् । यद्येवमुक्तं, तस्या रहस्यभेदो भवेद् आज्ञाप्रतिकूलाचरणदोपश्च । तत् तदुक्तिमनुसरामि। अत्रापि वैषम्ये जाते स्वयमेव रहस्यभेदं करिष्यति । ततो व्यसनशमनोपायं च निरूपयामि । सर्वथा न वृथा प्रयास इति स्वयं निश्चित्य तामन्यथा नियुङ्क्ते । तस्या गमनवृत्तान्तस्य पूर्वमेव सिद्धत्वात् त्वया कुत्र गम्यत इति विचारो न कृतः । तद् गच्छ त्वम् । नियुक्तकार्यानुष्ठानायेति शेषः । अहमपि सज्जं शिलातलमिति भर्तृदारिकायै निवेदयामि । एवं सूच्यसूचनानन्तरं[1] मनयोर्निष्क्रान्तिः ॥

---

१. 'रं तयो' घ. पाठः.

(ततः प्रविशति सोत्कण्ठा मलयवती चेटी च ।)

**नायिका**—(निःश्वस्यात्मगतम्) (क) **हिअअ! तह णाम तदा तस्सिं जणे लज्जाए मं परम्मुहीकरिअ दाणिं अप्पणा**

(क) हृदय! तथा नाम तदा तस्मिञ्जने लज्जया मां पराङ्मुखीकृत्ये-

अथ प्रवेशकसूचितं नायिकाया अयोगविप्रलम्भं वर्णयितुमुपक्रमते । तत्र दर्शनादिना प्ररूढपरस्परप्रेम्णोरुत्तमप्रकृत्योर्यूनोर्गुरुपारतन्त्र्यादिना असङ्गमे दशावस्थतया तस्य परिपोषो लक्षितः—

"तत्रायोगोऽनुरागेऽपि नवयोरेकचित्तयोः ।
पारतन्त्र्येण दैवाद्वा विप्रकर्षादसङ्गमः ॥

दशावस्थः स तत्रादावभिलापोऽथ चिन्तनम् ।
स्मृतिर्गुणकथोद्वेगः प्रमादोन्मादसंज्वराः ॥

जडता मरणं चेति दुरवस्थं यथोत्तरम् ॥"

इति । तत्र श्रवणाङ्कुरितोऽभिलापः परस्परदर्शनेन परिपोषं गतः समुचितोद्दीपनविभावानुभावव्यभिचार्यनुबन्धेन चिन्ताद्यवस्थायां क्रमेण दत्तपदः प्रतिपाद्यते । तत्र,

"अस्याः प्रववृधे क्षिप्रं स कोऽपि विरहानलः ।
यः सिच्यमानो बाष्पाम्बुपूरैरुज्जृम्भतेऽधिकम् ॥

श्रीखण्डजलसिक्ताङ्गी कदलीदलशायिनी ।
बभूव गाढसन्तापा कान्ता सिद्धपतेः सुता ॥

न जलार्द्रैर्न वसनैर्न हारैर्न सरोरुहैः ।
तस्या न चन्द्रकान्तैश्च शशाम मदनानलः ॥"

इति क्षेमराजप्रतिपादितदिशा सन्तापसन्ततिमसहमानायाश्चेट्या सह चन्दनलतागृहं गन्तुमुद्यताया गाढोत्कण्ठायाश्चिन्तासन्तानानुभावरूपनिःश्वाससहितं स्वहृदयं परीकृत्य व्यवहारः— हृदय! तथा नाम तदा तस्मिन् जने लज्जया मां पराङ्मुखीकृत्येदानीमात्मना तस्मिन्नेव गतमसीति अहो

तहिं एव्व गअं सित्ति अहो दे अप्पम्भरित्तणं । (प्रकाशम्) हञ्जे! आदेसेहि मे भअवदीए आअदणस्स मग्गं ।

दानीमात्मना तस्मिन्नेव गतमसीत्यहो ते आत्मम्भरित्वम् । हञ्जे! आदिश मे भगवत्या आयतनस्य मार्गम् ।

ते आत्मम्भरित्वम् । हृदयेति जन्मनः प्रभृति त्वदनुसरणमेव मया कृतं, न कदाचन वियोगः । एवं स्थिते तव शाठ्यमत्यन्तमनुचितमित्यधिक्षेपगर्भोक्तिः । तथा नामेति स प्रकार इदानीं न वक्तव्यः न शक्यश्च तव सिद्धश्चेति द्योत्यते । तदा गौरीसेवनकाले । आकाशफलपातवद् दैवादागतस्य महोदयस्यानुमोदनमेव युक्तं, न निषेधः । तस्मिन् जने अनिर्देश्यमहिमनि नयनानन्ददायिनि अस्मत्सुकृतपरिपाकेन यदृच्छया तं देशमलङ्कृतवति विषये । अनन्यत्रभावो विषयार्थः । तदेति देशकालावस्थासु पूर्वमविसंवादैवावयोर्वृत्तिः, न कदाचिदपि पृथग्भावेन इति वैपरीत्यस्यायोग्यता द्योत्यते । लज्जया सहजयापि तदानीं मद्विरोधिन्या त्वदिच्छानुसारिण्या प्रियनिरोधे निर्लज्जया । मां त्वयि कृतविश्वासां तद्रूपामृतपानसमुदाचारादिषु पर्युत्सुकं नयनं पुरस्सरीकृत्य त्वामनुधावन्तीं स्वयं तस्मिन् निलीय अङ्गसाचीकरणवेपथुप्रभृतिभिः पूर्वमपराङ्मुखीं पराङ्मुखीमग्रतः स्थातुमप्यसमर्थां विधाय । च्विप्रत्ययेन सापेक्षाया निरोधे महान् दोष इति व्यज्यते । इदानीं मन्दभाग्यायां मयि दूरस्थायाम् । तस्मिन् जने अलभ्ये च तस्मिन्नेव नान्यत्र क्षणमपि ते प्रवृत्तिः । एवकारेण स्वसाध्ये अन्यनिषेधे च निर्बन्धातिशयो व्यज्यते । गतमिति प्रथमगमनात् प्रतिनिवृत्य गमनमपि न ज्ञायत इति । अस्मिन्नवस्थान्तरे विचार्यमाणे नान्यत्रैवं दृष्टम् । अत एव अहो इति अद्भुतरूपत्वम् । ते इति त्वयैकेन दृष्टोऽयं नयः । आत्मम्भरित्वं महद्भिर्विगर्हणीयमुदरम्भरित्वम् । 'आत्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके' इत्युक्तत्वात् । परवृत्तिं निषिध्य स्वसुखनिर्बन्धोऽत्र लोकाद् विशेषः । एवं रतिसागरे मज्जनोन्मज्जनमनुभवन्त्याः सङ्कल्पपरम्परानुबन्धचिन्तोन्मादजड-

१. 'प्रसि' क. ख. घ. पाठः.

**चेटी** — (क) णं चन्दणळदाघरअं भट्टिदारिआ पत्थिदा ।

**नायिका** — (सलज्जम्) (ख) सुट्ठु तुए सुमराविदं । ता एहि । तहिं एव्व गच्छह्म ।

**चेटी** — (ग) एदु एदु भट्टिदारिआ । (अग्रतो गच्छति ।)

(नायिकाप्यन्यतो गच्छति ।)

**चेटी** — (पृष्ठतो दृष्ट्वा, आत्मगतं सोद्वेगम्) (घ) अहो से सु-

(क) ननु चन्दनलतागृहं भर्तृदारिका प्रस्थिता ।

(ख) सुष्ठु त्वया स्मारितम् । तदेहि । तत्रैव गच्छावः ।

(ग) एत्वेतु भर्तृदारिका ।

(घ) अहो अस्याः शून्यहृदयत्वम् । कथं तदेव देव्या भवनं प्रस्थिता ।

तास्तम्भरोमाञ्चादिभिः संवलिताया आत्महृदयं परीकृत्य प्रलापेन विस्मृतप्रस्तुतगमनायास्तद्दर्शनश्लाघनीयं देशमनुस्मरन्त्या मनोवृत्त्यनुगुणा स्वप्नप्रलपितवच्चेटीं प्रत्युक्तिः — हञ्जे ! आदिश मे भगवत्या आयतनस्य मार्गम् ॥

इति तद्वचनमाकर्ण्य सम्भ्रममजानानेव पृच्छति — **ननु** चन्दनलतागृहं भर्तृदारिका प्रस्थिता । नन्विति चित्तानुसरणाय प्रश्नः । शिलातलसज्जीकरणाय मां नियुज्यागतया मया सह तत्र गन्तुमुद्यतेति मया निरूपितम् । स्वातन्त्र्येणान्यत्र गम्यत इति चेत् तदप्यनुसरामीति भावः ॥

सुष्ठु त्वया स्मारितम् । तदेहि । तत्रैव गच्छावः । मया विस्मृतं त्वया बोधितं साधु । तत्रैवेति साधारणशब्दप्रयोगेऽपि पूर्वोक्त एव मनोवृत्तिः । तदनुसारेण गमनम् ॥

उक्तमनिरूप्यात्मानमप्यनालक्ष्य प्रतिकूलगमनात् तस्या वाङ्मनःकायचेष्टापरिभ्रममालक्ष्य विषण्णा स्वयं निरूपयति — **अहो अस्याः**

ण्णहिअअत्तणं । कहं तं एव्व देवीए भवणं पत्थिआ । (प्रकाशम्) भट्टिदारिए! णं इदो चन्दणळदाघरअं । ता इदो एहि ।

(नायिका सविलक्षं सलज्जं च तथा करोति ।)

**चेटी**—(क) भट्टिदारिए! एदं चन्दणळदाघरअं । ता पविसिअ चन्दमणिसिळादळे उवविसदु भट्टिदारिआ ।

(उभे उपविशतः ।)

---

भर्तृदारिके! नन्वितश्चन्दनलतागृहम् । तदित एहि ।

(क) भर्तृदारिके! एतच्चन्दनलतागृहम् । तत् प्रविश्य चन्द्रमणिशिलातले उपविशतु भर्तृदारिका ।

---

शून्यहृदयत्वम् । विमर्शराहित्यं शून्यत्वम् । विमर्शाभावे चेतनमपि जडप्रायमिति शून्यमित्युक्तम् । तदेव अन्यत्र गम्यत इति गमनाविषयत्वेन निषिद्धं, किञ्च तदेव महापुरुपदर्शनविषयतया बुद्ध्युपारूढमेव इति च । प्रस्थितेति देहवृत्तेरपि व्याक्षेपः । पुनश्च तद्भ्रमं गोपायन्ती आह—भर्तृदारिके! नन्वितश्चन्दनलतागृहम् । तद् इत एहि । इत इति अभिनयपूर्वं व्यावर्तनसौकर्याय । नन्वित्यनुनये । मार्गापरिज्ञानं तव सरण्यन्तरेण गमने कारणम् । तदनेन पथा आगच्छ ॥

इति निजव्याक्षेपेण तस्यां वदन्त्यां निजस्खलितमनया ज्ञातमिति निरूप्य सविलक्षं निजविभ्रमे किमपि व्यपदेष्टुमपाटवेन वैवश्यमवलम्ब्य,

"मनो विशङ्कमानाभिर्बालाभिरुपजीव्यते ।
अपडक्षीणषाड्गुण्यमन्त्री मकरकेतनः ॥"

इत्युक्तनीत्या निजदुर्विनयज्ञानशङ्कया च सलज्जं तदनुसरणम् ॥

भर्तृदारिके! एतच्चन्दनलतागृहम् । तत् प्रविश्य चन्द्रमणिशिलातले उपविशतु भर्तृदारिका ॥

अथ चेट्योपदिश्यमानमार्गा चन्दनलतागृहमेत्य चन्द्रकान्तमणिशिलायामुपविष्टा मृदुलमलयसमीरणान्दोलनैः मधुमदमुदितमधुकरमधुरझङ्कारश्रवणैरतिशीतलशिलास्पर्शेन कुसुमकिसलयदलादिनिबिडलतामण्डपदर्शनादिभिश्च प्रतिक्षणं वर्धमानोत्कण्ठोन्मादचिन्ताजडतादिभिर्विवशीक्रिय-

**नायिका** — (निःश्वस्यात्मगतम्) (क) **भअवं! कुसुमाउह! जेण तुवं रूवसोहाए णिज्जिदो सि, तस्सिं ण किञ्चि तुए किदं। मं पुण अणवरद्धं अबळत्ति करिअ पहरन्तो कहं ण ळज्जसि।** (आत्मानं निर्दिश्य मदनावस्थां नाटयन्ती प्रकाशम्) **हञ्जे! कीस उण एदं घणपळ्ळवणिरुद्धसूरकिरणं तादिसं एव्व चन्दणळदाघरअं ण मे अज्ज सन्दावदुक्खं अवणेदि।**

---

(क) भगवन्! कुसुमायुध! येन त्वं रूपशोभया निर्जितोऽसि, तस्मिन् न किञ्चित् त्वया कृतम्। मां पुनरनपराद्धामबलेति कृत्वा प्रहरन् कथं न लज्जसे। हञ्जे! कस्मात् पुनरेतद् घनपल्लवनिरुद्धसूर्यकिरणं तादृशमेव चन्दनलतागृहं न मेऽद्य संतापदुःखमपनयति।

---

माणा मदनशरशकलीकृतहृदयोन्मत्तवदनङ्गमङ्गिनमिव पुरो भावयित्वाह— भगवन्! कुसुमायुध! येन त्वं रूपशोभया निर्जितोऽसि, तस्मिन् न किञ्चित् त्वया कृतम्। मां पुनरनपराद्धामबलेति कृत्वा प्रहरन् कथं न लज्जसे। भगवन्निति पूर्वावस्थाया उत्कर्षं वर्तमानावस्थाया निकर्षं च विचिन्त्य क्षेपमन्तर्निधायोक्तिः। मद्गौरवमजानत्याधिक्षिप्तोऽस्मीति बुद्धिं मा कृथाः। विश्वोदयस्थितिलयानां त्वदायत्तत्वं जानामि। अत एव भगवन्निति सम्बोधनम्। न पुनरेतच्छेपतया वचनम्। तत्र भवदसमीक्ष्यकारितैव निमित्तम्। तदुन्मीलनमेव मया क्रियते। कुसुमायुध! अतिमृदुलकुसुमप्रकरैरेव धनुश्शरादिविश्वविजयसाधनसम्पादनेन लोकोत्तरवीरधर्मनिर्वाहकत्वेन लोकत्रयविश्रुत!। एवमुत्कर्षस्य परां कोटिमधितिष्ठति त्वयि तद्गुणीकरणनिपुणं निकर्षं पश्यन्ती कथमहमनपलपन्ती तटस्थवत् तिष्ठामि। नैतत् सौहार्दसदृशमित्याक्षेपावतरणमार्गः। येनेति। आवयोर्बुद्ध्युपारूढस्य तस्य महात्मनो नामोन्मीलनमतीव तवानिष्टमित्याच्छाद्यानुवादरूपेण कथ्यते। नात्र विसंवाद इति चानुवादवाक्येन व्यज्यते। त्वं, न त्वदीयः कश्चित्। रूपशोभया उत्कर्षसर्वस्वनिदानभूतया। न तु तुच्छे-

**चेटी** — (सस्मितम्) (क) जाणामि अहं एत्थ कारणं।

(क) जानाम्यहमत्र कारणम्। किन्तु असम्भावनीयमिति भर्तृदारिका

नापराधेन । निर्जितः न तु समीकृतः । अनेन प्रतिपरिभवस्याशक्यता व्यज्यते । असीति प्रत्यग्रपराजयविषयतया वर्तसे, न तु पुरातनोऽयं परिभवः । अनेनातीव लज्जाविषयत्वं द्योतयति । तस्मिन् तद्विषये । न किञ्चिद्, महान् प्रतिपरिभवस्तिष्ठतु । ममेदमनिष्टं त्वयाचरितमित्यपि न बोधितम् ।

"कौर्म सङ्कोचमास्थाय प्रहारानभिमर्षयेद्"

इति नीतिरवलम्ब्यत इति चेद्, अस्तु । एतन्नातीव लज्जावहम् । मां पुनः पुनश्शब्दोऽतीव प्रवृत्तेर्वैषम्यं द्योतयति । मां त्वयि सबहुमानामनपराधाम् अत एव प्रहारायोग्याम् अबलेति कृत्वा अबला स्त्री बलहीना इति च मतिं कृत्वा प्रहरन् दिवानिशमनन्यपरतया ताडयन् कथं न लज्जसे । न कोऽपि प्रकारस्तव निर्लज्जताप्रयोजकः । बलवता स्वगौरवनिमित्ते सर्वस्वेऽपहृते अप्रतिक्रियस्य सचेतनस्य निषिद्धदुर्बलजननिरन्तरपीडने लज्जा भवत्येव । तव न तथा । अतस्तव पुरातनं गौरवमप्ययशोनिह्नुतम् । अतो भगवन्नित्यादिकमपहास्यम् इत्यधिक्षेपः । मयीव तस्मिन्नपि निजसामर्थ्यप्रकटनेन मदानुकूल्यनयनमेव तव युक्तमित्यभिप्रायः । एवं वागारम्भानुभावेनातिप्रकाशितचित्तव्याक्षेपा उद्दीपनोद्दीपितसन्तापा सखीं प्रत्याह— हञ्जे ! कस्मात् पुनरेतद् घनपल्लवनिरुद्धसूर्यकिरणं तादृशमेव चन्दनलतागृहं न मेऽद्य सन्तापदुःखमपनयति । घनपल्लवेति । नात्र देशस्यापराधः शङ्क्यः । तादृशमेवेति । यथा पूर्वं सन्तापशमनानुकूलं दृष्टं, तथैवेदानीमप्यस्य सन्निवेशः । तथापीदानीं सन्तापकृतम् औष्ण्यकृतं दुःखं नापनयति । अत एव कस्मादिति निमित्तपरीप्सया चापलेन प्रश्नः ॥

ततः सा सस्मितमाह — पूर्वमेवास्य वस्तुनो निरूपितत्वात् तद्रहस्यमुन्मीलयितुं व्यसनेऽपि सस्मितमुक्तिः । जानाम्यहमत्र कारणम् ।

किन्तु असम्भावणीअं ति भट्टिदारिआ ण तं पडिवज्जदि।

**नायिका** — (आत्मगतम्) (क) आळक्खिदह्मि इमाए। तह वि पुच्छिस्सं दाव। (प्रकाशम्) हञ्जे! किं तव एदिणा। कहेहि दाव, किं तं कारणं।

**चेटी** — (ख) एसो दे हिअअच्छिदो वरो।

न तत् प्रतिपद्यते।

(क) आलक्षितास्म्यनया। तथापि प्रक्ष्यामि तावत्। हञ्जे! किं तवैतेन। कथय तावत्, किं तत् कारणम्।

(ख) एष ते हृदयेष्टो वरः।

किन्तु असम्भावनीयमिति भर्तृदारिका न तत् प्रतिपद्यते। अत्र इदानीमस्य सन्तापापनयनासामर्थ्ये कारणं जानामि। न त्विदानीमूह्यते। तर्हि कथ्यतामिति चेत्, तत्र वैफल्यमाह — किन्त्विति। असम्भावनीयमिति अघटमानमिति। उक्त्वेति शेषः। न तु मत्वा। मनस्तु संवदत्येव। त्वं वाचा निरस्यसि। अतो मद्वचनमरण्यरुदितायमानं भवेत्। तन्न व्याहरामि। इति तन्निर्बन्धप्रकाशनायाक्षेपोक्तिः॥

तदुक्तिप्रकारेण शङ्कते — आलक्षितास्मि अनया। तथापि प्रक्ष्यामि तावत्। मम हृदयरहस्यमनया ज्ञातमिव। तथापि प्रश्नेन निर्णेष्यामि। हञ्जे! किं तव एतेन। कथय तावत्, किं तत् कारणम्। एतेनेति। त्वद्वचने मम विश्वासो न भवेद् इत्यादिशङ्कया अलम्। त्वया निरूपितं कारणं वद॥

एसो दे हिअअच्छिदो वरो। एष ते हृदयेष्टो वरः। हृदयप्रार्थितोऽनुग्रहः, वरत्वेनापेक्षितः पुरुष इत्यर्थद्वयसाधारणशब्दस्य 'व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति न्यायेन तद्रहस्यभेदनोपायतया वैवश्यस्फुटीकरणेन रसपरिपोषप्रतिपादनाय च कविना चेटीमुखेन उपायप्रकारे प्रतिपादिते

**नायिका**— (सहर्षं ससम्भ्रमं चोत्थायाग्रतो द्वित्राणि पदानि गत्वा) (क) कहिं कहिं सो।

**चेटी**— (उत्थाय सस्मितम्) (ख) भट्टिदारिए! को सो।

(नायिका सलज्जमुपविश्याधोमुखी तिष्ठति।)

**चेटी**—भट्टिदारिए! णं एदह्मि वत्तुकामा। एसो दे हिअअच्छिदो वरो देवीए दिण्णत्ति सिविणए पत्थाविदे जो तक्खणं एव्व विमुत्तकुसुमचावो विअ भअवं मअरद्धओ

---

(क) कस्मिन् कस्मिन् सः।

(ख) भर्तृदारिके! कः सः। भर्तृदारिके! नन्वेतदस्मि वक्तुकामा। एष ते हृदयेष्टो वरो देव्या दत्त इति स्वप्ने प्रस्तुते यस्तत्क्षणमेव विमुक्तकुसुमचाप इव भगवान् मकरध्वजो भर्तृदारिकया दृष्टः। स तेऽस्य सन्तापस्य कारणम्।

---

सा स्वमनोवृत्त्यनुसारेण एष हृदयेष्टः पुरुषोऽग्रतः प्राप्त इत्युक्तमिति मत्वा सम्भ्रमेण द्वित्राणि पदानि गत्वा कस्मिन् कस्मिन् स इति स्वयमेव रहस्यं प्रकाशितवती॥

अत एव चेटी सस्मितमाह। इयन्तं कालमतिनिगूढोऽयमर्थः अनया स्वयमेव प्रकाशितः। अतः परमतिस्फुटीकरोमि। न पूर्ववच्चित्तव्याक्षेपमनुसरामि। इति मत्वाह— भर्तृदारिके! कः स इति। न पूर्वं कोऽपि प्रस्तुतः, प्रसिद्धोऽपि प्रकरणसिद्धत्वेन न ज्ञातः। तदुच्यतामिति शेषः॥

एवं गूढभेदेन तस्या लज्जावैवश्यमालक्ष्य पूर्वं वक्तुमारब्धस्य कथनेन प्रस्तुतप्रश्नोत्तरं समर्थयति— भर्तृदारिके! नन्वेतदस्मि वक्तुकामा। एतदिति वक्ष्यमाणः प्रकारः। अन्तरा त्वया स्वचित्तानुसारेणार्थान्तरं निरूप्य सम्भ्रमः कृतः। न तु मयैतदपेक्ष्योक्तमिदमिति। संगृहीतं विवृणोति— एष ते हृदयेष्टो वरो देव्या दत्त इति स्वप्ने प्रस्तुते यस्तत्क्षणमेव विमुक्तकुसुमचाप इव भगवान् मकरध्वजः भर्तृदारिकया दृष्टः। स

भट्टिदारिआए दिट्ठो। सो दे इमस्स सन्दावस्स कारणं, जेण एवं सहावसीदळं पि चन्दणळदाघरअं ण दे अज्ज सन्दाव-दुक्खं अवणेदि।

**नायिका**—(चतुरिकाया अलकानि सज्जयन्ती) (क) हञ्जे! चउ-रिआ खु तुवं। किं दे अवरं पच्छादीअदि। ता कह-इस्सं।

**चेटी**—(ख) भट्टिदारिए! णं दाणिं एव्व कहिदं इमिणा वराळावमत्तजाणिदेण सम्भमेण। ता मा सन्तप्प। जइ

---

येनैवं स्वभावशीतलमपि चन्दनलतागृहं न तेऽद्य सन्तापदुःखमपनयति।

(क) हञ्जे! चतुरिका खलु त्वम्। किं तेऽपरं प्रच्छाद्यते। तत् कथ-यिष्यामि।

(ख) भर्तृदारिके! नन्विदानीमेव कथितम् अमुना वरालापमात्रजनितेन

---

ते अस्य सन्तापस्य कारणम्। येनेवं स्वभावशीतलेमपि चन्दनलतागृहं न तेऽद्य सन्तापदुःखमपनयति। यस्तत्क्षणमेवास्यनेन देवादागतत्वं द्योतितम्। मकरध्वज इवेति व्यतिरेकविशिष्टयोत्प्रेक्षया तव युक्त एवायमभिलापः, नात्र मम वैमत्यमित्यानुकूल्यं द्योत्यते। येनैवमिति। ईदृशस्य सन्तापस्य एवम्भूतः शिशिरोपचारो नोपशमहेतुः, प्रत्युत पोषक एवेत्यर्थः॥

अलकानि सज्जयन्तीति स्वरहस्यं प्रति तस्या अन्तरङ्गतामापा-दयितुमावर्जनप्रकारः। अत एव हञ्जे! चतुरिका खलु त्वम्। किं ते अपरं प्रच्छाद्यते। तत् कथयिष्यामि इति तद्गुणवर्णनपूर्वकं स्ववैवश्यप्रलापो-पक्रमः। प्रच्छाद्यत इति छादितमपि त्वया स्पष्टीक्रियत एव। अत एव चतुरिकासि। तद् अस्मदपाटवं सखीवञ्चनं च परिशिष्यते। तन्मास्तु। सर्वमेव कथयिष्यामि॥

इति तस्याः सन्तापपोपकं प्रलापारम्भमालक्ष्य तं निरुध्य ज्ञातत्वेन सर्वमङ्गीकृत्य स्वोत्प्रेक्षासामर्थ्येन तदाश्वासनार्थं पूर्वमेव लक्षितं तस्याप्य-नुरागबन्धमुद्बोधयति—भर्तृदारिके! नन्विदानीमेव कथितम्। न

अहं चउरिआ, तदो सो वि भट्टिदारिअं अपेक्खन्तो ण मुहुत्तअं पि अण्णहिं अहिरमिस्सदि त्ति एदं पि मए आ ळक्खिदं एव ।

**नायिका**—(सास्रम्) (क) हञ्जे! कुदो मे एत्तिआणि भाअधेआणि ।

सम्भ्रमेण । तन्मा संतप्यस्व । यदहं चतुरिका, ततः सोऽपि भर्तृदारिकामपश्यन् न मुहूर्तमप्यन्यस्मिन्नभिरमते इत्येतदपि मयालक्षितमेव ।

(क) हञ्जे! कुतो मे इयन्ति भागधेयानि ।

त्वतः परं कथयितुमपेक्ष्यमाणं किञ्चिद् इत्यर्थः । अमुना वरालापमात्रजनितेन सम्भ्रमेण । वरालापेति । अक्षरद्वयालापमात्रेण अन्यविषयेणापि अन्यथाप्रतीत्या जनितो यः सम्भ्रमः, अनेनैव वक्तव्यं सर्वमुक्तम् । अतस्तदर्थं प्रयासं मा कृथाः । तद् एतदलाभादिशङ्कया सन्तापं परित्यज । यद्यहं चतुरिका, ततः सोऽपि भर्तृदारिकामपश्यन् न मुहूर्तमप्यन्यस्मिन्नभिरमते इति एतदपि मया आलक्षितमेव । चतुरिकेति । एकदेशेन मन्नाम्नः अन्वर्थता त्वयाङ्गीकृता । एवमन्यत्रापि विश्वसिहि इत्यर्थः । सोऽपीति । न केवलं त्वं तमपश्यन्ती । नात्र विशेष इत्यर्थः । अन्यस्मिन् वस्तुनि नाभिरमते । एतदपि मया आलक्षितमेव । एतदपीति । न केवलं तन्निमित्तोऽयं सन्ताप इत्येव, त्वन्निमित्तस्तस्य सन्तापोऽपीत्यर्थः । आलक्षितमिति । प्राथमिके दर्शन इति शेषः । एवेति । न तु युक्त्या इदानीमुत्प्रेक्षितोऽर्थः, पूर्वसिद्ध एव । अतो विश्वसिहि इति तदाश्वासनप्रयत्नः ॥

इति तद्वचनेन जातस्पृहा स्वभाग्यं प्रति शङ्कते—हञ्जे! कुतो मे इयन्ति भागधेयानि । तस्य महापुरुषस्य कारुण्यविषयतां निश्चेतुं स्वभाग्ये मे न विश्वासः ॥

**चेटी** — (क) भट्टिदारिए! मा एव्वं भण। किं महुमहणो वच्छत्थळेण ळच्छिं अणुव्वहन्तो णिव्वुदो होइ।

**नायिका** — (ख) किं वा सुअणो पिअं वज्जिअ अण्णं भणिदुं जाणादि। सहि! अदो वि[1] सन्दावो[2] अहिअदरं मं बाहेइ। जं सो महाणुभावो वाआमेत्तएण वि अकिदपडिवत्तिं अदक्खिणत्ति मं सम्भावइस्सिदि। (इति रोदिति।)

(क) भर्तृदारिके! मैवं भण। किं मधुमथनो वक्षस्स्थलेन लक्ष्मीमनुद्वहन् निर्वृतो भवति।

(ख) किं वा सुजनः प्रियं वर्जयित्वान्यद् भणितुं जानाति। सखि! अतोऽपि संतापोऽधिकतरं मां बाधते। यत् स महानुभावो वाङ्मात्रेणाप्यकृतप्रतिपत्तिमदक्षिणेति मां सम्भावयिष्यति।

भर्तृदारिके! मा एवं भण। किं मधुमथनो वक्षस्स्थलेन लक्ष्मीमनुद्वहन् निर्वृतो भवति। मधुमथन इति वीराग्रेसरोऽपि स्ववीर्याय श्लाघमाना लक्ष्मीर्यदि वक्षसि न परिक्रीडते, न क्षणमपि सुखं लभते। तथा स महापुरुषोऽपि वनिताकुलवैजयन्तीं त्वामलभमानः कथं सुखलेशभाग् भवति। अतः परिपूर्णानि स्वभाग्यानि मा निरस्थ इत्यप्रस्तुतार्थप्रकाशनेन तामाश्वासयति॥

इति तत्स्तुतिं नातिसंमानयन्त्याह — किं वा सुजनः प्रियं वर्जयित्वान्यद् भणितुं जानाति। तव सौजन्योक्तिरेवेयम्। अत एव तद्विश्वासेन मम न कृतार्थता निरासो वा। यद् भावि तद् भवतु। इदमेव मम गण्डोपरि पिटकायमानम् इत्याह — सखि! अतोऽपि सन्तापोऽधिकतरं मां बाधते, यत् स महानुभावो वाङ्मात्रेणाप्यकृतप्रतिपत्तिमदक्षिणेति मां सम्भावयिष्यति। अतोऽपीति। न केवलं समीहितालाभेन सन्तापः अन्तस्तापः अधिकतरं देहतापादित्यर्थः। स महानुभाव इति

१. 'विअ मे स' घ. च. पाठः. २. 'वादो अ' क. ख. ग. घ. ङ. पाठः.

**चेटी —** (क) **भट्टिदारिए! मा रोद।** (उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य हृदये ददाति।) **णं भणामि मा रोद त्ति। अअं खु थणपट्टदिण्णो चन्दणपल्लवरसो इमेहिं अविरळपडन्तेहिं अस्सुबिन्दूहिं उण्हीकिदो ण दे[1] हिअअसन्दावदुक्खं अवणेदि।** (कदलीपत्रमादाय वीजति।)

---

(क) भर्तृदारिके! मा रुदः। ननु भणामि मा रुद इति। अयं खलु स्तनपट्टदत्तश्चन्दनपल्लवरसोऽमीभिरविरलपतद्भिरश्रुबिन्दुभिरुष्णीकृतो न ते हृदयसन्तापदुःखमपनयति।

---

लोकोत्तरत्वेन सत्कारयोग्यता प्रकाश्यते। वाङ्मात्रेणापीति। आसतां पाद्यार्घ्यदानादयः, सुलभेन समुचितेन आलापमात्रेणापि। अकृतप्रतिपत्तिमननुष्ठितकालोचितसमुदाचाराम् अकृता प्रतिपत्तिः प्रवृत्तिर्यया इति कृत्वा। अदक्षिणेति अविदग्धा धर्मादिकृत्येष्वकुशला इति। सम्भावयिष्यतीति। मयि अबहुमाननिमित्तां सम्भावनां करिष्यति। अतस्तत्कारुण्यस्य प्रतिबन्धो मम चापलेनैवोत्थापितः। अत्र किं क्रियतामिति रोदनम्॥

भर्तृदारिके! मा रुदः। चन्दनपल्लवरसावसेके तस्यापि वैफल्यमाशङ्क्य प्रका(रान्त)रेण रोदनं निवारयति — ननु भणामि मा रुद इति। अयं खलु स्तनपट्टदत्तश्चन्दनपल्लवरसोऽमीभिरविरलपतद्भिरश्रुबिन्दुभिरुष्णीकृतो न ते हृदयसन्तापदुःखमपनयति। हृदयस्य सन्तापेन यद् दुःखम् अन्तस्तापेन देहजेन तापेन चान्योन्यानुग्राहिणा यद् दुखं[2], तन्नापनयति। अतो मा रुद इति शिशिरोपचारान्तरं करोति॥

---

१. 'दे स' घ पाठः. २. 'यदुः' ङ. पाठः.

**नायिका** — (हस्तेन निवारयन्ती) (क) सहि! मा वीजेहि। उण्हो खु एसो कदळीदळमारुओ।

**चेटी** — (ख) भट्टिदारिए! मा इमस्स दोसं करेहि[1]।

कुणासि घणचन्दणळआपळ्ळवसंसग्गसीदळं पि इमं।
णीसासेहि तुमं च्चिअ कदळीदळमारुअं उण्हं ॥ १ ॥

**नायिका** — (ग) सहि! अत्थि कोवि इमस्स दुक्खस्स उवसमोवाओ।

---

(क) सखि! मा वीज। उष्णः खल्वेष कदलीदलमारुतः।

(ख) भर्तृदारिके! मा अस्य दोषं कुरु।

करोषि घनचन्दनलतापल्लवसंसर्गशीतलमपीमम्।
निःश्वासैस्त्वमेव कदलीदलमारुतमुष्णम् ॥

(ग) सखि! अस्ति कोऽप्यस्य दुःखस्योपशमोपायः।

---

तदसहमानाह — सखि! मा वीज। उष्णः खल्वेष कदलीदलमारुतः। उष्णः खलु उष्ण एव। न शीत इत्येव न, प्रतिकूलोऽपि भवतीत्यर्थः ॥

भर्तृदारिके! मा अस्य दोषं कुरु। कथयेति वा।

करोषि घनचन्दनलतापल्लवसंसर्गशीतलमपीमम्।
निःश्वासैस्त्वमेव कदलीदलमारुतमुष्णम् ॥

नास्यौत्सर्गिकः संसर्गजोऽपि दोषः। त्वमेवोष्णेन निस्सरता निःश्वासेन संसर्गवशादुष्णं करोषि। अतो रोदनमतिनिश्वासं च शिशिरोपचारविरुद्धं नियम्य सन्तापं सोढ्वा तूष्णीमास्स्वेत्यर्थः ॥

सखि! अस्ति कोऽप्यस्य दुःखस्योपशमोपायः। अस्येति। अस्य सन्तापदुःखस्य। उपशमोपायः पूर्वमङ्गीकृतस्य वैफल्याद् उपायान्तरविषयः प्रश्नः। दुःखस्येति समीहितालाभनिमित्तस्य इति च निगूढाभिप्रायः।

---

१. 'हे' क. ग. घ. ङ. पाठः.

**चेटी** — (क) भट्टिदारिए ! अत्थि, जदि सो इह आअच्छे ।

(ततः प्रविशति नायको विदूषकश्च । )

**नायकः** —

व्यावृत्त्यैव सितासितेक्षणरुचा तानाश्रमे शाखिनः
कुर्वत्या विटपावसक्तविलसत्कृष्णाजिनौघानिव ।

---

(क) भर्तृदारिके ! अस्ति, यदि स इहागच्छेत् ।

---

उभयशेषतया उत्तरं — भर्तृदारिके ! अस्ति, यदि स इहागच्छेत् । भर्तृदारिके ! इति त्वदभिप्रायो मया ज्ञात इत्यर्थः । स इहागच्छेदिति उपायान्तरस्य निष्फलत्वं द्योतयति । यदि तदागमनं, तर्हि दुःखस्य मूलोच्छेदायोपायो भवेत् ॥

इत्येतत्पर्यन्तेन नायिकाया अयोगविप्रलम्भस्य उद्दीपनादिगौरवेण प्रकर्षं प्रतिपाद्य तस्यैव विपरीतसम्भावनया काष्ठाप्राप्तिं नायकस्य रतिपरिपोषं च युगपत् प्रतिपादयितुं सूचितस्य नायकप्रवेशस्योपक्रमः । अथ प्रकृतदयावीराङ्गभूतत्वेन रसान्तरप्रवेशोन्मुखो नायको विधिबलेन साक्षात्कृते निजसम्बन्धोचितसौरूप्यादिगुणसमुदिते कन्यारत्ने नवावस्थमनुरागमवलम्बमानस्तद्विनयलज्जाकटाक्षवीक्षणादिसंकल्पपरम्परानिरन्तरिते चिन्तौत्सुक्यादिव्यभिचारितरङ्गोपबृंहिते रतिसागरे निमज्जन् विषयान्तरविमुखमानसो वियोगायोगविप्रलम्भसाधारणेषु सदृशानुभावादिषु विरहिविनोदनेषु भाग्यवशात् स्वप्नदर्शनमनुभूय स्वाप्नतत्सङ्गमाधिकरणतया सुभगतमप्रदेशवासे चित्रलेखनादिविनोदनान्तरे च त्वरमाणः प्रातरेव गुरुशुश्रूषादिकं निर्वर्त्य विरहदुस्सहदिवसातिवाहनार्थं तं देशं प्रति नर्मसचिवेन सह गच्छन् मेदुरोन्मादतरलहृदयोऽनङ्गमङ्गिनमिव पुरोवर्तमानमभिमुखीकृत्य वदति — व्यावृत्त्येत्यादि । पुष्पेषो ! भवता एते शरा मुधैव

---

१. 'ङ्गत्वे' घ. पाठः.

यद् दृष्टोऽस्मि तया मुनेरपि पुरस्तेनैव मय्याहते
पुष्पेषो! भवता मुधैव किमिति क्षिप्यन्त एते शराः॥ २॥

---

किमिति क्षिप्यन्ते। कालायसदृढघटितोत्तेजितनाराचादिभिर्धन्विनां गणेन यद् दुष्करं, तदतिपेलवैः पुष्पैरेव सूक्ष्मतममनोभेदनादिकमनायासेन साधयन् अन्यधानुष्कव्यतिरेकेण गुणोचितसुप्रसिद्धनामधेय! भवता जगत्पूज्येन। नायं गौरवानुरूपो व्यापारः। एते सर्वतः प्रकाशमानाः। शराः हिंसाकरणभूताः। मुधैव नाल्पमपि फलं साधयितुम्। एवकारेण अन्यस्य साधकत्वे सहकारितापि नास्ति। किं पुनः साधकत्वमिति व्यज्यते। किमिति। मुधाप्रयोगे किं फलत्यसमीक्ष्यकारिताया असामर्थ्याच्चान्यत्र। तद् विरमेत्यर्थः। क्षिप्यन्ते निरस्यन्ते। मयि त्वच्छराणामविषयभूते। अन्यत्र स्वैरं प्रयुज्यन्ताम्। भवद्गौरवं जानता मया निवार्यसे, न संरम्भेणाधिक्षिप्यसे इत्याक्षेपप्रकारः। कथं तव शराविषयत्वमिति चेत् तत्राह — तया मुनेरपि पुरः दृष्टोऽस्मि यत्, तेनैवाहते। तया निखिलनारीगुणरत्नाकरभूतया अस्मन्नयनचकोरचन्द्रिकया विनयाचारलज्जालालितया कुलपालिकया नासीरसरणिमनुसरता त्वयाप्यनुभूतसकलवृत्तान्तया न त्वसिद्धया। अत एव तच्छब्देन निर्देशः। मुनेरपि त्रिकालज्ञस्य वैषयिकविकारनिराकरणबद्धदीक्षस्य। पुरः अग्रतः तत्समक्षम्। अपिशब्देन विशृङ्खलप्रवृत्तिविरोधे सत्यपि दर्शनकर्मताङ्गीकारेण सहजलज्जापरगौरवातिलङ्घिचित्तस्य पक्षपातातिशयः प्रकाश्यते। तया दृष्टोऽस्मीति। एवं दर्शनं प्रति कर्मभावः कतिसंख्यैर्जन्मभिः कीदृशेन पुण्यपरिपाकेन लभ्यत इति न ज्ञायते इत्यात्मनि धन्यम्मन्यता व्यज्यते। यदि पुरोगतेषु वस्तुषु नयनगोचरेषु मध्ये त्वमपि दृष्टः, का तत्र कृतार्थता इति चेत्, तत्र विशेष इत्याह — व्यावृत्त्यैव गुरुपारतन्त्र्येण गन्तुमुद्यतया परावृत्य कतिपयपदविन्यासानन्तरमस्मद्धैर्यसर्वस्वपश्यतोहरविलासं विवलिताङ्गलतिकमस्मदभिमुखं सन्निवृत्त्यैव। एवकारेण दर्शनैकपरत्वं व्यावर्तनस्य व्यज्यते, न खलु 'दर्भाङ्कुरेणे'त्यादिवच्छलाङ्गीकारपाटवं चातिमुग्धतयेति च। अत एव दर्शनस्योत्तरकालक्रियात्वम्। अत्र वलिताख्या शृङ्गारदृष्टिः प्रतिपादिता।

"वलितं तन्निवृत्तस्य भूयस्त्र्यश्रावलोकनम्"

इति । भूयश्च नयनकान्तिसन्तानसुभगां तत्कालानुभूतामवस्थां समुचितसम्भावनागर्भत्वेन श्लाघते — सितेत्यादि । सितासितया अक्षिगोलककनीनिकाभागप्रसरन्त्या मन्दाकिनीकलिन्दजा[1]मिलितपरस्पर[2]परभागसुभगामृतप्रसरहृद्यया प्रसन्नया कामप्रदया ईक्षणरुचा ईक्ष्यतेऽनेनेति कृत्वा नयनकान्त्या क्रमेण रूपेष्वान्तरालिकेषु व्याप्नुवत्या आश्रमे गमनापात्रभूते तान् श्लाघ्यजन्मनः अस्माभिरपि साक्षात्कृतौज्ज्वल्यान् शाखिनः प्रचुरसोपयोगशाखाशालिनः तरुवरान् विटपेष्ववसक्ता निरन्तरलग्नाः विलसन्तः प्रत्यग्रतया प्रकाशमानाः कृष्णाजिनानां स्वतश्शबलानाम् ओघा येषु तथाविधान् कुर्वत्येव । आश्रमे शाखिन इति तथाविधसम्भावनायोग्यत्वम् । आश्रमसन्निधानेन स्थावराणामपि तन्नयनकान्तिविषयता तपःफलमिवाविरासीद् इति व्यज्यते । भिन्नरूपेषु वस्तुषु तत्तदुचितसौन्दर्यसम्भावनाभावनपटीयसी अनुभवैकगोचरा तस्या अवलोकनचातुरीति श्लाघातिशयः । कुर्वत्येवेत्यनेन अन्यावलोकने अशक्यवस्त्वन्तरकरणात्मा विशेषः सम्भावनानुप्रवेशेन उत्प्रेक्षारूपेण प्रकाशितः । तेनालम्बनस्य लोकोत्तरताप्रतिपादनद्वारा रतेरतिचमत्कारकारित्वम् । अत्र स्निग्धाख्या दृष्टिः प्रकाशिता ।

"स्निग्धं तद् यस्य विषयस्तत्प्रभामिलितो भवेद्"

इति । एवमान्तरालिकेषु तत्तदुचितसम्भावनाभाजनभूताया ईक्षणरुचः साक्षात् कर्मभूते मयि निखिलजनिफलविधानसम्भावनासंरम्भः किं कथ्यतामित्युचितैव धन्यम्मन्यतेति व्यज्यते । तेनैव प्राथमिकेन व्यावर्तनानन्तरदर्शनेन । एवकारेणान्यस्य सहकारितामपि व्यावर्तयति । अत एव मुधेत्युक्तम् । आहते आ समन्तात् पुनःप्रवृत्त्यनपेक्षं वशीकृते । दासादीनामाहत्य वशीकरणस्य दृष्टत्वात् तथोक्तिः । शरकार्यत्वाच्च आहत इति । तदानीमानन्दावहत्वेऽपि 'दिग्धोऽमृतेन च विषेण च' इत्युक्तवद् वियोगे पीडाकरत्वं च व्यज्यते । सर्वथा नात्र त्वच्छराणां प्रवृत्तियोग्यत्वं, तस्माल्लाघवहेतुं वृथाप्रयासं मा कृथा इत्यर्थः ॥ २ ॥

---

१. 'कन्याभि', २. 'रभा' इ. पाठः.

**विदूषकः**—(क) भो वअस्स कहिं! खु गअं दे धीरत्तणं।

**नायकः**—वयस्य! ननु धीर एवास्मि। कुतः,

नीताः किं न निशाः शशाङ्करुचयो नाघ्रातमिन्दीवरं
किं नोन्मीलितमालतीसुरभयः सोढाः प्रदोषानिलाः।

(क) भो वयस्य! कस्मिन् खलु गतं ते धीरत्वम्।

---

एवमुन्मादानुबन्धेन भ्रान्तवदस्मिन् वदति नर्मसचिवः स्वसाध्यस्यातिप्रवृत्तिमाशङ्कमानः ससम्भ्रममाह—भो वयस्य! कस्मिन् खलु गतं ते धीरत्वम्। गतमिति निश्चयः। पूर्वं धीराग्रेसरस्येदानीमतिचापलदर्शनात् कल्प्यत इति भावः॥

एवं तद्वचनमाकर्ण्य तदवस्थ एवोत्तरं वदति। यथा कश्चिदुन्मत्तस्त्वमुन्मत्त इत्यधिक्षिप्तो नाहमुन्मत्त इत्युन्मत्तावस्थया साधयति, तथायमप्यात्मधीरत्वं साधयति—वयस्य! अस्मदवस्थावेदी कथमेवं वदसि। नन्विति। कथं तव विसंवादो जातः। धीर एव धैर्यस्य प्रध्वंसो न जात इत्येव न, अवस्थोचितः प्रकर्षश्चास्ति इत्येवकारेण व्यज्यते। तदेव साधयितुमारभते—कुत इति। नैतत् प्रतिज्ञामात्रं, त्वां संवादयामीत्यर्थः।

नीता इत्यादि। भवान् अस्मद्वृत्तान्तसर्वस्ववेदी। केन हेतुनेति शेषः। न कोऽपि निरूप्यमाणस्तादृशो हेतुः, यो ममाधीरतासाधकः। मां विपरीतसम्भावनायोग्यं। विधुरेषु प्रियजनवियोगायोगखिन्नेषु भूतेषु भवत्सु भाविषु च मत्सब्रह्मचारिषु जनेषु मध्ये अधीर इत्यभिधानप्रकारपरामर्शः। धीरतम इति वक्तव्येऽन्यथा कथनं मौढ्यहेतुकमेवेत्यर्थः। अभिधत्ते इदानीमपि मौढ्यस्य बुध्द्युपारोहोऽभिधानेन ज्ञायते। तेन धीरत्वसाधकानि बहूनि प्रतिपाद्य तव मौढ्यमपनयामीति तदारम्भः। नीताः अतिवाहिताः, न तु गताः। क्षणमुहूर्तयामादिषु निरन्तरजागरणजृम्भमाणं

झङ्कारः कमलाकरे मधुलिहां किं वा मया न श्रुतो
निर्व्याजं विधुरेष्वधीर इति मां केनाभिधत्ते भवान् ॥ ३ ॥

वैषम्यं सोढापि गमिताः । किं नेति । परेण सिद्धस्यापलापे क्रियमाणे भावसाधनादभावप्रश्नद्वारा किमाक्षेप एव युक्त इति तथैवोपक्रमः । विपर्ययज्ञानग्रहग्रस्तं त्वां कथं बोधयामीति भावः । निशाः न त्वेका द्वे वा निशार्धं वा । दिनस्यापि दुरतिवाहत्वे विरहिणामतिपीडावहत्वान्निशाग्रहणम् । तत्रापि विशेषमाह — शशाङ्करुचयः शशाङ्केन रुचिर्यासु इति व्यधिकरणबहुव्रीहिः । चन्द्रिकासम्बन्धेन दुष्प्रेक्षा इत्यर्थः । अथवा घृतादिषु दहनसम्बन्धेन अयं दहन इत्याद्युक्तिवत् तद्भावारोपः शशाङ्करुचय एवेमाः इति । तथापि दुष्प्रेक्षत्वमेव साध्यम् । कथमियन्मात्रेण धैर्यं निश्चीयत इति चेत् पुनरपि शृणु । नाघ्रातमिन्दीवरम् । किमिति पूर्वस्मादनुषङ्गः । काकाक्षिन्यायेन वा । अथवा काक्वाक्षेपः । इन्दीवरशब्देन तद्गन्धो लक्ष्यते । गन्धस्य बाहुल्यं च फलम् । न केवलं निशातिवाहनमेव, प्रदोषानिलाः सन्ध्यासु विरहिजनरणरणकदाननिष्करुणा भिन्नरूपतया बहुप्रकारं वलमानाः समीरणाः किं न सोढाः । अत्र सहनेन तत्कारणभूतस्पर्शो लक्ष्यते । सोढा इति । नाहमन्यविरहिवन्मूर्छितः पतितः । तत्रापि सहकारिसामर्थ्याद् विशेषः । उन्मीलितमालतीसुरभयः निजसम्पर्कविशेषविजृम्भितमधुरमालतीकुसुमसमुद्भ्रान्तसौरभसमाश्लेषसंभृतसाङ्क्रामिकगुणसमाकृष्टेन्द्रियान्तराः । अत एवातिदुस्सहाः । न केवलं सन्ध्यातिवाहनम् । दिवापि कमलाकरे, न तु केवलं कमले । निरन्तरप्रसमरमिहिरकिरणसमुद्बोधितकमलषण्डमण्डिते पङ्कजवने मधुलिहां सौखशायनिकानामिव सरसगीतमागत्य उद्बोधनसमय एव सङ्गीभूय प्रविश्य निशानिचितं मधुरसं प्रेयसीसंविभागसुभगमागलं पीत्वा मदालसं विश्रम्य तत्र तत्र गायतामतिदुस्सहो झङ्कारः समरोद्यतमकरध्वजधनुष्टङ्कारसदृशः । किं वेति । एवं विकल्पेन पुनरपि बहुषु विरहिवैरिष्विन्द्रियार्थेषु विचार्यमाणेषु न केनाप्यहमन्यविरहिवत् परिभूतः । नात्रान्ध्यबाधिर्यादिकमिन्द्रियवैषम्यं जातम् । अतो धीरतम इति वक्तव्येऽन्यथाकथनं तव न शोभते ।

अथवा, न सम्यगहं ब्रवीमि । वयस्यात्रेय!

स्त्रीहृदयेन न सोढाः क्षिप्ताः कुसुमेषवोऽप्यनङ्गेन ।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम् ॥ ४ ॥

**विदूषकः**—(आत्मगतम्) (क) एवं अहीरत्तणं पडिवज्जन्तेण आचक्खिदो णेण हिअअस्स महन्तो आवेओ । ता

(क) एवमधीरत्व प्रतिपद्यमानेनाख्यातोऽनेन हृदयस्य महानावेगः । तदेवमाचक्षे । भो वयस्य! कस्मात् त्वमद्य लध्वेव गुरुजनं शुश्रूषयित्वेहागतः ।

तत्रापि क्रीडया चेद्, न वस्तुपर्यवसायित्वम् । न च तथा । यतो निर्व्याजं प्रशंसामन्तर्निधाय बहिः परिहासरूपेण नायमधिक्षेपः, क्व गतं धीरत्वमित्युक्तत्वात् । तत् तव न युक्तमित्यर्थः ॥ ३ ॥

एवमुन्मादतरलं स्वधैर्यं संसाध्य तदानीमेव रतिसागरकल्लोलायमानां तत्त्वदृष्टिरूपां मतिमालम्ब्याह—अथवा न (एतदेवं?) सम्यग् न समुचितार्थयुक्तं ब्रवीमि । अहमिति । त्वदुक्तमेव समीचीनम् । वयस्य! सर्वविस्रम्भवशंवद! विशिष्टगोत्रालम्बन! कोपं मा कृथाः । न वस्तुवृत्तमनुसृत्य मया धीर इति साधितं, येन सिद्धस्तवायमर्थ इत्यर्थः ।

स्त्रीहृदयेन स्त्रियां सक्तं हृदयं यस्य, नान्यत्र कदाचिदपि प्रवृत्तम् । स्त्रीशब्देन तत्त्वदृष्टिमनुसृत्य शास्त्रादिनिषिद्धं तत्सङ्गं प्रकाशयति । धर्मात्मेत्यादिवत् 'सप्तम्युपमान—'(वा० २. २. २४) इत्यादिना बहुव्रीहिः । स्त्रीगतहृदयेनेति केचित् । स्त्रिया इव हृदयं यस्येति अनङ्गविशेषणत्वेन केचित् । तत्र युक्तमङ्गीक्रियताम् । हेतुगर्भं विशेषणम् । न सोढाः । अत एव तं प्रति प्रलापः कृतः । कुसुमेषवः वस्तुवृत्ते विचार्यमाणे सर्वमधैर्यसाधकमेवेत्यर्थः । स्वयमनङ्गेन सङ्कल्पमात्रविभवेन अद्यैवासहने तद्विरुद्धवादे च कथं युगपदेव मनोवचसोः प्रवृत्तिर्घटते । विशेषतः सर्वसाक्षिणस्तव पुरः । अतो न सम्यगित्युक्तम् ॥ ४ ॥

एवं निरतिशयरणरणकसरणिमनुसरन्तीं तदवस्थामालक्ष्य स विमृशति—एवमिति । एवमधीरत्वं प्रतिपद्यमानेनाख्यातोऽनेन हृदयस्य

१. 'ता जाव ए' मूलपाठः.

एवं आचक्खामि। (प्रकाशम्) भो वअस्स! कीस तुवं अज्ज लहु एव्व गुरुजणं सुस्सूसिअ इह आअदो।

**नायकः**—वयस्य! स्थाने खल्वेष प्रश्नः। कस्य वान्यस्यैतत् कथनीयम्। अद्य खलु स्वप्ने जानामि सैव प्रियतमा (अङ्गुल्या निर्दिशन्) अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा। तदिच्छामि स्वप्नानुभूतदयितासमागमरम्येऽस्मिन्नेव प्रदेशे दिवसमतिवाहयितुम्। तदेहि गच्छावः।

(परिक्रामतः।)

---

महानावेगः। तदेवमाचक्षे। एवमधीरत्वमिति। पूर्वं भ्रान्तव्यवहारेण तदानीमेव तस्यान्यथाकरणेन वा धीरत्वमेव स्फुटीकृतम्। तेन चोत्कटः सम्भ्रमः। तद् एतदनुसरणे मे साध्यविरोधो भवेत्। तदन्यत्र चित्तमाक्षिपामीत्यर्थः। भो वयस्य! कस्मात् त्वम् अद्य लघ्वेव गुरुजनं शुश्रूषयित्वेहागतः। भो इति। एतत् सर्वं तिष्ठतु। अवस्थोचितं किञ्चित् पृच्छामि। वयस्येति। ममाभिप्रायमनिवेद्य प्रवृत्तिर्न युक्ता। अद्येति। न पूर्वमेवं सम्भ्रमो दृष्टः। लघ्वेव क्षिप्रमेव। इहागतः। पूर्वं गुरुशुश्रूषानन्तरं गुरुसन्निधावेव स्थितिनिर्बन्धः। अद्य प्रातस्तरां शुश्रूषानिर्वहणाद् देशान्तरागमनाच्च गुरुतरो हेतुः शङ्क्यते। स मे बोध्यतामित्यर्थः॥

एवं स्वाभिप्रायानुगुणं प्रश्नवचनमाकर्ण्य सप्रमोदमाह—वयस्येति। मच्चित्तानुसरणं तव चिराभ्यस्तमेव। स्थाने उचितावसरे। स्थाने इत्यव्ययं युक्त इति वा। एष प्रश्नः मया स्वयमेव कथयितुमुपक्रान्तस्य भवत्प्रश्नोत्तरत्वेन कथनमतीव युक्तमित्यर्थः। कस्य वान्यस्येति। अतिहृद्यमेतदात्मनिर्विशेषे त्वय्येव सङ्क्रमयितुं युक्तम्। तत् सादरं शृणु इत्यर्थः। एतदिति वक्ष्यमाणम्। अद्य खलु स्वप्न इति। पश्चिमयामावसाने। तेन स्वप्नफलस्य प्रियासम्बन्धस्याविलम्बो व्यज्यते, न रात्र्यन्तर इति च। जानामि इति वाक्यमध्ये प्रयुक्तो वक्ष्यमाणार्थे विसंवादो मा कल्पि, यथा-

**चेटी** — (कर्णं दत्त्वा ससम्भ्रमम्) (क) **भट्टिदारिए! पदसद्दो विअ सुणीअदि ।**

**नायिका** — (ससम्भ्रममात्मानं पश्यन्ती) (ख) **हञ्जे! मा ईदिसं आआरं पेक्खिअ को वि हिअअं मे तुलीअदु । ता उट्ठेहि ।**

---

(क) भर्तृदारिके! पदशब्द इव श्रूयते ।

(ख) हञ्जे! मा ईदृशमाकारं प्रेक्ष्य कोऽपि हृदयं मे तुलयतु । तदुत्तिष्ठ ।

---

दृष्टमेव कथ्यते इति स्वप्नस्य परिस्फुटत्वं प्रकाशयति । 'जाने स्वप्नविधौ ममाद्ये'त्यादिवत् । सैव प्रियतमेति । पूर्वं त्वयापि नयनोत्सवीकृता । प्रियतमेति स्वाप्नसम्बन्धेन स्वाजन्यातिशयो व्यज्यते । अङ्गुल्या निर्दिशन्नित्यभिनयसहितेन प्रदेशनिर्देशेन स्वाप्नसङ्गमविषयतया तस्मिन्नास्थातिशयो व्यज्यते । चन्द्रकान्तमणिशिलायामुपविष्टेति देशस्फुटीकरणम् । प्रणयकुपितेत्यवस्थास्फुटीकरणम् । प्रणयस्य परिचयप्रकर्षे सति कोपाद्युत्थापकत्वात् । कुपितेत्यनेन परिचयविशेषो व्यज्यते । अत एवोपालम्भसम्भावना । किमपीति अनिर्धारितविषयत्वम् । रुदतीति उपालम्भोपशमनावस्था । अतः प्रणयकोपः । तत्कार्यमुपालम्भनं रोदनेन तस्य स्तम्भनं च क्रमेण व्यज्यते । तदिति दैवात् स्वाप्नस्य दर्शनस्य विस्रम्भानुबद्धस्य सिद्धत्वादित्यर्थः । स्वप्नानुभूतेन मन्दभाग्यतया साक्षादलाभेऽपि स्वप्नरूपेणाप्यनुभूतेन प्रियासमागमेन रम्ये प्रदेशान्तरतः श्लाघनीये । अत एव दिवसातिवाहनस्यात्र योग्यता । एवं प्रश्नस्योत्तरमुक्त्वा त्वरां प्रकाशयति — तदेहीति ॥

एवं नायकागमने पदध्वनिमनुसृत्य विप्रलम्भविह्वलां नायिकां प्रति चेट्या उक्तिः — भर्तृदारिके! पदशब्द इव श्रूयते । तदिहैव स्थीयतां वा गम्यतां वा इति साधारण्येन निर्देशः । इवेति तर्कद्योतकः ॥

आत्मानं पश्यन्तीति । शिशिरोपचारादिकृतं देहस्य शोच्यमवस्थान्तरमन्यजनादर्शनीयं पश्यन्ती । गोपनापेक्षया ससम्भ्रममाह — हञ्जे! मा ईदृशमाकारं प्रेक्ष्य कोऽपि हृदयं मे तुलयतु । तदुत्तिष्ठ । अनेन

इमिणा रत्तासोअपादवेण ओवारिदाओ पेक्खह्म को एसो त्ति।

(तथा कुरुतः।)

**विदूषकः**— (क) भो वअस्स! एदं चन्दणळदाघरअं। ता पविसह्म।

(नाट्येन प्रविशतः।)

**नायकः**— (प्रविश्य)

चन्दनलतागृहमिदं
सचन्द्रमणिशिलमपि प्रियं न मम।

---

अनेन रक्ताशोकपादपेनापवारिते पश्यावः क एष इति।

(क) भो वयस्य! एतच्चन्दनलतागृहम्। तत् प्रविशावः।

---

रक्ताशोकपादपेनापवारिते पश्यावः क एष इति। ईदृशमिति चित्तचापलद्योतकम्। कोऽपीति, यः कश्चिच्छङ्कनीयो जनः मम हृदयं मा परिच्छिनत्तु एवं चपलमनोवृत्तिरियमिति। अनेनेति निकटवर्तिना। रक्ताशोक इति श्लाघ्यविशेषणयोगः। अपवारिते पश्याव इति। न खलु गच्छाव इत्युक्तम्। तेन तया प्रस्तुतस्य व्यसनोपशमोपायस्य दैवादापतितत्वं भवेद्वा इत्याशंसा व्यज्यते॥

एवं तयोरावरणे नायकस्य प्रवेशोपक्रमः। भो वयस्य! एतच्चन्दनलतागृहम्। तत् प्रविशावः॥

चन्दनलतागृहमिति। पूर्वं स्वाप्नस्य दर्शनस्य बुद्ध्यपारोहात् तत्साहित्येनैव कल्पनम्। दर्शनेऽन्यथाभूतत्वाज्झटिति विषादः। सचन्द्रमणिशिलमपीति। प्रियत्वस्य हेत्वन्तरे सत्यपीत्यर्थः। चन्द्राननया रहितमिति हेतुगर्भम्। चन्द्राननयेति। तद्विरहेऽप्रियत्वं युक्तमेवेति भावः। अत्र रम्यस्यापि विशिष्टवस्तुशून्यत्वेन शोच्यत्वं दृष्टान्तेन स्फुटयति— चन्द्रिकयेति। रहितमित्यनुषङ्गः। मुखं प्रारम्भः॥ ६॥

चन्द्राननया रहितं
चन्द्रिकया मुखमिव निशायाः ॥ ५ ॥

चेटी — (नायकं दृष्ट्वा) (क) भट्टिदारिए! दिट्ठिआ वड्ढसि। सो एव्व दे हिअअवळ्ळहो।

नायिका — (दृष्ट्वा सहर्षं ससाध्वसं च) (ख) हञ्जे! इमं पेक्खिअ ण सक्कुणोमि इह अच्चासण्णे ठादुं। कदाइ एसो मं पेक्खे। ता एहि। अण्णदो गच्छह्म। (सोरुकम्पं पदद्वयं ददाति[२]।)

(क) भर्तृदारिके! दिष्ट्या वर्धसे। स एव ते हृदयवल्लभः।

(ख) हञ्जे! इमं प्रेक्ष्य न शक्नोमीहात्यासन्ने स्थातुम्। कदाचिदेष मां पश्येत्। तदेहि। अन्यतो गच्छावः।

एवमेतद्दर्शनेन नायिकाया वैवश्यशमनार्थं श्लाघमाना चतुरिका कथयति — भर्तृदारिके! दिष्ट्या वर्धसे। स एव ते हृदयवल्लभः। आगत इति शेषः। दिष्ट्येति दैवादापतितम्। अत एव वर्धस इति। त्वन्मनोरथानामहमहमिकया प्रादुर्भावकालोऽयम्। स एवेति। पूर्वमस्मन्नयनसाफल्याय दैवेनानीतः, इदानीमपि तव चित्तव्याधिभेषजत्वेन मया कथितः। हृदयवल्लभः मनोरथदयितः। तदाश्वसिहीति शेषः॥

ततस्तं दृष्ट्वा रतिसागरतरङ्गायमाणेन हर्षेण रणरणकेन च विवशाह — हञ्जे! इमं प्रेक्ष्य न शक्नोमीहात्यासन्ने स्थातुम्। कदाचिदेष मां पश्येत्। तदेहि। अन्यतो गच्छावः॥

१. 'कतिचित् पदानि गत्वा)' ख. पाठः. २. 'ति।) वेवदी विअ मे ऊरू। चे' मूलपाठः.

**चेटी** — (विहस्य) (क) अदिकादरे ! इह ट्ठिदं पि को तुमं पेक्खदि । णं विसुमरिदो अन्तरे रत्तासोअपादवो । ता इह एव्व[1] चिट्ठह्म ।

(तथा कुरुतः ।)

**विदूषकः** — (निरूप्य) (ख) भो वअस्स ! एसा सा चन्दमणिसिळा ।

(नायकः सबाष्पं निश्वसिति ।)

**चेटी** — (ग) भट्टिदारिए ! एसा सेत्ति आळावो सुणी-

(क) अतिकातरे ! इह स्थितामपि कस्त्वां पश्यति । ननु विस्मृतोऽन्तरे रक्ताशोकपादपः । तदिहैव तिष्ठावः ।

(ख) भो वयस्य ! एषा सा चन्द्रमणिशिला ।

(ग) भर्तृदारिके ! एषा सेत्यालापः श्रूयते । तदवहिते शृणुवः ।

इति चापलेन वेपथुविवशेन गमनोपक्रमेण चास्या अतिपरिस्फुटमुचितविषयं वैवश्यमालक्ष्य सा आदरगर्भं परिहासमालम्ब्याह — अतिकातरे ! इह स्थितामपि कस्त्वां पश्यति । ननु विस्मृतोऽन्तरे रक्ताशोकपादपः । तदिहैव तिष्ठावः । अन्तरे मध्ये वर्तमानः रक्ताशोकपादपः अस्मत्तिरस्करणानुगुणः ननु विस्मृतः । एतस्य मध्यवर्तित्वमपि विस्मृतम् । अहो ते प्रियाद्वैतभावनानिर्बन्ध इति वक्रोक्तिः ॥

एवं प्रियतमसाक्षात्कारेण हर्षसम्भ्रमवेपथुप्रभृतिभिस्तस्या रतेरुच्छूनतामापाद्य विपरीतसम्भावनया तामेव परिपोषं नेतुं नायकवृत्तं प्रस्तौति— भो वयस्य ! एषा सा चन्द्रमणिशिला । सेति प्रस्तुतत्वं सामान्येन प्रतिपादयति ॥

१. 'व उवविसिअ चि' ख. घ. पाठः.

अदि । ता अवहिदा सुणह्म ।

(उभे आकर्णयतः ।)

**विदूषकः** — (हस्तेन चालयन्) (क) भो वअस्स! णं भणामि एसा सा चन्दमणिसिळ त्ति ।

**नायकः** — वयस्य! सम्यगुपलक्षितम् । (हस्तेन निर्दिशन्)

शशिमणिशिला सेयं यस्यां त्रिपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा ।

(क) भो वयस्य! ननु भणामि एषा सा चन्द्रमणिशिलेति ।

तदानीं स्वप्रवासनानुबद्धस्य प्रियादर्शनाभिलाषस्य तददर्शनेन पुनरपि परिपोषं गतस्य चिन्ताबाष्पादिसमेधितस्यावलम्बनात् तस्मिन्ननवहिते सा चन्द्रमणिशिलेति तद्वचने प्रस्तुतविषयमस्य प्रश्नमाशङ्क्य तदुत्तरकथने पूर्वं दृष्टभावस्यास्य एतद्विषया मनोवृत्तिरपि नाम स्फुटीभवेदिति शङ्कमाना चतुरिका तद्वचनश्रवणे तामवहितां करोति — भर्तृदारिके! एषा सा इत्यालापः श्रूयते । तदवहिते शृणुवः । पूर्वप्रस्तुतमेतद्देशसम्बन्धिनं कमपि वृत्तान्तमुद्दिश्यासौ पृच्छति । तदवहिते शृणुवः अस्मदनुकूलो न वायमिति ॥

पूर्वं प्रश्ने तस्याप्रतिपत्तिमालक्ष्य स्वहस्तेन तं चालयन्नाहेत्यनेन नायकस्य चिन्तानुभावरूपेण स्तम्भनिःश्वासादीनां प्रकाशनम् । भो वयस्य! ननु भणामि एषा सा चन्द्रमणिशिलेति । ननु भणामीति । पूर्वमपि मयोक्तम् । तन्न भवता श्रुतम् । अत एव पुनः कथ्यत इत्यर्थः । सेति प्रस्तुतस्य स्वप्नदर्शनस्य विषयतयास्य प्रश्नः । तत्र नायिकाया विपरीतसम्भावनानुगुण्येन सेति सामान्येन निर्देशः ॥

चिरयति मयि व्यक्ताकूता मनाक्स्फुरितैर्भ्रुवो-
र्नियमितमनोमन्युर्दृष्टा मया रुदती प्रिया ॥ ६ ॥

एवं स्वचित्तानुसारिणो नर्मसचिवस्य विवक्षितार्थसोपानायमानं प्रश्नवचनमनुमोदमानः पूर्वं सादरं स्वप्नप्रकारं संक्षेपेणाभिधाय स्वाप्नस्य दर्शनस्य जागरेऽपि सिद्धिर्भवेदिति कामिजनसुलभामाशां परिवहन् झटिति तं देशमाक्रम्य केवलस्य लतागृहस्य दर्शनेन विषाददैशवैराग्यसहितोऽपि स्वप्नवासनाविशेषसाक्षात्कृतां प्रियतमामनुसन्दधानः शशिमणिशिलासमीपे विवशस्तिष्ठन् किमेषा सेति प्रस्तुतस्वप्नदर्शनविषयतया तस्य प्रश्नमनुसृत्यानुवादरूपेण तं देशं दयितादर्शनविषयत्वेन प्रतिपादयति — **शशिमणिशिलेत्यादिना** । सेयं शशिमणिशिला । सेति पूर्वं प्रियतमोपवेशाधिकरणत्वेन सौभाग्यातिशयः, इदानीं तदभावेन शोच्यता च इयमित्यनेन द्योत्यते । अक्षीणनिरन्तरकान्तिसन्तानकलङ्कराहित्यपरमाह्लादकत्वादिना प्रियतमामुखमेव निर्दोषतया चन्द्रशब्दवाच्यम् । तत्सम्बन्धे त्वियं चन्द्रकान्तशिला । अत एव पूर्वं चन्द्रकान्तमणिशिलायामित्युक्तम् । तदनुवादेन एषा सा चन्द्रमणिशिलेति प्रश्नेऽपि इदानीं शशाङ्कसम्बन्धित्वेन स्वजातिसाधारणं शशिशिलात्वमेवास्य, मणिशब्दः केवलमपहासायेति मणिशिलेत्यनेन द्योत्यते । यस्यामित्यादिना पूर्वोक्तस्यानुवादः । शिलोपवेशनं प्रणयकोपोपालम्भो रोदनं च पूर्वं प्रबोधितम् । तदेषां क्रमेण व्याप्तिपूर्वमनुवादः क्रियते । विपाण्डुरमिति विश्लेषसुलभायाः शोच्यायाः पाण्डुतायाः सम्पादनेऽहमेव मन्दभाग्यो हेतुर्जात इति द्योत्यते । आननम् अस्मत्प्राणनपरमावलम्बनं वदनकमलम् अतिमृदुले ताम्रताकम्रे परभागसम्पादनसगन्धे सन्धारणासमर्थेऽपि करकिसलये कृत्वा सम्पाद्य विन्यस्येत्यर्थः । अनेन दैन्यमालस्यं कर्तव्यान्तरापरिज्ञानेन तूष्णीमास्थानाध्यवसायश्च द्योत्यते,

"अप्राप्ते च प्रियतमे कार्यो गण्डाश्रितः करः"

इति च मुनिवचनम् । वाम इति स्त्रीणां वामभागस्य प्रशस्ततया तदवलम्बनेन सङ्कटेऽप्यौचित्यापरित्यागो ध्वन्यते । अन्तस्तापसम्मेलनमसहमाने-

नेव निरन्तरं बहिः प्रसरता उष्णेन दीर्घनिःश्वसितेनातिम्लापिताधरकिसलया। अनेनेहितालाभेन चिन्तातिशयो व्यज्यते,

"ध्यानं चिन्तेहितानाप्तेः शून्यताश्वासतापकृद्"

इति वचनात्। यस्यामुपविष्टेति शेषः। चन्द्रकान्तमणिशिलायामुपविष्टेति पूर्वमुक्तत्वाद् इयता उपवेशप्रकारोऽनूदितः। चिरयति विलम्बमाने। अनेन अहमत्रागमिष्यामि त्वमप्यागच्छेति पूर्वं सङ्केतो ध्वन्यते। हेतौ शता। मयीति नीरसानामग्रगण्य इत्यवमानगर्भोक्तिः। प्रियतमां प्रति प्रतिपालनार्हस्यानन्यकार्यस्य विलम्बनं नीरसत्वमेवेति भावः। व्यक्ताकूता परिस्फुटप्रणयकोपहेतुकोपालम्भरूपाभिप्राया। प्रणयप्रकर्षेण स्खलितेषु कोपो भवति। तत्र विस्रम्भातिशयेनोपालम्भः। स्खलितमत्र विलम्बनम्। उपालम्भस्त्वादृशां धीराणां सर्वमुचितं, मादृशीनां तु चपलानामेव सम्भ्रम इत्याद्यन्तःस्फुरद्गम्भीरोक्तिरूपः। मनाक्स्फुरितैः ईषच्चलनैः मन्दानिलान्दोलितकलिन्दकन्यातनुतरङ्गस्फुरणतुल्यैः। भ्रुवोः न तु नेत्रयोरपि। अनेन कोपेऽपि मसृणविकारत्वमुत्तमास्वभाव इति व्यज्यते। मनागिति परिचितैरेवायमुपालम्भप्रकार इति ज्ञातुं शक्यते इति भावः। इयता उपालम्भप्रकारोऽनूदितः। नियमितमनोमन्युः उपशमितमनोगतप्रणयकोपा। मानिनीनामेव कोपो युक्तः, यासां कोपे प्रियजनस्य सम्भ्रमो भवेत्। मादृशीनां प्रियजनस्यानास्थया आत्मसन्तापहेतुकोऽरण्यरुदितायमानः। तत् किमनेनापहास्येन प्रकाशितेनेति नियमनम्। मनोमन्युरिति। मन्युरित्यनेनैव मनस्सम्बन्धे सिद्धेऽपि मनोग्रहणेन चक्षुरादिषु कोपकार्यस्यातिस्फुटत्वं ध्वन्यते। अत एव मनाक्स्फुरितैरित्युक्तम्। अन्यस्य नियमनप्रकारस्यापाटवेन रोदनमेवाङ्गीकृतम्। मयेत्यनेन परस्परावलोकनसुखाभावेऽपि मया दृष्टेति कृतार्थता प्रतीयते। प्रियेति येन केन प्रकारेण तत्सङ्गम एवास्माकं जीवनफलमिति ध्वन्यते। इयता कोपोपशमप्रकारोऽनूदितः। नायिकाया विप्रलब्धावस्थावैशिष्ट्यमत्र स्फुटमेव प्रतीयते। तदानीमशोकान्तरिताया नायिकायाः शङ्कादिव्यभिचारिभिरभिलाषं परिपोषं नेतुं स्वप्नजागरावस्थासाधारण्येन कविनायं श्लोक उपनिबद्धः॥

तदस्यामेव चन्द्रकान्तमणिशिलायामुपविशावः ।

**नायिका**—(विचिन्त्य) (क) का उण एसा भविस्सदि ।

**चेटी**—(ख) भट्टिदारिए ! जह अम्मे ओवारिदसरीराओ एदं पेक्खह्म, तह तुवं पि एदेण दिट्ठा भवे ।

**नायिका**—(ग) जुज्जइ एदं । किं पुण पणअकुविदं पिअजणं हिअए करिअ मन्तेदि ।

---

(क) का पुनरेषा भविष्यति ।

(ख) भर्तृदारिके ! यथावामपवारितशरीरे एतं पश्यावः, तथा त्वमप्येतेन दृष्टा भवेः ।

(ग) युज्यत एतत् । किं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयति ।

---

एवं प्रश्नस्योत्तरमुक्त्वा गमनाभिप्रायं प्रकाशयति—तदस्यामित्यादि । तदिति । यत एवमत्र दृष्टा । अस्यामेवेति । इदानीं शून्यत्वेऽपि पूर्वसम्बन्धमन्तर्निधाय प्रदेशान्तराच्छ्लाघ्यतामङ्गीकृत्योक्तिः । अत एव चन्द्रकान्तमणिशिलायामित्युक्तिः ॥

एतद्वचने नायिकान्तरविषयत्वमाशङ्क्य सा विमृशति—का पुनरेषा भविष्यति । का पुनरिति, न त्वहम् इति चिन्तानुपाती विषादः ॥

तत्सङ्कटं ज्ञात्वा चतुरिका एतद्विषयत्वेनोपपादयति—भर्तृदारिके ! यथा आवाम् अपवारितशरीरे एतं पश्यावः, तथा त्वमप्येतेन दृष्टा भवेः । अत एवमुक्तिर्घटत इत्यभिप्रायः ॥

एवं तद्वचनेन स्वानुपपत्तेरपरिहारं निरूप्यार्धाङ्गीकारेण निरस्यति—युज्यत एतत् । किं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयति । दर्शनमेवं घटताम् । एवं प्रणयकुपितप्रियजनवृत्तान्तकथनं कथमस्मद्विषये घटताम् । अतस्त्वदुक्त्या नानुपपत्तिः परिहृता ॥

**चेटी**—(क) मा ईदिसं आसङ्कं करेहि। पुणो वि दाव सुणह्म।

**विदूषकः**—(आत्मगतम्) (ख) अहिरमदि एसो एदाए कहाए। भोदु, एदं एव से वड्ढावइस्सं। (प्रकाशम्) भो वअस्स! तह परुण्णा तुए किं भणिदा।

(क) मा ईदृशीमाशङ्कां कुरु। पुनरपि तावच्छृणुवः।

(ख) अभिरमत एष एतया कथया। भवतु, एतदेवास्य वर्धयिष्यामि। भो वयस्य! तथा प्ररुदिता त्वया किं भणिता।

एवं तस्याः शङ्काविषादयोरशैथिल्यमालक्ष्य पुनरपि सा श्रवणे रुचिमुद्भावयति—मा ईदृशीमाशङ्कां कुरु। पुनरपि तावच्छृणुवः। प्रमेयोपक्रम एवाभिप्रायं निश्चेतुं न शक्यं, तन्मध्ये वैरस्यं मा कृथा इत्यर्थः॥

अथैवं स्वप्ननिवेदनेऽपि जाग्रदवस्थावदस्याभिरुचिमालक्ष्य सेवानिपुणो नर्मसचिवः स्वयं विचिन्तयति—अभिरमते एष एतया कथया। भवतु, एतदेवास्य वर्धयिष्यामि। एतया कथया प्रियतमावृत्तान्तसम्बद्धया सन्तापं विस्मृत्यात्रैव रमते। तद् एतदेव चरितं विशेषप्रश्नेन परिपोषं नयामीति विचिन्त्याह—तथा प्ररुदिता त्वया किं भणिता। अस्यामवस्थायां त्वया भणितेति न संशयः। त्वया रसिकजनसाम्राज्यमुद्वहता[1] परदुःखदुःखितेन चाटुभाषणचतुरेण उचितज्ञेन चेत्यर्थः। तथा प्ररुदितेति अनुनयवचनस्यावश्यकर्तव्यता प्रकाश्यते। यत उभयथा रोदनं घटते मन्युपरित्यागार्थं मन्युनियमनार्थं च। तत्र मन्युपरित्यागार्थं यदि रोदः, तर्हि न सम्भ्रमः। मन्युनियमनार्थं रोदने मन्युर्नापनीत इति तदपनयार्थं चाटुभाषणादिकमवश्यं कर्तव्यमिति प्रकारवृत्तिना तथाशब्देन द्योत्यते। अनुनये भवान् निपुणः, योग्यता चास्ति, वचनप्रकार एवास्माकं जिज्ञासा॥

१, 'द्वरता' ग. पाठः.

**नायकः — वयस्य! इदमुक्त्वा —**

**निष्यन्दत इवानेन मुखचन्द्रोदयेन ते ।**
**एतद् बाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम् ॥ ७ ॥**

इति जाग्रदवस्थावदस्मिन् पृच्छति सति परं प्रीयमाणो मन्दस्मितस्नेहदृष्टिपातकरतलस्पर्शादिभिरावर्जनपूर्वकं वयस्येत्यामन्त्रणं करोति । देहान्तरेण ममैव त्वद्रूपेण वर्तनम् । अतो मच्चित्तानुसरणं तव न चित्रम् । अतः श्रोत्रपात्रेण पीयतामस्मत्प्रियाविषयं वचनामृतम् । इदमुक्त्वा इदमित्यपरोक्षवद् बुद्धौ परिस्फुरितं वक्ष्यमाणप्रकारं परमसुहृदा त्वया सादरं श्रोतव्यम् । वचनमिति शेषः ॥

निष्यन्दत इति । अत्रापराधनिमित्तेन चाकित्येन प्रिये! इति वा कान्ते! इति वा वचनारम्भे सम्बोधनाभावः । गुणकथाद्वारेणाभिमुख्यमापाद्य क्रमेण सम्बोधनं कर्तव्यमिति तदारम्भः । निष्यन्दत इव द्रवीभावमवलम्ब्य प्रवहतीव । अनेन सन्निधिलब्धेन । अन्येषां दूरस्थशशाङ्कदर्शने गुणानुरागं विना प्रसिद्ध्यनुरोधेनैव स्यन्दनम्, एतत् पुनः सहृदयश्लाघनीयचातुर्यं निरतिशयभाग्यभाजनं निकटलब्धेन गुणगौरवपरीक्षाविधेयेन ते मुखचन्द्रोदयेन । अन्यासां वदनसन्निधौ नेदृशी सम्भावना घटत इति द्योत्यते । ईदृशे गुणवर्णनोपक्रमे आभिमुख्यमेव तव शोभततराम् इति च ते इत्यनेन द्योत्यते । अनेन मुखचन्द्रोदयेनेतीदमा उदयस्य परामर्शेनैतत् प्रकाश्यते — करकिसलयन्यस्ततया उदयगिरिशिखरसुरतरुपल्लवतल्लजदरतिरोहितपुराणहिमकरोदयप्रकारमनुसरता स्फुटास्फुटेन मुखचन्द्रोदयेनास्येयमवस्था, करतलावरणविश्लेपप्रसादस्मितचन्द्रिकाप्रसरणाद्यवस्थान्तरे सत्यस्मन्नयनचकोरपारणहृदयकुमुदविकासादिकार्यान्तराण्यहमहमिकया प्रादुर्भवेयुरिति । एतदिति । अश्मनो हृदयं नास्तीति यदुच्यते, तदन्यशिलाविषयमेव घटते । इदं पुनः सहृदयबहुमानास्पदम् अतिविशेषज्ञतयानुमितप्राचीनपुण्यसञ्चयमन्यदेव शिलासृष्टेरिति द्योत्यते । बाष्पाम्बुना अन्तस्सन्तापनिष्टप्तास्विद्यन्मुखचन्द्र-

---

१. 'वोचितम् । अतः' ग. पाठः.

**नायिका** — (सरोषम्) (क) **सुदं एदं चउरिए! । अत्थि किंपि अदो वरं सोदव्वं । (सास्रम्) एहि गच्छह्म ।**

**चेटी** — (हस्तेन गृहीत्वा) (ख) **भट्टिदारिए! मा एवं । जेण तुवं दिट्ठा, सो अण्णं उद्दिसिअ एवं भणिस्सदि त्ति**

---

(क) श्रुतमेतच्चतुरिके!। अस्ति किमप्यतः परं श्रोतव्यम्। एहि गच्छावः।

(ख) भर्तृदारिके! मैवम् । येन त्वं दृष्टा, सोऽन्यामुद्दिश्यैवं भणिष्यतीति न मे हृदयं प्रत्येति । तत् कथावसानं तावत् प्रतिपालयावः ।

---

पीयूषधारायमाणेन। 'क्रोधोऽपि देवस्य वरेण तुल्य' इत्युक्तवद् दुःखाश्रुपातेऽपीदृशसम्भावनाधायकत्वमस्य मुखचन्द्रस्य, प्रीतिप्रसरे किं पुनरिति द्योत्यते । सिक्तमिति । न तु सिच्यमानम् । अनेनेयताश्रुजलेनानिष्टेनापि विशिष्टसम्भावनाहेतुतया नातीव प्रातिकूल्यमाचरितम् । इदानीमपि प्रवाहरूपेण पतता नयनोत्पलम्लानिः शिलातलासिकावैषम्यम् अस्मन्नयनविषादः अन्तःकरणविक्लेदनम् इत्यनेकदोषोदयः। तद् विरम, अश्रूणि सन्त्यज, परिगृहाण प्रसादम् इति प्रार्थना व्यज्यते । यदि त्वद्गुणानामनादरेणाज्ञानेन वा मया विलम्बनं कृतं, तर्हि युक्तस्ते कोपः । एवं गुणग्राहिणा त्वत्प्रसादैकशरणेन त्वदनुसन्धानधनेन प्रमादात् किञ्चित्कालविलम्बनं कृतं, तत् क्षन्तव्यमेव । अतः कोपं मा कार्षीः । त्यक्तकोपा प्रसादं गृहाण । त्वयि प्रसन्नायामेवास्मद्वाञ्छितप्रकाशनं शोभत इत्यादयश्चात्र वक्त्रभिप्राया अनेन व्यज्यन्ते ॥ ७ ॥

एवं तस्य स्वप्ननिवेदने जाग्रदवस्थाबुद्ध्या अन्यां प्रतीयमुक्तिरिति मत्वा प्रणयकोपेन नायिका चतुरिकामाह — श्रुतमेतच्चतुरिके!। अस्ति किमप्यतः परं श्रोतव्यम् । पूर्वमेव नासौ मां प्रति वदतीति मया निश्चितम्। पुनस्त्वन्निर्बन्धेन स्थितं, तदप्येवं जातम् इति सगद्गदकाकुगर्भं तां प्रति निराशतामवलम्ब्योक्तिः । अत एव सास्रमाह — एहि गच्छाव इति ॥

एवं तस्या नैराश्येन गमनोद्यममालक्ष्य दृष्टभावा चतुरा चतुरिका हस्तेन गृहीत्वा तां निवारयति — भर्तृदारिके! मैवम् । वादीरिति

ण मे हिअअं पत्तिआअदि । ता कहावसाणं दाव पडिवा-ळह्म ।

**नायकः**—वयस्यै! तामेवास्यां शिलायामालिख्य तया चित्रगतयात्मानं विनोदयेयम् । तदित एव गिरितटान्मनःशिलाशकलान्यानय ।

**विदूषकः**—(क) जं भवं आणवेदि । (निष्क्रम्य प्रविश्य) भो वअस्स! तुए एक्को वण्णो आणत्तो, मए उण इह पव्वदादो पञ्च वण्णा आणीदा । ता आळिहदु भवं ।

(क) यद् भवानाज्ञापयति । भो वयस्य! त्वयैको वर्ण आज्ञप्तः, मया पुनरिह पर्वतात् पञ्च वर्णा आनीताः । तदालिखतु भवान् ।

शेषः । तत्र हेतुमाह—येन त्वं दृष्टा, सोऽन्यामुद्दिश्यैवं भणिष्यतीति न मे हृदयं प्रत्येति । तत् कथावसानं तावत् प्रतिपालयावः । हृदयं प्रत्येतीति वचनमात्रेण हृदयस्य न निश्चयः, त्वां दृष्टवतोऽन्यां प्रत्येवमुक्तेरसम्भावनीयत्वात् । तत् कथावसानं तावत् प्रतिपालयावः । यावत्कथावसानं शृणुव इत्यर्थः ॥

एवं स्वाप्नसङ्गमं निवेद्य चित्रालोके निविष्टबुद्धिराह—**वयस्य!** तामेवास्यामित्यादि । एवकारेण न वस्त्वन्तरमस्मद्विनोदसाधनमिति प्रकाशयति । अत[2] एवाह—आत्मानं विनोदयेयमिति । तदित एवेति निकटे सुलभत्वं द्योतयति ॥

**यद् भवानाज्ञापयति** । त्वयैको वर्ण आज्ञप्तः, मनःशिलाशकलानीत्युक्तत्वात् । मया पुनरिह पर्वतात् पञ्च वर्णा आनीताः । तदालिखतु भवान् । सितनीलपीतरक्ताः शुद्धाः सङ्कीर्णश्चेति पञ्च वर्णाः । तेनात्मनो विशेषज्ञतां प्रकटयति ॥'

१. 'स्य! जाने ता' मूलपाठः. २. 'नेनैवात्मा' ग. पाठः.

**नायकः**— वयस्य! साधु कृतम् । (गृहीत्वा शिलायामालिखन् सरोमाञ्चम्) सखे! पश्य पश्य,

अक्लिष्टबिम्बशोभा-
धरस्य नयनोत्सवस्य शशिन इव ।
दयितामुखस्य सुखयति
रेखापि प्रथमदृष्टेयम् ॥ ८ ॥

(आलिखति ।)

**विदूषकः**— (सकौतुकं निर्वर्ण्य) (क) भो वअस्स! अप्पच्चक्खं वि[1] एव्वं आळिहीअदित्ति अच्छरिअं ।

(क) भो वयस्य! अप्रत्यक्षमप्येवमालिख्यत इत्याश्चर्यम् ।

तदनुवदति— साधु कृतमिति । लेखनोपक्रम एव हृदयबिम्बितनितम्बिनीरूपलेखावलोकनगलितधृतिस्तं प्रत्यात्मप्रीतिं प्रकाशयति— सखे! पश्य पश्येति । सुखिनं माम् इमां रेखां च दयितामुखस्य ।

प्रथमदृष्टा लेखनोपक्रमे हस्तानुसारिभ्यां नयनाभ्याम् । अत्र निलीनायाः स्वयंप्रकाशोंऽश इव दयितामुखस्य रेखापि सुखयति, किं पुनः परिपूर्णतायामित्यपिशब्देन प्रकाशितम् । शशिन इवेति । यथा शशिनः प्रथमदृष्टा प्रतिपदि प्रादुर्भूता कलापि नयनोत्सवं सम्पादयति, तथेति हृदयसंवादी दृष्टान्तः । अक्लिष्टं कालपक्कं यद् बिम्बफलं तच्छोभोऽधरो यस्य, अन्यूनमण्डलशोभां धारयत इति च । नयनोत्सवस्य उत्सवशब्देन तत्कार्यमानन्दो लक्ष्यते । उभयत्र समानम् । इयमिति । न मदुक्तिमात्रेण, त्वयापि द्रष्टुं शक्यम् । अत एव पूर्वं पश्य पश्येत्युक्तम् ॥ ८ ॥

**भो वयस्य! अप्रत्यक्षमप्येवमालिख्यत इत्याश्चर्यम्** इति तदौत्सुक्यं प्रति हस्तदानं कृतम् ॥

१. 'वि णाम ए' मूलपाठ..

**नायकः — वयस्य !**

**प्रिया सन्निहितैवेयं सङ्कल्पैः स्थापिता पुरः ।**

**दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत् कोऽत्र विस्मयः ॥ ९ ॥**

**नायिका —**(निःश्वस्य सास्रम्) (क) **चउरिए! जादं खु कहा-वसाणं । ता एहि । अय्यमित्तावसुं दाव पेक्खह्म ।**

**चेटी —** (सविषादमात्मगतम्) (ख) **हं[1] जीविअणिरपेक्खो विअ से आळावो ।** (प्रकाशम्) **भट्टिदारिए[2]! गदा एव्व तहिं**

(क) चतुरिके जातं खलु कथावसानम् । तदेहि । आर्यमित्रावसुं तावत् पश्यावः ।

(ख) हं जीवितनिरपेक्ष इवास्या आलापः । भर्तृदारिके! गतैव तस्मिन् मनोहरिका । अतः कदाचिद् भर्तृदारको मित्रावसुरिहैवागच्छेत् ।

तत्रोपपत्तिमाह — प्रिया सन्निहितैवेयमिति । कथं सन्निहितेत्यत्र प्रकारमाह — सङ्कल्पैरिति । पुरः स्थापितेति बहिर्दर्शनवत् सङ्कल्पस्य परिस्फुटता प्रकाश्यते । एनां दृष्ट्वा दृष्ट्वेति । तत्तदवयवप्रमाणादिकं दर्शनकर्म । यदीति सिद्धपक्षाङ्गीकारे । एवं स्थिते कोऽत्र विस्मय इत्यर्थः । यदीति यदर्थे वा ॥ ९ ॥

अस्मिन् प्रस्तावेऽन्यविषयत्वं निश्चित्य चिन्ताविषादादिविक्लबा नैराश्येनाह — चतुरिके! जातं खलु कथावसानम् । तदेहि । आर्यमित्रावसुं तावत् पश्यावः । कथावसानमिति त्वदुक्त्यनुसार एव फलितः । इदानीं तवापि हृदयप्रत्ययो जातः । तदलमनेन वृत्तान्तेन । अस्मद्भ्रातरं पश्याव इत्यात्मवैराग्यगर्भोक्तिः ॥

तदभिप्रायं विदित्वा सा सविषादं निरूपयति — हम् इति, विषादद्योतकमव्ययं प्राकृते । जीवितनिरपेक्ष इवास्या आलापः । अस्याः स्वजीवित एव विरागः, नास्मिन् । आशाखण्डने पतिष्यत्येव । तदेतत्सन्नि-

१. 'हद्धि । जी' मूलपाठः. २. 'ए णं ग' क. ख. ग. पाठः.

मणोहरिआ। अदो कदाइ भट्टिदारओ[2] मित्तावसू इह एव आअच्छे।

(ततः प्रविशति मित्रावसुः।)

**मित्रावसुः**—आज्ञापितोऽस्मि तातेन। यथा—वत्स! मित्रावसो! कुमारो जीमूतवाहनोऽस्माभिरिहासन्नवासात् सुपरीक्षितः, तद् योग्योऽयं वरः। तस्मै वत्सा मलयवती प्रतिपाद्यतामिति। अहं तु स्नेहपराधीनतयान्यदेव किमप्यवस्थान्तरमनुभवामि। कुतः,

---

धिर्न मोक्तव्य इति बुद्ध्याह—भर्तृदारिके! गतैव तस्मिन् मनोहरिका। मित्रावसुदर्शने मनोहरिकां नियुज्य आवामिहागते। अतः कदाचिद् भर्तृदारको मित्रावसुरिहैवागच्छेद् इति त(स्य?स्या) गमनवृत्तान्तनिरूपणे प्रतीयते। अत एव सम्भावनायां लिङ्। तदत्रैव तत्प्रतिपालनं युक्तमिति तद्गमनं निवारयितुमुक्तिः॥

एवं सूचितस्य मित्रावसोः प्रवेशः। आज्ञापितोऽस्मि तातेनेति। तस्य स्ववृत्तान्तकथनभङ्ग्या प्रवेशप्रयोजनं प्रकटयति—यथेति। येन प्रकारेणाज्ञा, स प्रकारोऽनूद्यत इत्यर्थः। वत्सेत्यारभ्य प्रतिपाद्यतामित्यन्तं तदाज्ञानुवादः। वत्स! मित्रावसो! इति। वत्सेति वात्सल्येन। मित्रावसो! इति युवराजतया कार्यभरक्षमत्वेन तन्नियोगोपक्रमः। आसन्नवासादिति परीक्षासौकर्यम्। सुपरीक्षित इति 'वरं परीक्ष्य दातव्या कन्या' इत्युक्तिमनुसरति। तदिति परीक्षितत्वात्। वत्सा मलयवतीति योग्यप्रतिपादने प्रीतिः। इतीति प्रकारोपसंहारः। अहं त्विति। पितृनियोगे परिपूर्णा प्रीतिर्निश्चीयते। मम मनोवृत्तेः पितृमतानुसारेऽप्यवस्थान्तरमाविर्भवति। तदेव प्रकाशयति—अन्यदेव किमप्यवस्थान्तरमनुभवामीति। तत्र हेतुः स्नेहपराधीनतयेति। स्नेहस्यापायकोटिनिरीक्षणस्वभावत्वादित्यर्थः। कुत इति। कस्मादेवमवस्थान्तरानुभवः, कीदृशमन्यदित्युक्तं, तद् विवृणोमीत्यर्थः।

---

१. 'ता क', २. 'ट्टा मि' मूलपाठः.

यद् विद्याधरराजवंशतिलकः प्राज्ञः सतां सम्मतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान् विनीतो युवा।
यच्चासूनपि सन्त्यजेत् करुणया सत्वार्थमभ्युद्यत-
स्तेनास्मै ददतः स्वसारमतुला तुष्टिर्विषादश्च मे॥ १०॥

यदित्यादि। प्रथमं वंशोन्नतिः कथ्यते — विद्याधरराजवंशतिलकः चक्रवर्तिकुलालङ्कारभूतः, न तु वंश्यः यः कश्चन। तदनुगुणा बुद्धिर्न चेत्, किमन्वयगौरवेणात आह—प्राज्ञः प्रज्ञावान् त्रिकालवृत्तान्तविज्ञानविशदशेमुषीकः। न केवलं प्रज्ञया प्रयोजनं वृद्धसेवां विना, तत्राह — सतां सम्मतः सद्भिरिष्यमाणः। प्राज्ञोऽपि विरूपश्चेद् वरत्वे न श्लाघ्य इत्यत्राह — रूपेणाप्रतिम इति। अप्रतिमः उपमितौ द्वितीयसब्रह्मचारी न विद्यते। चक्रवर्तिकुलजस्य पराक्रमाभावे रूपमपि हास्यं भवेद्, अत आह — पराक्रमधनः। धनशब्देन पराक्रमस्य समग्रसाधनधुरीणत्वं प्रकाशितम्। पराक्रमोऽपि विद्वत्ता न चेद् अपथे प्रवर्तयति, अत आह — विद्वान् अखिलविद्यापारावारपारीणः। विद्यामपि केचिद् दुर्विनयेन दूषयन्ति, तथा न, विनीतः स्वाभाविकसांस्कारिकविनयसफलीकृतविद्यापरिश्रमः। गुणान्तरसामग्र्येऽपि गतवयाश्चेन्न मुग्धकन्यकासम्बन्धयोग्यः। तथा च न, युवा वर्धमानयौवनः। यदिति वाक्यादौ निर्दिष्टेन यच्छब्देन समुच्चितस्योक्तस्योपलक्षितस्य च गुणसामग्र्यस्य परामर्शः। यच्चेति स्वसाध्यं प्रति विरुद्धस्यैकस्य दोषस्य सम्भावनाविषयत्वेन परामर्शः। द्वयोर्यदर्थयोः समुच्चये चशब्दः। असूनपीति। अन्यत्यागः सह्यते, न त्वसूनाम् इत्यनिष्टं प्रकाश्यते। सन्त्यजेत् तत्प्रवृत्त्यैवं सम्भावयितुं शक्यम्। सम्भावनायां लिङ्। तत्र हेतुमाह — करुणयेति। न त्वागन्तुकेन हेत्वन्तरेण। करुणायाः सर्वत्र योग्यता चास्तीति हेतोः प्राबल्यम्। सत्वार्थं जन्तुमात्रप्रयोजनाय अभ्युद्यतः न किञ्चिदपि स्वार्थं प्रति। अतः सुरनरतिर्यक्षु कदाचित् कस्यचिज्जन्तोः प्राणरक्षादिकमपेक्ष्य स्वयमेव प्राणानपि परित्यजेत्। एतदपि तस्य श्रेयस्करमपि बालाया मम स्वसुर्वैधव्यशङ्कया मह्यं न रोचते। तेन समुच्चितेन हेतुद्वयेन अस्मै स्वसारं ददतः

श्रुतं च मया । यथा — असौ जीमूतवाहनोऽत्रैव गौर्याश्रमसम्बद्धे चन्दनलतागृहे वर्तत इति । तदेतच्चन्दनलतागृहम् । यावत् प्रविशामि (प्रविशति ।)

**विदूषकः** — (ससम्भ्रममवलोक्य) (क) भो वअस्स ! इमिणा पच्छादेहि कदळीपत्तेण इमं चित्तगदं कम्म । एसो खु सिद्धजुअराओ मित्तावसू इह एव आअदो । कदाइ एसो पेक्खे ।

(नायकः कदलीपत्रेण प्रच्छादयति ।)

---

(क) भो वयस्य ! अनेन प्रच्छादय कदलीपत्रेणेदं चित्रगतं कर्म । एष खलु सिद्धयुवराजो मित्रावसुरिहैवागतः । कदाचिदेष पश्येत् ।

---

दातुमुपक्रान्तस्य । वर्तमानसामीप्ये लट् । ददत इति निश्चितेषु गुणेषु पाक्षिके च दोषे शङ्क्यमाने गुणानेवाङ्गीकुर्मः । अतो दानस्य न विरोध इति प्रकाशितम् । अतुला तुष्टिरिति । तोषस्य गुणबाहुल्येन निरतिशयत्वं दोषस्य प्रबलस्यापि केवलस्य विषादजनकत्वम् इत्यन्वाचयार्थश्चकारः । मे इति । अहं तु इत्युक्तमनुसन्धत्ते । मम स्नेहपारतन्त्र्यस्य दौश्शील्यादिदमवस्थान्तरम् । तद् दैवं प्रमाणीकृत्य श्रेयसे प्रवर्तिष्ये इति चित्तविश्रान्तिः श्रुतं च मयेत्युत्तरवाक्येन कल्प्यते ॥ १० ॥

एवमस्य नायकस्य परमसाध्यं तत्र तत्र स्वोक्तावन्योक्तौ चानुसन्धानाय स्फुटीक्रियते । श्रुतं च मयेति । कल्पितस्योपक्रमप्रकारः । यथेत्यादि श्रवणकर्मप्रतिपादनप्रकारः । अत्रैवेति प्रवृत्तिलाघवं द्योतयति । गौर्याश्रमसम्बद्धे सन्निहित इत्यर्थः । तदिति चन्दनलताग्रहं, तदाश्रयतया श्रुतम् । एतदिति । पुरोवर्ति । यावदित्यप्यध्यवसाये ॥

चित्रगतं कर्मेति । क्रियत इति कर्म लिखितं वनितारूपमित्यर्थः । सिद्धयुवराजशब्देन गौरवं प्रकाशितम् ॥

**मित्रावसुः** — (उपसृत्य) कुमार! मित्रावसुः प्रणमति।

**नायकः**—(दृष्ट्वा) मित्रावसो! स्वागतम्। इह स्थीयताम्।

**चेटी** — (क) भट्टिदारिए! आअदो खु ऐसो मित्तावसू।

**नायिका** — (ख) हञ्जे! पिअं मे।

**नायकः**—मित्रावसो! अपि कुशली सिद्धराजो विश्वावसुः।

**मित्रावसुः** — कुशली तातः। तातसन्देशेनैवास्मि त्वत्सकाशमिहागतः।

**नायकः**— किमाह तत्रभवान्।

**नायिका** — (ग) सुणिस्सं दाव किं तादेण सन्दिट्ठं त्ति।

---

(क) भर्तृदारिके! आगतः खल्वेष मित्रावसुः।

(ख) हञ्जे! प्रियं मे।

(ग) श्रोष्यामि तावत् किं तातेन सन्दिष्टमिति।

---

मित्रावसुः प्रणमतीति विनयेनात्मानं परीकृत्याचारकथनम्॥

स्वागतमिति। तुभ्यमिति शेषः॥

भर्तृदारिके! एष मित्रावसुरिति इहैवागच्छेदिति स्वोक्तिं स्मारयति॥

प्रियं मे इति। भ्रातृदर्शनेन सौहार्दाद् आगमनहेतुनिरूपणाच्चोक्तिः प्रहर्षगर्भा॥

अपि कुशलीति विस्रम्भबहुमानाभ्यां प्रश्नः॥

कुशली तात इति काकुगर्भमनूद्य तातसन्देशेनैवेत्यागमनस्य गौरवं प्रकाशयति॥

तच्छेषतया किमाह तत्रभवान् इति बहुमानप्रकाशनम्॥

सुणिस्सं दावेति तातसन्देशशुश्रूषया तदागमनसिद्धायाः प्रीतेः परिपोषः प्रकाशितः॥

---

१. 'भट्टा मि' मूलपाठः.

**मित्रावसुः**[1] — इदमाह तातः — अस्ति मे दुहिता मलयवती नाम जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य । सा मया तुभ्यं प्रतिपादिता, प्रतिगृह्यतामिति ।

**चेटी** — (विहस्य) (क) भट्टिदारिए! किं ण कुप्पसि दाणिं ।

**नायिका** — (सस्पृहं सलज्जं चाधोमुखी स्थित्वा) (ख) हञ्जे! मा तुस्स । किं विसुमरिदं दे एदस्स अण्णहिअअत्तणं ।

(क) भर्तृदारिके! किं न कुप्यसीदानीम् ।

(ख) हञ्जे! मा तुष्य । किं विस्मृतं त एतस्यान्यहृदयत्वम् ।

इदमाह तात इति प्रतिपाद्ये वस्तुन्यादरेण सङ्ग्रहोपक्रमः । अस्ति मे दुहितेति तातोक्तिप्रकारः । मे दुहितेति तज्जनकत्वेनात्मनि कृतार्थता सम्बन्धेन प्रकाशिता । मलयवतीति वात्सल्येन नामकथनम् । जीवितमिति स्ववंशस्यैव जीवितत्वसम्भावनया तस्याः सर्वप्रियतां प्रकाशयति । अत एव वाक्यभेदेन सा तुभ्यं मया प्रतिपादितेत्युचितभर्तृप्रदानेन स्नेहफलप्रकाशनम् । प्रतिपादितेति । न किञ्चिदत्रेतिकर्तव्यताविमर्शनमपेक्षितं, क्रियैव कर्तव्येति त्वरा सूचिता । अत एव प्रतिगृह्यतामित्युक्तिः । स्वीक्रियतां, किं प्रतिवचनप्रयासेनेति निश्चयगर्भोक्तिः ॥

भर्तृदारिके! किं न कुप्यसीदानीमिति । पूर्वं मद्वचसि दोषोद्भावनेन कुपिता गन्तुमुपक्रान्ता मया कथञ्चिन्निवर्तिता मदपेक्षया स्थितवती । इदानीं कथं भावान्तरं प्रकाशयसि । एवं तातनियोगेऽपि कोपं कुरु इति सोलुण्ठनं वचनम् ॥

तदानीं मनोरथसिद्धिनिरूपणेन तस्या आक्षेपवचनेन चोन्मिषद्रतिविशेषलज्जावैवश्याभ्यामधोमुखी सती तस्याः सन्तोषातिशयं पूर्वसिद्ध-

१. 'सुः—(सास्रम्) इ' घ. पाठः.

**नायकः**— (अपवार्य) वयस्य! सङ्कटे पतिताः स्मः ।

**विदूषकः**— (अपवार्य) (क) भो! जाणामि [1]भवदो ण तं[2] वज्जिअ अण्णहिं चित्तं अहिरमदि[3] त्ति । तह वि जं किञ्चि भणिअ विसज्जीअदु एसो ।

**नायिका**— (सरोषमात्मगतम्) (ख) हदास! को वा एदं ण जाणादि ।

(क) भो! जानामि भवतो न तां वर्जयित्वान्यत्र चित्तमभिरमत इति । तथापि यत्किञ्चिद् भणित्वा विसृज्यतामेषः ।

(ख) हताश! को वैतन्न जानाति ।

संशयोद्बोधनेन निवारयति । एतस्यान्यहृदयत्वे सिद्धे तातसन्देशमात्रेण नास्माकं कृतार्थतेति शङ्कागर्भोक्तिः ॥

**वयस्य!** सङ्कटे पतिताः स्म इति नाट्यधर्मिन्यायेन तमपवार्योक्तिः । मलयवतीत्यन्या, अस्मन्मनोरथदयितान्येति भेदबुध्या तदभिप्रायनिरसनेन नायिकाया अभिलाषशृङ्गारं व्यभिचारिपरम्परापदन्यासेन मरणाध्यवसायान्तं परिपोषं नेतुमन्यथाप्रतीतिमनुसृत्य वचनम् । तत्र तयो रहस्यकथनं तेन न श्रूयत । वृक्षान्तरितया तया श्रूयत इति नाट्यधर्मिपरिकल्पनम् ॥

**यत्किञ्चिद् भणित्वेति** । स्वसाध्यस्य तत्प्रार्थनायाश्चासाधकं सौजन्यलेशानुगतमपरुषमुक्त्वेत्यर्थः ॥

तच्छ्रुत्वा निरसनेन कोपमवलम्ब्य तं प्रत्यात्मगतं वचनं **हताशेति** । हता कुत्सिता आशा यस्येति । कपटेन परवञ्चनोपदेशात् । **को वैतन्न जानाति** । व्यर्थमेव युष्माकं वञ्चनम् । इदं प्रत्याख्यानं सर्वस्फुटमेवेति वैराग्यगर्भोक्तिः ॥

१. 'भोदो' घ. पाठः. २. 'तादं व', ३. 'मि स्सदि' ग. पाठः.

**नायकः**—मित्रावसो! क इव नेच्छेद् भवद्भिः सह श्लाघ्यमिमं सम्बन्धम् । किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतो निवर्तयितुम् । अतो नाहमेनां प्रतिग्रहीतुमुत्सहे ।

(नायिका मूर्छां नाटयति ।)

**चेटी**—(क) समस्ससदु समस्ससदु भट्टिदारिआ ।

**विदूषकः**—(ख) भो! पराहीणो खु एसो। ता किं एदेण भणन्तेण । गुरुजणं से गदुअ अब्भत्थेहि ।

---

(क) समाश्वसितु समाश्वसितु भर्तृदारिका ।

(ख) भोः! पराधीनः खल्वेषः । तत् किमेतेन भणता । गुरुजनमस्य गत्वाभ्यर्थय ।

---

भवद्भिः सह श्लाघ्यमिति । अभिजनादिविशिष्टैर्युष्माभिः सह सम्बन्धं सौहार्दं, तत्रापि इममिति कन्यापरिग्रहरूपम् अतिविशिष्टम्, अत एव श्लाघ्यं क इव नेच्छेद् अस्मिन् जगति कः पुमान् स्वयं नापेक्षेत, विशेषतश्च मया अपेक्षितव्यम् इति विशेषे सङ्क्रमय्य किन्त्विति विरोधिवचनोपक्रमः । योग्यत्वे सत्यकरणे बलवन्निमित्तान्तरम् । तद्बलेन मयानुचितो निषेधः क्रियत इति किन्त्वित्यनेन प्रकाशितम् । अन्यतः प्रवृत्तमन्यतो निवर्तयितुमिति । अर्थकामौ विहाय गुरुशुश्रूषणतपःप्रभृतिधर्ममार्गे दृढनिश्चयं पुनरप्यर्थकामाभिमुखं कर्तुं न शक्यते । अतो मनस्यन्यत्र प्रवृत्तेऽन्यकरणं कथं घटत इति निषेधहेतोः प्राबल्यम् । एवं तद्बोधनानुसारेणान्यस्यां सक्तमन्यस्यां निवर्तयितुं न शक्यत इति नायिकावितर्कसाधारण्येन चोक्तिः । अत एव प्रतिग्रहीतुं नोत्सह इति निषेधनिश्चयश्रवणेन नायिकामोहः ॥

भो पराहीणो खु इति । असौ गुरुपरतन्त्रः । तत् किमेतेन भणता । एतद्वचनेन किमपि निश्चेतुं न शक्यम् । अनुष्ठातृत्वमेवास्य,

**मित्रावसुः**—(आत्मगतम्) साधूक्तम् । नायं गुरुवचनमतिक्रामति । एष गुरुजनोऽप्यस्मिन्नेव गौर्याश्रमे प्रतिवसति । तद् यावद् गत्वास्य पित्रोर्मलयवतीं प्रतिग्राहयामि ।

(नायिका समाश्वसिति ।)

**मित्रावसुः**—(प्रकाशम्) एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाणः कुमार एव बहुतरं जानाति ।

**नायिका**—(सरोषम्) (क) कहं पच्चक्खाणळहुओ मित्ता-

---

(क) कथं प्रत्याख्यानलघुर्मित्रावसुः पुनरपि मन्त्रयते ।

---

नियोक्तृत्वं गुरुजनस्य । अत एवानेन नोत्सह इति आत्मोत्साहनिषेध उक्तः । तद् गत्वास्य गुरुजनं साध्यं प्रार्थयेति तद्विसर्जनकार्यशेषसाधारण्येनोक्तिः ॥

तत्रास्य गुरुपारतन्त्र्यविश्वासेन पुनःप्रवृत्तये तदुक्तिं संवदति—साधूक्तम् । नायं गुरुवचनमतिक्रामतीति । एष गुरुजनोऽप्यस्मिन्निति तत्प्रार्थनायामपि प्रयत्नाभावं दर्शयति, गौर्याश्रमचन्दनलतागृहयोरतिनैकट्यात् । तद् यावदिति । अस्य पित्रोः, सन्निधिमिति शेषः । प्रतिग्राहयामीति । तदङ्गीकार एवैतस्य प्रमाणमिति भावः ॥

एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाण इति । निवेदितात्माभिप्रायान् अस्मान् स्वसम्बन्धापेक्षिणः प्रत्याचक्षाणः नाहं प्रतिग्रहीतुमुत्सहे इति साक्षान्निषेधभङ्ग्या निराकुर्वन् । कुमार एवेति । त्वमेवेति वक्तव्ये बहुमानेन ताटस्थ्येनोक्तिः । नान्यः परीक्षकोऽत्र युक्तायुक्तविचारणायामपेक्ष्य इत्येवकाराभिप्रायः । बहुतरं जानातीत्यन्ययोगव्यवच्छेदयोग्यता । धर्मादितत्त्वज्ञस्य तवेदं प्रत्याख्यानं न शोभनमिति तन्निषेधेऽनिष्टगर्भोक्तिः पुनरपि तन्मनोव्यावर्तनाय ॥

अत एव सरोषं निराशायास्तस्या उक्तिः । प्रत्याख्यानेन लघुः न्यूनी-

वसू पुणो वि मन्तेदि ।

(निष्क्रान्तो मित्रावसुः ।)

**नायिका**— (सास्रमात्मानं पश्यन्ती) (क) किं मम एदिणा दोब्भग्गकळङ्कमळिणेणं अच्चन्तदुक्खभाइणा अज्ज वि सरीरहदएण । जाव इह एव रत्तासोअपादवे इमाए अदिमुत्तळदाए उब्बन्धिअ अत्ताणं वावादइस्सं । ता एवं दाव । (प्रकाशं सविलक्षस्मितम्) हञ्जे ! पेक्ख दाव मित्तावसू दूरं गदो ण वेत्ति । जेण अहं[२] इदो गमिस्सं ।

(क) किं ममैतेन दौर्भाग्यकलङ्कमलिनेनात्यन्तदुःखभागिनाद्यापि शरीरहतकेन । यावदिहैव रक्ताशोकपादपेऽनयातिमुक्तलतयोद्बध्यात्मानं व्यापादयिष्यामि । तदेवं तावत् । हञ्जे ! पश्य तावन्मित्रावसुर्दूरं गतो न वेति । येनाहमपीतो गमिष्यामि ।

भूतः पुनरपि प्रार्थनाव्यञ्जकं वचनं कथयतीति मानिनीत्वसमुचितोक्तिः ॥

एवं प्रत्याख्यानप्रकारेण परिपूर्णविपर्ययज्ञानाया नायिकाया मरणोद्यमं प्रतिपादयति स्वदेहवैराग्यप्रकाशनेन— किं ममैतेन दौर्भाग्यकलङ्कमलिनेनात्यन्तदुःखभागिनाद्यापि शरीरहतकेन । दौर्भाग्यमेव कलङ्कः । दौर्भाग्यं मनोरथदयितप्रेमाविषयत्वं, तादृशेन कलङ्केन मालिन्यं कदाचिदपि नापैति । अत एवात्यन्तदुःखभागित्वम् । अद्यापीति । इयन्तं कालं देवीसमाराधनादिना मनोरथसिद्धिविषयत्वेनास्य सुभगत्वं निरूपितम् । इदानीं तदलाभनिश्चयेऽपीत्यर्थः । शरीरहतकेन कुत्सितेन विशरणस्वभावेन । गुणान्तरेणैवास्य रक्ष्यत्वं निरूपितम् । तदलाभे त्याज्यमेवेत्यर्थः । तदुपायं प्रतिपादयति— इहैव रक्ताशोकपादपेऽनयातिमुक्तलतयोद्बध्येति देहत्यागसौकर्यं प्रकाशयति । अत एव चेटीविसर्जनार्थमाह— पश्य तावन्मित्रावसुर्दूरं गतो न वेति । येनाहमितो गमिष्यामि । तस्य दूरीभावे ज्ञाते तदलक्षितया मया इतो निर्गन्तुं शक्यमित्यभिप्रायगूहनेनोक्तिः ॥

१. 'ण । ता जा' ख. पाठः. २. 'हं पि इ' क. पाठः.

**चेटी—** (क) जं भट्टिदारिआ आणवेदि। (कतिचित् पदानि गत्वा) अण्णादिसं से हिअअं पेक्खामि। ता ण दाव गमिस्सं। इह एव्व ओवारिदा पेक्खामि किं एसा पडिवज्जादि त्ति[1]।

**नायिका—** (उत्थाय दिशो विलोक्य पाशं गृहीत्वा सास्रम्) (ख) भअवदि! गोरि[2]! इह तुए ण किदो पसादो। ता अण्णस्सिं पि दाव जम्मे जह ण ईदिसी दुक्खभाइणी होमि, तह करेहि[3]। (कण्ठे पाशमर्पयति।)

(क) यद् भर्तृदारिकाज्ञापयति। अन्यादृशमस्या हृदयं पश्यामि। तन्न तावद् गमिष्यामि। इहैवापवारिता पश्यामि किमेषा प्रतिपद्यत इति।

(ख) भगवति! गौरि! इह त्वया न कृतः प्रसादः। तदन्यस्मिन्नपि तावज्जन्मनि यथा नेदृशी दुःखभागिनी भवामि, तथा कुरु।

तदभिप्रायमाशङ्क्य विदग्धा चेटी अनुवादपूर्वं निर्गम्य विमृशति— अन्यादृशमस्या हृदयं पश्यामि। अनया अवस्थया वैराग्यगर्भमिव पश्यामि। तन्न तावद् गमिष्यामि। इहैवापवारिता पश्यामि किमेषा प्रतिपद्यत इति॥

एवं रतिसागरप्रविष्टा अन्तरान्तरा सङ्कल्पसम्बद्धचिन्तौत्सुक्यधृतिदैन्यनिर्वेदादिव्यभिचारितरङ्गपरम्पराभिरन्दोल्यमाना अभिलाषशृङ्गारस्य दशमीमवस्थां प्राप्तुमध्यवस्यन्ती उद्बन्धनपाशं गृहीत्वा देवीं प्रति प्रलपति— भगवति! गौरि! इह त्वया न कृतः प्रसादः। इहेति अस्मिन् जन्मनि। त्वत्प्रसादाभाव एवात्र निमित्तम्। एष एव मया युष्मत्प्रसादेनेति साध्यनिर्वाहकत्वेन प्रार्थितः। स च न कृतः। पुनरपि भवतीमेव प्रार्थये। अन्यस्मिन्नपि तावज्जन्मनि। तिष्ठतु इदं जन्म, अतीतत्वात्। आगामिन्यपि जन्मनि ईदृशी दुःखभागिनी न भवामि, वाञ्छितालाभेनेति शेषः। तथा कुर्विति। जन्मान्तरानुग्रहमेव प्रार्थये। सोऽपि त्वदायत्त एवेति भावः॥

१. 'त्ति। (स्थिता।) ना' क. पाठः. २. 'रि! जइ तुए इह ण', ३. 'हि। कराभ्यां क' घ. पाठः.

**चेटी** — (दृष्ट्वा ससम्भ्रमम्) (क) परित्ताअह परित्ताअह । एसा भट्टिदारिआ उब्बन्धिअ अत्ताणं वावादेदि ।

**नायकः** —(ससम्भ्रमम्[1]उपेत्य) क्वासौ क्वासौ ।

**चेटी** —(ख) इअं असोअपादवे ।

**नायकः** —(दृष्ट्वा सहर्षम्) कथं सैवेयमस्मन्मनोरथभूमिः । (नायिकां पाणौ गृहीत्वा लतापाशमाक्षिपन्)

नखलु नखलु मुग्धे! साहसं कार्यमेवं[2]
व्यपनय करमेतत्[3]पल्लवाभं लतायाः ।
कुसुममपि विचेतुं यो न मन्ये समर्थः
कलयति स कथं ते पाशमुद्बन्धनाय ॥ ११ ॥

(क) परित्रायध्वं परित्रायध्वम् । एषा भर्तृदारिकोद्बध्यात्मानं व्यापादयति ।

(ख) इयमशोकपादपे ।

---

एवं पाशार्पणपर्यन्ते मरणाध्यवसाये अभिलाषस्य परिपोषं समाप्य मरणस्य साक्षान्निषेधाय चेट्याः प्रलपितम् ॥

तदनुसारेण नायकस्य सम्भ्रमः । एषा आत्मानं व्यापादयतीति श्रुत्वा क्वासौ क्वासाविति कारुणिकस्योक्तिः ॥

कथं सैवेयमिति तां दृष्ट्वोक्तिः । अस्मन्मनोरथभूमिरिति । अस्मन्मनोरथस्य परमालम्बनम् ॥

नखल्वित्यादि । अत्यन्तानौचित्येन पुनः पुनर्निषेधः । साहसं प्राणपरित्यागरूपम् । मुग्धे इति सर्वथा मौग्ध्यमेवात्र निमित्तं, न त्वौचित्यनिरूपणम् । अत एव करं लताया व्यपनय विश्लेपय । एतत्पल्लवाभम् अस्या लतायाः पल्लवस्य सहजायमानम् । उद्बन्धनारम्भेऽपि प्रतिसम्ब-

---

१. 'म् क्वा' ख. पाठः. २. 'तद् व्य', ३. 'तं पल्ल' घ. पाठः.

**नायिका** — (ससाध्वसम्) (क) हद्धि । कोणुखु एसो । (नायकं निरूप्य सरोषं हस्तमाक्षेप्तुमिच्छति ।) मुञ्च मुञ्च मे अग्ग-[1]हत्थं । को तुमं णिवारेदुं । मरणे वि किं तुमं एव्व अब्भ-त्थणीओ ।

(क) हा धिक् । कोनुखल्वेषः । मुञ्च मुञ्च मेऽग्रहस्तम् । कस्त्वं निवारयितुम् । मरणेऽपि किं त्वमेवाभ्यर्थनीयः ।

न्धिन्या लतायाः स्वसौभाग्यमहिम्ना विशिष्टावयवसम्बन्धित्वं सम्भावयेत्ययं करः । एष लोकोत्तरवस्तुस्वभावः, यत् स्वसम्बन्धिन्यात्मरामणीयकातिशयेन रम्यतासम्पादनमननुकूलेऽपि । अनुकूले प्रतिसम्बन्धिनि किं पुनरिति नर्मगर्भोक्तिः । मौग्ध्यनिमित्तं करस्य पाशग्रहणप्रयुक्ततया साधयति — यः कुसुममपि विचेतुं न समर्थः, सौकुमार्यातिशयेन । स्पर्शेनैव मयैतदनुभूयते, यत् कुसुमापचयेऽप्यसामर्थ्यम् । अत उक्तं मन्ये इति । यो न समर्थ इति मन्ये, स तादृशः कथमुद्बन्धनायातिपरुषं पाशमाकृष्य कण्ठनालं नयति । त्वत्साहसानुसरणमेवास्य पाशार्पणे निमित्तम् । तद् अनुचितसम्बन्धममुं लताया व्यपनयेत्यर्थः ॥ ११ ॥

पूर्वं पाशार्पणपारवश्यादनिरीक्षणम् । ततः सहसा करस्पर्शे कोणुखु एसो इति अनिश्चयोक्तिः । पश्चान्निरीक्ष्य तत्प्रत्याख्यानमन्तर्निधाय सामर्षं हस्ताक्षेपपूर्वमाह — मुञ्च मुञ्चेत्यादि । कस्त्वं निवारयितुमिति । नखलु साहसं कार्यमिति निवारणमपि येन केन प्रकारेण सम्बन्धिनामेव युक्तं, न तूदासीनस्य । तादृशसम्बन्धित्वं त्वयि न दृश्यते । मरणेऽपीति । अपिशब्देन पूर्वं प्रार्थनाभङ्गं सूचयति । स्वनैरपेक्ष्यसाध्ये मरणेऽन्यप्रार्थना नापेक्ष्यत इति भावः । अतो मुञ्चेति निर्बन्धः ॥

१. 'मं अ' ख. पाठः. २. 'यितुं युक्तम् । अग्रं' क. घ. ङ. पाठः.

**नायकः**—नाहं मुञ्चामि ।

कण्ठे हारलतायोग्ये येन पाशस्तवार्पितः ।
गृहीतः सापराधोऽयं स कथं मुच्यते करः ॥ १२ ॥

**विदूषकः**—(क) भोदि ! किं पुण से मरणववसाअस्स कारणं ।

**चेटी**—(साकूतम्) (ख) णं एसो एव्व दे पिअवअस्सो ।

**नायकः**[1]—(सानुशयम्) कथमहमेवास्या मरणकारणम् । न खल्ववगच्छामि ।

(क) भवति ! किं पुनरस्या मरणव्यवसायस्य कारणम् ।

(ख) नन्वेष एव ते प्रियवयस्यः ।

नाहं मुञ्चामीति । पूर्वं तद्भावदर्शनेन इदानीं प्रणयकोपसूचकेन वचनलेशेन च विस्रम्भमन्तर्निधाय चाटुगर्भं प्रतिकूलवचनं नाहं मुञ्चामीति । त्वन्निर्बन्धेऽपीति शेषः । अत्र हेतुमाह—

कण्ठ इत्यादि । हारलतायोग्ये निस्तलषाण्मासिकमुक्तासूत्रपरिकलनयोग्ये तव ग्रीवानाले येनामङ्गलः पाशोऽर्पितः, अत एव सापराधत्वाद् गृहीतः, अयं करः कथं मुच्यते । सापराधस्य गृहीतस्य सहसा न परित्यागो युक्त इति न्यायानुसारेण न मुञ्चामीत्युक्तमित्यर्थः ॥ १२ ॥

अत्रोभयोर्विपर्ययज्ञाननिरासाय द्वारमुद्घाटयति विदूषकप्रश्नमुखेन— भवति ! किं पुनरस्या मरणव्यवसायस्य कारणमिति चेटीं प्रति प्रश्नः । भवतीति । एतदिच्छां विनापि अस्मत्सत्कारं कृतवती उचितज्ञा त्वमिति विस्रम्भेण प्रश्नः ॥

तदनुसारेण एष एव ते प्रियवयस्य इति तस्या उक्तिः । मरणकारणमिति शेषः ॥

कथमहमेवास्या मरणकारणमिति । अहमेवेति, अस्याश्चिरजीवितामपेक्षमाणः । न खल्ववगच्छामीति । मम एतन्मरणकारणत्वं स्वबुद्धि-

१. 'कः—क' ख. ग. घ. पाठः.

**विदूषकः**— (क) भोदि ! कहं विअ ।

**चेटी**— (ख) जा सा पिअवअस्सेण दे का वि हिअअवल्लहा[1] आलिहिदा, ताए पक्खवादिणा[2] पच्चाचिक्खन्तस्स[3] मित्तावसुणो णाहं पडिच्छामि त्ति सुणिअ जादणिव्वेदाए इमाए एवं ववसिदं ।

**नायकः**— (सहर्षमात्मगतम्) कथमियमेवासौ विश्वावसोर्दुहिता[4] मलयवती । अथवा, रत्नाकरादृते कुतश्चन्द्रलेखाप्रसूतिः । कष्टं, मनाग् वञ्चितोऽस्मि ।

---

(क) भवति ! कथमिव ।

(ख) या सा प्रियवयस्येन ते कापि हृदयवल्लभा आलिखिता, तस्यां पक्षपातिना प्रत्याख्यातस्य मित्रावसोर्नाहं प्रतीच्छामीति श्रुत्वा जातनिर्वेदयानयैवं व्यवसितम् ।

---

पूर्वमिति चेद्, बुद्धौ परिस्फुरेत् । तन्न स्फुरति । तदबुद्धिपूर्वत्वे कथं कारणत्वं घटतामिति जिज्ञासया सविषादं प्रश्नः ॥

तदनुसारेण विदूषकप्रश्नस्य चतुरिकोत्तरं कथयति — या सा प्रियवयस्येन ते कापि हृदयवल्लभा आलिखिता, तस्यां पक्षपातिना प्रत्याख्यातस्य मित्रावसोर्नाहं प्रतीच्छामीति श्रुत्वा जातनिर्वेदयानयैवं व्यवसितमिति अतीतवृत्तस्फुटीकरणम् । अनिष्टश्रवणवैराग्येणास्या देहत्यागोपक्रम इत्युत्प्रेक्ष्य तया चतुरिकया सिद्धवत् प्रतिपादितम् । कापि हृदयवल्लभेत्यनिष्टगर्भं वचनम् । तस्य(?) मित्रावसोरिति । प्रार्थयितुर्निरसनेन निर्वेदस्य योग्यता प्रकाशिता ॥

सहर्षमिति । अन्यथाप्रतीत्यपगमेन हर्षः । अत एवाह — इयमेवासौ विश्वावसोर्दुहितेति । इयमिति, अस्मन्नयनचकोरचन्द्रिका । असाविति, मित्रावसुमुखात् परमलालनीयतया श्रुता बुद्ध्युपारूढा । कथमि-

---

१.' हा सिळादळे आ', २. 'णा एदेण प' ख. ग. घ. पाठः. ३. 'डिबादअन्त' ख. पाठः. ४. 'म्) क' घ. पाठः.

**विदूषकः** — (क) **भोदि! जइ एवं, अणवरद्धो दाणि पिअवअस्सो। अहव जइ ण पत्तिआअदि, सअं एव्व गदुअ सिळादळं पेक्खदु होदी।**

**नायिका** — (सहर्षं सलज्जं च नायकं पश्यन्ती हस्तमाक्षेप्तुमिच्छति।) (ख) **मुञ्च मुञ्च मे अग्गहत्थं।**

(क) भवति! यद्येवम्, अनपराद्ध इदानीं प्रियवयस्यः। अथवा यदि न प्रत्येति, स्वयमेव गत्वा शिलातलं पश्यतु भवती।

(ख) मुञ्च मुञ्च मेऽग्रहस्तम्।

दमेवं जातमिति प्रथमं विकल्पं, पश्चात् तस्य लोकोत्तरत्वमस्या वनिताकुलवैजयन्तीत्वं च निरूप्य जनकत्वेन जन्यत्वेन चोचित एवानयोः सम्बन्ध इत्यप्रस्तुतमुखेन समर्थयति — अथवेति। पूर्वं पक्षान्तरस्यायोग्यता। रत्नाकरात् कौस्तुभाद्युत्पत्तिस्थानात् तज्जातीयायाश्चन्द्रलेखायाः सम्भवः। एवं गुणवतोऽस्मादस्या इति प्रकृतप्रतीतिः। अस्मद्विचारस्यैवापराधः। पूर्वमेवानिश्चयात् कथमियम् आद्रियात्विल्यात्मनोऽविमृश्यकारितया खेदः। अत एवाह — कष्टं मनाग् वञ्चितोऽस्मीति। मनागिति। नैतत् कार्यकरम्। इयमन्यप्रेमभूमिरन्या च तेन निर्दिष्टेति भ्रम एवात्र निमित्तम्। इदानीं भ्रमापगमे किमपि न वैषम्यमिति मनागित्युक्तम्॥

तदेव संवदति विदूषकः — यद्येवमनपराद्ध इदानीं प्रियवयस्यः। अथवा यदि न प्रत्येति न विश्वसिति। अस्मदुक्तिमात्रेणेति शेषः। स्वयमेव गत्वा शिलातलं पश्यतु भवतीति। लिखितायां पक्षपातशङ्कया निर्वेदः, तेन मरणाध्यवसाय इति तदुक्तिमनुसृत्य अहमेवालिखितेति तस्या विपर्ययज्ञानमपनेतुमेवमुक्तिः॥

एवं भ्रमनिवृत्तौ प्रत्यासन्नहर्षसम्भ्रमरतिसमुल्लासलज्जाललितं तं पश्यन्ती स्वहस्तं विमोचयितुकामा पुनरप्यग्रहस्तमोचनं प्रार्थयते॥

१. 'कर्षति।' ख. पाठः.

**नायकः** — (सस्मितम्) न तावन्मुञ्चामि, यावन्मया हृदयवल्लभां शिलायामालिखितां न पश्यसि ।

(सर्वे परिक्रामन्ति ।)

**विदूषकः**—(कदलीपत्रमपनीय) (क) एसा से हिअअवल्लहा।

**नायिका** — (निरूप्यापवार्य सस्मितम्) (ख) चउरिए ! अहं विअ आलिहिदा ।

**चेटी** — (चित्राकृतिं नायिकां च निर्वर्ण्य) (ग) भट्टिदारिए! किं

(क) एषास्य हृदयवल्लभा ।

(ख) चतुरिके! अहमिवालिखिता ।

(ग) भर्तृदारिके! किं भणसि अहमिवालिखितेति । ईदृशमस्य सादृश्यं,

तद्भावं विदित्वानुमितापराधं साक्षात्कारेणापनयामीति प्रेमविस्रम्भानुवृत्तिपूर्वमाह — न तावन्मुञ्चामि । त्वदुक्तिमनुसराम्येव । कालः प्रतीक्ष्यते । तावन्तं कालं न मुञ्चामि, यावन्मया हृदयवल्लभां शिलायामालिखितां न पश्यसीति कापि हृदयवल्लभेति तदुक्तिमनूद्य कथनम् । हृदयवल्लभेति न संशयः आलिखितेति च । ततस्तद्दर्शनेन भवत्या निश्चये जाते तदानीमेव मुञ्चामीति नर्मसचिवोक्तं स्वयमपि निर्बध्नाति । तदनुसारेण सर्वेषां परिक्रमणम् ॥

कदलीपत्रापनयनं पूर्वं मित्रावसुदर्शने आच्छादितत्वात् । एषास्य हृदयवल्लभा । एतावदेवास्माकमपेक्षितम् । इयमन्या वा स्वयं वेति भवत्येव जानात्विति शेषः ॥

चित्रावलोकनेनात्मसारूप्यं निश्चित्य तां संवादयितुमपवार्याह — चतुरिके! अहमिवालिखितेति । विनयहर्षाभ्यां सम्भावनागर्भत्वेनोक्तिः, न त्वहमेवेति ।

तदुक्तिमनुसृत्य नायिकाप्रतिकृत्योः परस्परसादृश्यं निरतिशयमालक्ष्य तद्विकल्पनिर्मूलनाय तदुक्तिमनूद्य विशेषं कथयति — भर्तृदारिके!

१ 'कः— न' क पाठः. २. 'य) भोदि! पेक्ख एदस्स हिअअवल्लहं ।' ख. पाठः.

भणासि अहं विअ आळिहिदत्ति । एरिसं से सारिक्खं, जेण ण आणीअदि किं दाव इह मणिसिळादळे भट्टिदारिआए पडिबिम्बं सङ्कन्दं, आदु तुवं आळिहिदत्ति ।

**नायिका** — (विहस्य[1]) (क) दुज्जणीकिदह्मि इमिणा इदं चित्तं दंसअन्तेण ।

---

येन न ज्ञायते किं तावदिह मणिशिलातले भर्तृदारिकायाः प्रतिबिम्बं सङ्क्रान्तम्, उत त्वमालिखितेति ।

(क) दुर्जनीकृतास्म्यमुनेदं चित्रं दर्शयता ।

---

किं भणसि अहमिवालिखितेति । अहमिवेत्युक्तौ अनिश्चयगर्भोक्तिः । तन्न चतुरश्रम् । निश्चयस्यैवात्रावसर इति विकल्पनिरासगर्भोक्तिः । तमेव स्फुटयति — ईदृशमस्य सादृश्यं, येन न ज्ञायते किं तावदिह मणिशिलातले भर्तृदारिकायाः प्रतिबिम्बं सङ्क्रान्तम्, उत त्वमालिखितेति । इह मणिशिलातले किं तावद् भर्तृदारिकायाः प्रतिबिम्बं सङ्क्रान्तम्, उत त्वमालिखिता इति येन न ज्ञायते, ईदृशमस्य सादृश्यमिति समन्वयः । सादृश्यस्य प्रकर्षप्रतिपादनं प्रतिबिम्बत्वविकल्पनेन क्रियते । तस्योपपत्तिः मणिशिलायामिति । मणिशिलायां मुकुरवत् प्रतिबिम्बनस्योपपत्तेः । चित्रे लिखितस्य सादृश्यमेव । प्रतिबिम्बस्य बिम्बान्न पृथक् स्वरूपोपलब्धिः । अतश्चित्रस्य प्रतिबिम्बत्वविकल्पनेन प्रकर्षप्रतिपादनम् । येन सादृश्येन । न ज्ञायते सादृश्यमेव चित्रस्य वक्तुं युक्तम् । तत्प्रकर्षेणेदं चित्रं वा प्रतिबिम्बं वेति यथा द्रष्टॄणां विकल्पे एकतरनिश्चयो न भवेत्, तथाविधं सादृश्यम् । अतः सम्भावनागर्भामुक्तिं मा कृथा इत्यर्थः ॥

एवं तदुक्त्या परिपूर्णनिश्चया विनयशैथिल्यशङ्कया स्वविनयमुद्बोधयति — दुर्जनीकृतास्मि अमुना इदं चित्रं दर्शयता । चित्रदर्शनविश्वासेन बुद्धिलाघवं प्रौढोचितो मानग्रहश्च स्फुरेत् । तद् दुर्जनोचितम् । चि-

---

१. 'च्छं', २. 'स्य) हज्जे ! दु' ख. पाठः.

**विदूषकः** — (क) भो ! णिव्वुत्तो दाणि गान्धव्वो विवाहो । मुञ्च इदाणिं से अग्गहत्थं । एसा का वि तुरिअतुरिअं[1] आअच्छदि ।

(नायको मुञ्चति ।)

(प्रविश्य[2])

**चेटी** — (सहर्षं सहसोपसृत्य) (ख) भट्टिदारिए[3] ! पडिच्छिदा[4] तुवं जीमूदवाहणस्स गुरूहिं ।

(क) भोः ! निर्वृत्त इदानीं गान्धर्वो विवाहः । मुञ्चेदानीमस्या अग्रहस्तम् । एषा कापि त्वरितत्वरितमागच्छति ।

(ख) भर्तृदारिके ! प्रतीष्टा त्वं जीमूतवाहनस्य गुरुभिः ।

प्रत्ययेन पूर्वं सौजन्य एवावस्थितिः । इदानीं किञ्चिदन्यथा जातमित्यभिजनोचिता लज्जानुबद्धा शङ्का व्यज्यते ॥

अथ साध्यानुगुणं नर्मसचिवोक्तिः — भोः ! निर्वृत्त इदानीं गान्धर्वो विवाहः । मुञ्चेदानीमस्या अग्रहस्तम् । इदानीमिति, पूर्वं प्रार्थनानिषेधस्यापराधस्यान्यथात्वं सूचितम् । गान्धर्वेति ।

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वराक्षसौ चान्यौ पैशाचश्चाष्टमः स्मृतः ॥"

इति प्रतिपादितेषु विवाहप्रकारेष्वेको गान्धर्वः । स निर्व्यूढः, परस्परानुरागवतोः करस्पर्शात् । इदानीमग्रहस्तं मुञ्च, साध्यस्य सिद्धत्वादिति भावः । हस्तस्याग्रम् अग्रहस्तमिति राजदन्तादित्वात् परनिपातः । मोचने हेत्वन्तरमप्याह — एषा कापि त्वरितत्वरितमागच्छति । इयमपीमामवस्थां सहसा न जानात्विति भावः ॥

तदुक्त्यनुसारेण हस्तमोचनम् । ततश्चेटीप्रवेशः । सहर्षमुपसृत्येति हर्षपूर्वेणोपसर्पणेनैव मनोरथसिद्धिसूचनम् । तामेवोक्त्या स्फुटयति — भर्तृदारिके ! प्रतीष्टा त्वं जीमूतवाहनस्य गुरुभिः । प्रतीष्टा स्वीकृता । गुरुभिरित्यनेन तस्य गुरुपराधीनत्वेन साध्यनिश्चयः प्रकाश्यते ॥

१. 'अं इदा एव्व आ', २. 'ततः प्रविशति चेटी) च', ३ 'ए! दिट्ठिआ वड्ढसि । प', ४ 'दा खु तु' ख. पाठः.

**विदूषकः** — (नृत्यन्) (क) सम्पुण्णो मणोरहो पिअवअस्सस्स । अहवं अत्तहोदीए[2] । अहव ण एदाणं । (भोजनमभिनयन्) मम एव बह्मणस्स ।

**चेटी** — (नायिकामुद्दिश्य) (ख) आणत्तह्मि जुवराअमित्तावसुणा । जह — अज्ज एव्व मळअवदीए विवाहो । ता ळहु एदं गेह्णिअ आअच्छत्ति । ता एहि गच्छह्म ।

**विदूषकः** — (ग) गदा[3] तुवं दासीए धीदे! एदं गह्णिअ ।

(क) सम्पूर्णो मनोरथः प्रियवयस्यस्य । अथवात्रभवत्याः । अथवा नैतयोः । ममैव ब्राह्मणस्य ।

(ख) आज्ञप्तास्मि युवराजमित्रावसुना । यथा — अद्यैव मलयवत्या विवाहः । तल्लध्वेनां गृहीत्वागच्छेति । तदेहि गच्छावः ।

(ग) गता त्वं दास्याःपुत्रि! एतां गृहीत्वा । प्रियवयस्येन पुनरत्रैवा-

तच्छ्रुत्वा नृत्यन् हास्यपरिपोषं प्रकाशयति प्रकंस्यमानसम्भोग शृङ्गाराङ्गत्वेन । सम्पूर्णो मनोरथः प्रियवयस्यस्य । अथवा अत्रभवत्याः । अथवा नैतयोः, ममैव ब्राह्मणस्येति स्वमनोरथं भोजनाभिनयनेन प्रकाशयति । उभयोर्मनोरथसम्पत्तिकथनेन परिपोषं गतस्य परस्परानुरागस्य संभोगवीथीस्वैरसञ्चारावसरं सूचयति । ब्राह्मणस्येति, मृष्टान्नादृते कोऽन्यो मनोरथविषयो मादृशाम् । तच्चेदानीं विवाहोत्सवे यथेष्टं सिध्यतीति हासार्थः ॥

आगताया उक्तिः — आज्ञाप्तास्मि युवराजमित्रावसुना । यथा — अद्यैव मलयवत्या विवाहः । तलघु एनां गृहीत्वागच्छेति । तदेहि गच्छावः ॥

इति तस्याः ससम्भ्रमं वचनमाकर्ण्य साक्षेपमाह — गता त्वं दास्याः पुत्रि! एतां गृहीत्वा । प्रियवयस्येन पुनरत्रैवासितव्यम् । दास्याः पुत्रीति । केवलं तस्या एतन्नयननिर्बन्धदर्शनेन निरासगर्भोक्तिः । त्वं

१. 'व ण हिं, अ', २. 'ए मळवदीए । अ', ३. 'मा खु तु' ख. पाठः.

पिअवअस्सेण उण इह एव्व अच्चिदव्वं ।

**चेटी**—(क) हदास! मा तुवर । तुह्माणं पि ह्लावणअं आअदं एव्व ।

(नायिका सानुरागं सलज्जं नायकं पश्यन्ती सपरिवारा निष्क्रान्ता । )

(नेपथ्ये)

वृष्ट्या पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यः सिन्दूरदूरीकृतदिवससमारम्भसन्ध्यातपश्रीः ।

---

सितव्यम् ।

(क) हताश! मा त्वरस्व । युष्माकमपि स्नापनकमागतमेव ।

---

स्वस्वामिनीमुखप्रेक्षिण्येव । अहमप्यस्मद्वयस्ययोगक्षेमं निरूपयामि । सम्बन्धे परस्परं निरूपणं युक्तं, तन्न कृतमिति परिहासेन निरासः ॥

तद्वचनेन कुपिताह—मा त्वरस्व । युष्माकमपि स्नापनकमागतमेव । स्नापनकं स्नानोचितं देशकालादि । हताशेति । अस्माभिर्युष्मत्कार्यमपि निरूपितम् । तव त्वरैवान्यथाप्रतीतिकृत् । अत एव हताशस्त्वमिति भावः ॥

एवमवस्थोचितसंयोगोत्थापकमपि वियोगमसहमानायां लज्जानिरुद्धेनापि कटाक्षपातेन नायकहृदयमाकृष्य तस्यां गतायां चूलिकारूपेण सूच्यसूचनं—वृष्ट्येत्यादि । पिष्टातकस्य पटवासस्य । 'पिष्टातः पटवासक' इत्युक्तत्वात् । उत्सवेषु रजनीतण्डुलकुङ्कुमादीनां तत्र तत्रोलूखलावहननेन चूर्णप्रसारणं क्रियते । तत् पिष्टातकमित्युच्यते । तस्य वृष्ट्या निरन्तरप्रसरणेन । इह मलये मेरुतुल्यां द्युतिं दधानः सर्वत्रारुणिमोदयेन कनकगिरितुल्यां शोभां विदधानः । सद्यः तदानीमेव सिन्दूरेण उपर्युपरि विक्षिप्तेन च सिन्दूरचूर्णेन दूरीकृता न्यक्कृता दिवससमारम्भस्य सन्ध्यातपस्य च श्रीः शोभा येन । पिष्टातकोपरि सिन्दूरधूलीप्रसरणेन मलय एवारुणसन्ध्यातपकृतशोभां सातिशयं सम्पादयन् । एवम्भूतः सिद्धलोकः । अङ्गनानामुद्गीतैः कल्याणाङ्गीनां तरुणीनां तारस्वनैः विवा-

उद्गीतैरङ्गनानां चलचरणरणन्नूपुरह्लादहृद्यै-

रुद्वाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः ॥१३॥

**विदूषकः**—(आकर्ण्य) (क) भो वअस्स ! आअदं ह्लावणअं।

**नायकः**— (सहर्षम्) सखे ! यद्येवं, किमिदानीमिह स्थीयते। तदागच्छ। तातं नमस्कृत्य स्नानभूमिमेव गच्छावः।

अन्योन्यदर्शनकृतः समानरूपानुरागकुलवयसाम्।

केषाञ्चिदेव मन्ये समागमो भवति पुण्यवताम्॥ १४ ॥

(निष्क्रान्तौ।)

द्वितीयोऽङ्कः।

---

(क) भो वयस्य ! आगतं स्नापनकम्।

---

होत्सवशेषभूतैः गीतैः। अलङ्करणादिसम्पादनसमुचितपरिचङ्क्रमणचलेषु चरणकमलेषु रणतां नूपुराणां ह्लादेन गीतानुसारिणा तालेनेव हृद्यैः श्रोत्रानन्दकरैः महोत्सवसूचकैः। भवतः उद्वाहस्नानवेलां कथयति। किमन्येनोक्तिप्रकारेण। इदमेवालमिति भावः। सिद्धये भवतो राजपुत्र्या उभयसम्बन्धिनाम् अस्माकं च। किं कथयति। उद्वाहस्नानवेलाम् उद्वाहार्थं यत् स्नानं तस्य कालम्। ततस्त्वरताम् ॥ १३ ॥

इति गमनकाले सूचिते तदनुमोदमानः श्लाघते वयस्यः— भो वयस्य ! आगतं स्नापनकम्। स्नानानुगुणं देशकालादिकम् अनेन वचनेन ज्ञातुं शक्यते ॥

तच्छ्रुत्वा कृतार्थ आह — सखे ! यद्येवं, किमिदानीमिह स्थीयते, अस्माभिरिति शेषः। साध्ये सिद्धे किं वृथासिकया। तदागच्छ। तातं नमस्कृत्य स्नानभूमिमेव गच्छावः ॥

इत्येवं समीहितसिद्ध्या हृष्यन्नात्मनः समुचिताय विवाहाय श्लाघमान आह— अन्योन्यदर्शनकृत इत्यादि। परस्परावलोकनेन इतरेतररूपचातुर्यानुभावेन कृतः सम्पादितः इत्यनेन 'यस्यां मनश्चक्षुषोः प्रवृत्तिस्तस्या

मृद्धिः' (अधि० ३. अध्या० १. सू० १४) इति कामसूत्रानुसारेण दर्शनस्य मुख्यत्वात् तत्कृतस्य गौरवम् । समानं रूपम् अनुरागः प्रेम कुलं वंशोन्नतिः वयश्च एषाम् । अनेन 'सवर्णायाम् अनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः ........ पक्षवृद्धिः, अनुपस्कृता रतिश्च' (अधि० ३. अध्या० १. सू० १) इत्यादिकामसूत्रोक्तमनुसरति । केषाञ्चिदेव, न तु सर्वेषाम् । अत एव पुण्यवतामिति विशेषणम् । पुरातनेन ऐहिकेन वा पुण्यप्रकर्षेणैव घटते । तच्च न सर्वेषाम् इत्युक्तं केषाञ्चिदेवेति । अनेन विरलत्वम् । अत एवापेक्षणीयत्वं तत्पङ्क्तिनिवेशेनात्मनः श्लाघ्यतां च प्रकाशयति । समागमः सम्बन्धः दाम्पत्येनाखिलपुरुषार्थशेषतया परस्परानुकूल्यम् । मन्ये इदानीमस्मदवस्थया सदाचारनिरूपणेन च कल्पयामि ॥१४॥

एवं समुचितेन परिणयनेनात्मनः सम्भावनीयं गार्हस्थ्यं बहुमन्यमानो विवाहार्थं निष्क्रान्तः ॥

इति शिवरामस्य कृतौ नागानन्दविमर्शिन्यां
द्वितीयाङ्कार्थविमर्शनं

समाप्तम् ।

---

# अथ तृतीयोऽङ्कः ।

(ततः प्रविशति मत्त उज्ज्वलवेषश्चषकहस्तो विटश्चेटश्च ।)

**विटः—**

**(क) णिच्चं जो पिबइ सुरं जणस्स पियसङ्गमं च जो कुणइ ।**
**मह दे दो च्चिअ देवा बळदेवो कामदेवो अ ॥ १ ॥**

---

(क) नित्यं यः पिबति सुरां जनस्य प्रियसङ्गमं च यः करोति ।
मम तौ द्वावेव देवौ बलदेवः कामदेवश्च ॥

---

एवम्

"अत्रान्तरे मलयवत्यभ्येत्य विरहासहा ।
गौर्याश्रमे तरुलताप्रान्ते पाशमकल्पयत् ॥

ततः प्रणम्य गिरिजां हा तातेति विलप्य सा ।
जीमूतवाहनो भूयादन्यस्मिन् मम[1] जन्मनि ॥

विभुरित्यभिधायाभूत् पाशस्याभिमुखी क्षणात् ।
तच्छ्रुत्वा सुहृदाहूतस्तूर्णं जीमूतवाहनः ॥

छन्नस्तरुलताजालैस्तच्छुश्राव ददर्श ह ।
ततो देवीवरं प्राप्य सा ददर्श पुरः स्थितम् ॥

जीमूतवाहनं तत्र लज्जामुकुलितेक्षणा ।
अत्रान्तरे समभ्येत्य चेटिका तां व्यजिज्ञपत् ॥

दिष्ट्या विवर्धसे देवि ! प्रस्तुतस्ते महोत्सवः ।
त्वद्भ्राता जनकादेशादद्य विद्याधरेश्वरः ॥

---

१. 'मे सुज' क. ङ. पाठः.

जीमूतकेतुः पुत्राय दातुं त्वां सादरोऽर्थितः ।
तदेहि कल्पितोऽद्यैव विवाहो जनकेन ते ॥

इति श्रुत्वैव सा तूर्णं प्रययौ चारुहासिनी ।
जीमूतवाहनोऽप्याशु समेत्य पितुरन्तिकम् ॥

उवाह मङ्गलोदारविवाहोचितभूषणम् ।
ततो महोत्सवानन्दिविद्याधरशतानुगः ॥

परिणीय प्रियतमां सोऽभूत् सम्भोगतत्परः ।"

इति क्षेमराजकथानुसारेण विप्रलम्भपरिपोषे उद्बन्धनावधि प्रतिपादिते विवाहारम्भपरिसमापिते द्वितीयेऽङ्के अवसरप्राप्तसम्भोगवर्णनोपक्रमे 'वृत्तयः काव्यमातृका' इत्युक्तत्वाद् नाटकस्य सर्ववृत्तिसमाश्रयसर्वरसविशिष्टत्वात् शृङ्गारहास्यकरुणानां कैशिकीवृत्त्याश्रयत्वाच्च

"या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारां तां कैशिकीं नाम वदन्ति वृत्तिम् ॥"

इत्युक्तलक्षणायाः कैशिक्या नेतृव्यापाररूपायाः

"नर्म च नर्मस्पन्दो नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते मयाख्याताः ॥"

इत्युक्तेष्वङ्गेषु नर्मणः

"वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम्"

इति लक्षितस्य शृङ्गारहास्यभयरूपेण त्रैविध्ये हास्यनर्मणो वृत्त्यङ्गत्वेन रसान्तराङ्गत्वाद् अङ्कान्तर्भावं प्रकाश्य विटविदूषकचेटीचेटानां मदहास्यरूपसंवादे वेषभाषाचेष्टारूपेण त्रिधा प्रतिपादनं विवाहनिर्वहणोद्यानगमनोपक्रमादिसूच्यसूचनविशिष्टं

"विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेषकृतैः ।
हासयति जनं यस्मात् तस्माज्ज्ञेयो रसो हास्यः ॥
स्त्रीनीचप्रकृतिष्वेष भूयिष्ठं दृश्यते रसः ।"

---

१. 'रत्वा' क. पाठः.

(क) सफळं खु मम सेहरअस्स जीविअं,

वच्छत्थळम्मि दइआ दिण्णुप्पळवासिआ[1] मुहे मइरा ।
सीसम्मि अ सेअरओ णिच्चं चिअ सण्ठिआ जस्स ॥ २ ॥

---

(क) सफलं खलु मम शेखरकस्य जीवितं,

वक्षःस्थले दयिता दत्तोत्पलवासिता मुखे मदिरा ।
शीर्षे च शेखरं नित्यमेव संस्थितानि यस्य ॥

---

इति प्रतिपादितस्य हास्यस्य शृङ्गाररसजन्यत्वाच्च तन्मध्ये शोभाकरत्वाच्च तद् भूयिष्ठमङ्कमुखे साध्यते । तत्र मदान्धस्य विटस्य कैशिक्याश्रयत्वाद् उज्ज्वलवेषस्य चेटसहितस्य प्रवेशे विट आत्मनो विशेषज्ञतां हास्यरूपां प्रतिपादयति — णिच्चमित्यादि ।

नित्यं यः पिबति सुरां जनस्य प्रियसङ्गमं च यः करोति ।
मम तौ द्वावेव देवौ बलदेवः कामदेवश्च ॥

अत्र यः नित्यं सुरां पिबति, यः प्रियसङ्गमं च करोति, तौ द्वावेव इत्युक्ते कश्च कश्च इत्याकाङ्क्षायां पुनर्नामकथनम् । ममेति अन्येषां सन्तु वा मा वा, ममैतावेव बहुमतौ, उचितकारित्वात् कारकत्वाच्च । अन्ये कर्तव्याकरणात् सन्तोऽप्यसत्कल्पाः । अत उक्तं द्वावेवेति । जनस्य प्रियस्य प्रियायाश्च । प्रियशब्देऽपि तथा ॥ १ ॥

सफलं खलु मम शेखरकस्य जीवितम् । ममैव जीवितं सफलमित्यर्थः । शेखरकस्येत्यौद्धत्यगर्भं वचनम् । कस्मादित्याह — वक्षःस्थले दयिता दत्तोत्पलवासिता मुखे मदिरा । शीर्षेऽपि च शेखरं विटाधिपत्यचिह्नं नित्यमेव संस्थितानि यस्य । त्रितयमपि त्रितये यस्य सर्वदा सन्निहितमेतदेव जन्मसाफल्यमित्यर्थः ॥ २ ॥

---

१. 'भि' घ. पाठः.

(परिस्खलन्) अरे ! को मं चाळेइ। (सहासम्) अवस्सं णोमाळिआ मं परिहसदि ।

चेटः— (क) भट्टका ! ण दाव आअदा णोमाळिआ ।

विटः— (ख) (सरोषम्) पढमप्पदोस एव्व मळअवदीविवाहमङ्गळं णिव्वुत्तं । ता कीस इदाणिं पभादे वि ण आअच्छदि । (सहर्षम्) अहव इमस्सि मळअवदीए विवाहमङ्गळूसवे सव्वो एव्व णिअप्पणइणीजणसणाहो सिद्धवि-

---

अरे को मां चलयति । अवश्यं नवमालिका मां परिहसति ।

(क) भट्टक ! न तावदागता नवमालिका ।

(ख) प्रथमप्रदोष एव मलयवतीविवाहमङ्गलं निर्वृत्तम् । तत् कस्मादिदानीं प्रभातेऽपि नागच्छति । अथवा अमुष्मिन् मलयवत्या विवाहमङ्गलोत्सवे सर्व एव निजप्रणयिनीजनसनाथः सिद्धविद्याधरलोकः कुसुमाकरोद्याने

---

परिस्खलन्निति मदविकारपरम्परोपलक्षणम् । अरे ! को मां चलयति । विशेषप्रतीत्या हासः । अवश्यं नवमालिका मां परिहसति ॥

भट्टक ! न तावदागता नवमालिका ॥

प्रथमप्रदोष एव मलयवतीविवाहमङ्गलं निर्वृत्तम् । तत् कस्मादिदानीं प्रभातेऽपि नागच्छति । प्रथमप्रदोषः अनन्तरातीतः प्रदोषः । अतीतरात्र्यारम्भ एवेत्यर्थः । अथवा अमुष्मिन् मलयवत्या विवाहमङ्गलोत्सवे सर्व एव निजप्रणयिनीजनसनाथः सिद्धविद्याधरलोकः कुसुमाकरोद्याने आपानसौख्यमनुभवति । तत् तस्मिन्नेव नवमालिका मामुदीक्षमाणा

ज्जाहरळोओ कुसुमाअरुय्याणे आवाणसोक्खं अणुहोदि। ता तहिं एव्व णोमाळिआ मं उदिक्खमाणा चिट्ठई। ता तहिं एव्व गमिस्सं। कीदिसो णोमाळिआए विणा सेह-रओ। (स्खलन् परिक्रामति।)

चेटः— (क) एदं[२] उय्याणं। पविसदु भट्टओ।

(उभौ प्रविशतः।)

(ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषकः।)

विदूषकः— (ख) सुदं मए पिअवअस्सो कुसुमा-अरुज्जाणं गमिस्सदित्ति। ता जाव तहिं एव गमिस्सं। (परिक्रम्य) एदं[२] उज्जाणं, जाव पविसामि। (प्रविश्य भ्रमरसम्पातं नाटयन्) कीस उण एदे दुट्ठमहुअरा मं एव अभिद्दवन्ति।

---

आपानसौख्यमनुभवति। तत् तस्मिन्नेव नवमालिका मामुदीक्षमाणा तिष्ठति। तत् तस्मिन्नेव गमिष्यामि। कीदृशो नवमालिकया विना शेखरकः।

(क) एतदुद्यानं प्रविशतु भट्टकः।

(ख) श्रुतं मया प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति। तद्यावत्तत्रैव गमिष्यामि। एतदुद्यानं, यावत्प्रविशामि। कस्मात्पुनरेते दुष्टमधुकरा मामेवा-

---

मन्मार्गदत्तदृष्टिः तिष्ठति। तत् तस्मिन्नेव गमिष्यामि। कीदृशो नवमा-लिकया विना शेखरकः॥

एतदुद्यानम्। प्रविशतु भट्टकः। अनेनातीतवृत्तान्तश्च सूचितः॥

अथ विदूषकस्य प्रवेशः। श्रुतं मया प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति। तद् यावद् तत्रैव गमिष्यामि। एतदुद्यानं, यावत् प्रविशामि। भ्रमरसम्पातं नाटयन्निति निजावस्थाप्रकाशनोपायः। कस्मात् पुनरेते

---

१. 'इत्ति तक्केमि। ता', २. 'दं खु उ' मूलकोशपाठः.

(आत्मानमाघ्राय) भोदु, जाणिदं मए। जं मळअवदीए बन्धुजणेण जामादुअस्स पिअवअस्सोत्ति सबहुमाणं वण्णएहि विळिचोह्मि। सन्ताणकुसुमसेहरं च[1] पिणद्धं। एसो[2] अच्चादरो मे अणत्थीभूदो। किं दाणिं एत्थ करिस्सं। अहव एदेण एव मळयवदीए सआसादो ळद्धेण रत्तंसुअजुअळेण इत्थिआ विअ ळंबं ळंबं परिहिअ उत्तरीयकिदावगुण्ठणो गमिस्सं। पेक्खामि दाव दासीएपुत्ता दुट्ठमहुअरा किं करिस्सन्ति त्ति। (तथा करोति।)

---

भिद्रवन्ति। भवतु, ज्ञातं मया। यन्मलयवत्या बन्धुजनेन जामातुः प्रियवयस्य इति सबहुमानं वर्णकैर्विलिप्तोऽस्मि। सन्तानकुसुमशेखरं च पिनद्धम्। एषोऽत्यादरो मेऽनर्थीभूतः। किमिदानीमत्र करिष्यामि। अथवा एतेनैव मलयवत्याः सकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीव लम्बं लम्बं परिधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि। पश्यामि तावद् दास्याःपुत्रा दुष्टमधुकराः किं करिष्यन्तीति।

---

दुष्टमधुकरा मामेवाभिद्रवन्ति। भवतु, ज्ञातं मया। यद् मलयवत्या बन्धुजनेन जामातुः प्रियवयस्य इति सबहुमानं वर्णकैर्विलिप्तोऽस्मि। वर्णकैः अङ्गरागैः, बहुवचनं बहूनां विलेपनद्योतकम्। सन्तानकुसुमशेखरं च पिनद्धम्। एषोऽत्यादरः मेऽनर्थीभूतः, भ्रमरबाधाहेतुत्वात्। किमिदानीमत्र करिष्यामि। अथवा. अथवेति विकल्पितस्योपायस्य सिद्धत्वेनेदमेव कर्तव्यमित्यर्थः। तदाह—एतेनैव मलयवत्याः सकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीव लम्बं लम्बं परिधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि। पश्यामि तावद् दास्याःपुत्रा दुष्टमधुकराः किं करिष्यन्तीति। एतद् विटस्य भ्रमनिमित्तं, वेपनमेप्रकारश्च।

---

१. 'च मे पि', २. 'सो सो अ' मूलकोशपाठः.

**विटः**—(निरूप्य सहर्षम्) (क) **अरे चेडअ!** (अङ्गुल्या निर्दिश्य सहासम्) **एसा खु णोमालिआ अहं चिरस्स आअदो त्ति कुविदा अवगुण्ठणं करिअ अण्णदो गच्छदि। ता कण्ठे गह्णिअ पसादेमि णं।** (सहसोपसृत्य कण्ठे गृहीत्वा मुखेन ताम्बूलं दातुमिच्छति।)

**विदूषकः**—(मद्यगन्धं सूचयन् नासिकां गृहीत्वा परावृत्तमुखः) (ख) **अहं एक्काणं महुअराणं मुहादो कहं वि परिब्भट्टो अण्णस्स दुट्ठमहुअरस्स मुहे पडिदो ह्मि।**

**विटः**—(ग) **कहं कोवेण परम्मुहीभूदा**[2]। (विदूषकस्य चरणावात्मनः शिरसि कुर्वन्) **पसीद णोमालिए! पसीद।**

---

(क) अरे चेट! एषा खलु नवमालिका अहं चिरस्यागत इति कुपितावगुण्ठनं कृत्वान्यतो गच्छति। तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम्।

(ख) अहमेकेषां मधुकराणां मुखात् कथमपि परिभ्रष्टोऽन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि।

(ग) कथं कोपेन पराङ्मुखीभूता। प्रसीद नवमालिके! प्रसीद।

---

अरे चेट! एषा खलु नवमालिका अहं चिरस्यागत इति कुपितावगुण्ठनं कृत्वान्यतो गच्छति। असौ मां मा द्राक्षीदिति। कोपकार्यमवगुण्ठनम्। तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम्। कण्ठे ग्रहणं ताम्बूलदानेच्छा च नीचानामनुसरणमार्गः। अयं चेष्टानर्मप्रकारः॥

अहमेकेषां मधुकराणां मुखात् कथमपि परिभ्रष्टोऽन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि। मधुकर इति विटस्यापि वाच्यत्वाद्, मद्यपस्येति वा। मुखे पतित इति। तद्विधेय इत्यर्थः॥

कथं कोपेन पराङ्मुखीभूता। विदूषकस्य चरणावात्मनः शिरसि कुर्वन् इत्यादि। तत्र तत्र चेष्टानर्मप्रकारोऽभ्यूह्यः॥

---

१. 'आ मं पेक्खिअ अ', २. 'दा। (प्रणामं कुर्वन् वि' इति मूलकोशपाठः.

(ततः प्रविशति चेटी ।)

**चेटी**—(क) आणत्तह्मि भट्टिदारिआए मादाए—हञ्जे णोमाळिए! कुसुमाअरुय्याणं गच्छिअ उय्याणपाळिअं पळ्ळविअं भणाहि—अज्ज सविसेसं तमाळवीहिअं सज्जीकरेहि । मळयवदीसहिदेण जामादुएण एत्थ आअन्तव्वं त्ति । आणत्ता अ मए पळ्ळविआ । जाव रअणीविरहुक्कण्ठिअं पिअवळ्ळहं सेहरअं अण्णेसामि । (दृष्ट्वा) एसो सेहरओ । (सरोषम्) कहं अण्णं कं पि इत्थिअं पसादेदि ।

---

(क) आज्ञप्तास्मि भर्तृदारिकाया मात्रा—हञ्जे नवमालिके! कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण—अद्य सविशेषं तमालवीथिकां सज्जीकुरु । मलयवतीसहितेन जामात्रात्रागन्तव्यमिति । आज्ञप्ता च मया पल्लविका । यावद् रजनीविरहोत्कण्ठितं प्रियवल्लभं शेखरकमन्विच्छामि । एष शेखरकः । कथमन्यां कामपि स्त्रियं प्रसादयति ।

---

ततश्चेटीप्रवेशः । अज्ञप्तास्मि भर्तृदारिकाया मात्रा—हञ्जे नवमालिके! कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण—अद्य सविशेषं तमालवीथिकां सज्जीकुरु । सविशेषमिति पूर्वस्मादिति शेषः—तस्य हेतुमाह मलयवतीसहितेन जामात्रात्रागन्तव्यमिति । आज्ञप्ता च मया पल्लविका । यावद् रजनीविरहोत्कण्ठितं प्रियवल्लभं शेखरकमन्विच्छामि । अनेनाप्युद्यानगमनवृत्तान्तः सूचितः । एष शेखरकः । कथमन्यां कामपि स्त्रियं प्रसादयति ॥

तदागमने नवमालिकाबुद्ध्या विदूषकं प्रसादयति—

---

१. 'इवड्ढिदुक्क' मूलकोशपाठः.

विटः—

(क) हरिहरपिदामहाणं पि गव्विदो जो ण जाणए णमिदुं ।
सो सेहरओ चळणेसु तुज्झ णोमाळिए! पडइ ॥ ३ ॥

विदूषकः—(ख) दासीएपुत्त! मत्तपाळअ! कुदो एत्थ णोमाळिआ ।

चेटी —(निरूप्य[1] सस्मितम्) (ग) कहं अहं ति करिअ मदपरवसेण सेहरएण अय्यो अत्तेओ पसादीअदि । जाव अळिअकोपं करिअ दुवे वि एदे परिहसिस्सं ।

---

(क) हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम् ।
स शेखरकश्चरणयोस्तव नवमालिके! पतति ॥

(ख) दास्याःपुत्र! मत्तपालक! कुतोऽत्र नवमालिका ।

(ग) कथमहमिति कृत्वा मदपरवशेन शेखरकेण आर्य आत्रेयः प्रसाद्यते । यावदलीककोपं कृत्वा द्वावप्येतौ परिहसिष्यामि ॥

---

हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम्[2] ।
स शेखरकश्चरणयोस्तव नवमालिके! पतति ॥
हरिहरपितामहसम्बन्धिनमनं न जानाति । तान् न नमतीत्यर्थः ॥ ३ ॥

दास्याःपुत्र! मत्तपालक! कुतोऽत्र नवमालिका । मत्तपालको मत्तश्रेष्ठः, मदान्ध इत्यर्थः ॥

कथम् अहमिति कृत्वा मदपरवशेन शेखरकेणार्य आत्रेयः प्रसाद्यते । यावदलीककोपं कृत्वा द्वावप्येतौ परिहसिष्यामि ॥

---

१. 'विमृश्य स' क. पाठः. २. "ति । 'हरिहरपिदामहाणं पि गव्विदो जो णजाणए णमिदुं' इति पाठः, जाणइ णमिदुं इति पाठे वृत्तभङ्गप्रसङ्गात् । ह" ङ. पाठः.

**चेटः**—(शेखरकं हस्तेन चालयन्) (क) भट्टक! मुञ्च मुञ्च एदं ण होइ णोमालिआ। एशा खु णोमालिआ ळोशळत्तेहि णअणेहि पेक्खन्ती आअदा।

**चटी**—(उपसृत्य) (ख) सेहरअ! का णु हु एसा पसादी-अदि।

**विदूषकः**—(अवगुण्ठनमपनीय) (ग) अहं मन्दभाआए पुत्तो।

**विटः**—(विदूषकं निरूप्य) (घ) अरे कपिळमक्कडअ! तुवं पि मं सेहरअं परिहससि। अरे चेडअ! गह्ण इमं। जाव णो-मालिअं पसादेमि।

---

(क) भट्टक! मुञ्च मुञ्च। एतन्न भवति नवमालिका। एषा खलु नवमालिका रोषरक्ताभ्यां नयनाभ्यां पश्यन्त्यागता।

(ख) शेखरक! का नु खल्वेषा प्रसाद्यते।

(ग) अहं मन्दभाग्यायाः पुत्रः।

(घ) अरे कपिलमर्कटक! त्वमपि मां शेखरकं परिहससि। अरे चेट! गृहाणेमम्। यावन्नवमालिकां प्रसादयामि।

---

भट्टक! मुञ्च मुञ्च। एतन्न भवति नवमालिका। एतदिति अनिश्चि-तविशेषत्वेन सामान्यनिर्देशः। एषा खलु नवमालिका रोषरक्ताभ्यां नय-नाभ्यां पश्यन्त्यागता॥

शेखरक! का नु खल्वेषा प्रसाद्यते॥

अहं मन्दभाग्यायाः पुत्रः॥

अरे कपिलमर्कटक! त्वमपि मां शेखरकं परिहससि। अरे चेट गृहाणेमम्। यावन्नवमालिकां प्रसादयामि॥

**चेटः** — (क) जं भट्टओ आणवेदि ।

**विटः** — (विदूषकं विमुच्य चेट्याः पादयोः पतन्) (ख) पसीद णोमालिए! पसीद ।

**विदूषकः** — (ग) एसो मे अपक्कमिदुं अवसरो । (पलायितुमीहते ।)

**चेटः** — (विदूषकं यज्ञोपवीते गृह्णाति । यज्ञोपवीतं त्रुट्यति ।) (घ) कहिं कहिं कपिळमक्कडअ! पळाअशि । (तदुत्तरीयेण गले बद्ध्वाकर्षति ।)

**विदूषकः** — (ङ) होदि! णोमालिए! पसीद । मोआवेहि मं ।

**चेटी** — (विहस्य) (च) जदि भूमिए सीसं णिवेसिअ पादेसु मे पडसि

---

(क) यद् भट्टक आज्ञापयति ।

(ख) प्रसीद नवमालिके! प्रसीद ।

(ग) एष मे अपक्रमितुमवसरः ।

(घ) कस्मिन् कस्मिन् कपिलमर्कटक! पलायसे ।

(ङ) भवति! नवमालिके! प्रसीद । मोचय माम् ।

(च) यदि भूम्यां शीर्षं निवेश्य पादयोर्मे पतसि ।

---

यद् भट्टक आज्ञापयति ॥

प्रसीद नवमालिके! प्रसीद ॥

एष मे अपक्रमितुमवसरः । पलायितुमीहते । तेन निरोधः सूचितः ॥

कस्मिन् कस्मिन् कपिलमर्कटक! पलायसे ॥

भवति! नवमालिके! प्रसीद । मोचय माम् ॥

यदि भूम्यां शीर्षं निवेश्य पादयोर्मे पतसि । तर्हि मोचयामीति शेषः ॥

**विदूषकः**— (सरोषम्) (क) कहं राअमित्तं भविअ दासीए धीदे! पादेसु दे पडिस्सं ।

**चेटी**— (अङ्गुल्या तर्जयन्ती सस्मितम्) (ख) दाणिं तुमं पाडइस्सं । सेहरअ! उट्ठेहि उट्ठेहि । पसण्णा खु अहं । (कण्ठे गृह्णाति ।) एसो जामादुअस्स पिअवअस्सो तुए खळीकिदो । एदं सुणिअ कदाइ भट्टारओ मित्तावसू कुप्पे । ता आदरेण सम्माणेहि णं ।

**विटः**— (ग) जं णोमाळिआ आणवेदि । (विदूषकं कण्ठे गृहीत्वा) अय्य! तुमं पिअसम्बन्धिअत्ति करिअ अवहसिदो ।

(क) कथं राजमित्रं भूत्वा दास्याःपुत्रि! पादयोस्ते पतिष्यामि ।

(ख) इदानीं त्वां पातयिष्यामि । शेखरक! उत्तिष्ठोत्तिष्ठ । प्रसन्ना खल्वहम् । एष जामातुः प्रियवयस्यस्त्वया खलीकृतः । एतच्छ्रुत्वा कदाचिद्भट्टारको मित्रावसुः कुप्येत् । तदादरेण सम्मानयैनम् ।

(ग) यन्नवमालिकाज्ञापयति । आर्य! त्वं प्रियसम्बन्धिक इति कृत्वा

कथं राजमित्रं भूत्वा दास्याः पुत्रि! पादयोस्ते पतिष्यामि ॥

इदानीं त्वां पातयिष्यामि । शेखरक! उत्तिष्ठोत्तिष्ठ । प्रसन्ना खल्वहम् । एष जामातुः प्रियवयस्यस्त्वया खलीकृतः । भर्त्सनादिना निराकृत इत्यर्थः । एतच्छ्रुत्वा कदाचिद् भट्टारको मित्रावसुः कुप्येत् । तदादरेण सम्मानयैनम् । बहुमानेन सह पूजयेत्यर्थः ॥

यन्नवमालिकाज्ञापयति । आर्य! त्वं प्रियसम्बन्धिक इति कृत्वा पहसितः । सम्बन्धिकः सम्बन्धिमित्रमित्यर्थः । किं सत्यमेव शेखरको मत्त

१. 'खु दे अ' मूलकोशपाठः.

(घूर्णयन्) किं सच्चं एव्व सेहरओ मत्तो किदो, परिहासो । (उत्तरीयं वर्तुलीकृत्यासनं ददाति ।) इह उवविसदु सम्बन्धिओ ।

**विदूषकः**—(क) दिट्ठिआ अवअदो विअ से मदवेओ । (उपविशति ।)

**विटः**—(ख) णोमालिए! उवविस तुमं एदस्स पस्सदो, जेण दुवे वि तुह्मे समं सम्माणेमि ।

(चेटी विहस्योपविशति ।)

**विटः**—(ग) चेडअ! सुपूरिदं खु एदं चसअं करेहि अच्छसुराए ।

(चेटः चषकमुन्नयन् पूरणं नाट्येन करोति ।)

---

अपहसितः । किं सत्यमेव शेखरको मत्तः कृतः, परिहासः । इहोपविशतु सम्बन्धिकः ॥

(क) दिष्ट्यापगत इवास्य मदवेगः ।

(ख) नवमालिके! उपविश त्वमस्य पार्श्वतः, येन द्वावपि युवां समं सम्मानयामि ।

(ग) चेटक! सुपूरितं खल्वेतच्चषकं कुर्वच्छसुरया ।

---

कृतः, परिहासः, उत मदं विना परिहासः कृत इत्यर्थः । मत्तत्वमपि न जानातीति भ्रमः । इह उपविशतु सम्बन्धिकः ॥

दिष्ट्या अपगत इवास्य मदवेगः ॥

नवमालिके! उपविश त्वमस्य पार्श्वतः, येन द्वावपि युवां समं सम्मानयामि ॥

चेटक! सुपूरितं खल्वेतत् चषकं कुर्वच्छसुरया ॥

**विटः**— (स्वशिरःशेखरात् पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां पतित्वा नवमालिकाया उपनयन्) (क) णोमालिए! पिबिअ चोक्खिअ देहि एदं।

**चेटी**— (सस्मितम्) (ख) जं सेहरओ आणवेदि। (तथा करोति।)

**विटः**— (विदूषकस्य चषकमुपनयन्) (ग) एदं णोमालिआमुहसंसग्गवड्ढिअरसं[2] सेहरआदो अण्णेण केण वि अणास्सादिअपुव्वं। ता पिब एदं। किं दे अदो वरं सम्माणं करेमि।

**विदूषकः**— (सविलक्षस्मितं कृत्वा) (घ) सेहरअ! बंह्णो खु अहं।

---

(क) नवमालिके! पीत्वा चौक्षित्वा देह्येतत्।

(ख) यच्छेखरक आज्ञापयति।

(ग) एतन्नवमालिकामुखसंसर्गवर्धितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम्। तत् पिबैतत्। किं तेऽतः परं सम्मानं करोमि।

(घ) शेखरक! ब्राह्मणः खल्वहम्।

---

नवमालिके! पीत्वा चौक्षित्वा देह्येतत्। चौक्षित्वा (?) पवित्रीकृत्य। प्रियामुखोच्छिष्टं हि पवित्रम्॥

यच्छेखरक आज्ञापयति॥

एतद् नवमालिकामुखसंसर्गवर्धितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम्। तत् पिबैतत्। किं तेऽतः परं सम्मानं करोमि॥

शेखरक! ब्राह्मणः खल्वहम्॥

---

१. 'ए! किञ्चि पि' ग. पाठः. २. 'ग्गसविसेसव' क. ख. घ. पाठः.

**विटः** — (क) जइ तुमं बंह्णो, कहिं दे बंह्सुत्तं ।

**विदूषकः** — (ख) तं खु इमिणा चेडेण आअड्ढिअमाणं छिण्णं ।

**चेटी** — (विहस्य) (ग) जइ एव्वं[1], वेदक्खराणिं पि[2] कदिइ उदाहर ।

**विदूषकः** — (घ) भोदि ! सीहुगन्धेण मे वेदक्खराणि णट्ठाणि । अह्व, किं मम भोदीए समं विवादेण । एसो बंह्णो पादेसु दे पडइ । (पादयोः पतितुमिच्छति ।)

**चेटी** — (विहस्य हस्ताभ्यां निवार्य) (ङ) अय्य ! मा[3] मा एव्वं

(क) यदि त्वं ब्राह्मणः, क ते ब्रह्मसूत्रम् ।

(ख) तत् खल्वमुना चेटेनाकृष्यमाणं छिन्नम् ।

(ग) यद्येव, वेदाक्षराण्यपि कतिचिदुदाहर ।

(घ) भवति ! सीधुगन्धेन मम वेदाक्षराणि नष्टानि । अथवा, किं मम भवत्या समं विवादेन । एष ब्राह्मणः पादयोस्ते पतति ।

(ङ) आर्य ! मा मैवं कुरु । शेखरक ! सत्यं ब्राह्मणः खल्वेषः । आर्य !

यदि त्वं ब्राह्मणः, क ते ब्रह्मसूत्रम् ॥

तत् खल्वमुना चेटेनाकृष्यमाणं छिन्नम् ॥

यद्येवं, वेदाक्षराण्यपि कतिचिदुदाहर ॥

भवति ! सीधुगन्धेन मम वेदाक्षराणि नष्टानि । अथवा, किं मम भवत्या समं विवादेन । एष ब्राह्मणः पादयोस्ते पतति ॥

आर्य ! मा मैवं कुरु । पातयिष्यामीत्युक्तं साधितम् । इदमेवालमित्यर्थः । शेखरक ! सत्यं ब्राह्मणः खल्वेषः । आर्य ! त्वया न कोपित-

१. 'व्वं ता वे', २. 'पि दाव क' क. ख. पाठः. ३. 'मा खु मा खु ए' मूलकोशपाठः.

करेहि । सेहरअ! सच्चं बंहणो खु एसो । (विदूषकस्य पादयोः पतति ।) अय्य! तुए ण कुविदव्वं। सम्बन्धिआणुरूवो परिहासो किदो । सेहरअ! तुमं पि इमं पसादेहि ।

विटः—(क) अहं पि इमं पसादेमि । (विदूषकस्य पादयोर्निपत्य) मरिसेदु मरिसेदु अय्यो, जं मए मदपरवसेण अवरद्धं । जेण अहं णोमालिआए सह आपाणअं गमिस्सं ।

विदूषकः—(ख) मरिसिदं मए । गच्छ । जाव अहं पि[1] वअस्सं पेक्खामि ।

विटः—(ग) अय्य! तह ।

(निष्क्रान्तो नवमालिकया विटश्चेटश्च ।)

---

त्वया न कोपितव्यम् । सम्बन्धिकानुरूपः परिहासः कृतः । शेखरक! त्वमपीमं प्रसादय ।

(क) अहमपीमं प्रसादयामि । मर्षयतु मर्षयत्वार्यः, यन्मया मदपरवशेनापराद्धम् । येनाहं नवमालिकया सहापानकं गमिष्यामि ।

(ख) मर्षितं मया । गच्छ । यावदहमपि वयस्यं पश्यामि ।

(ग) आर्य! तथा ।

---

व्यम् । सम्बन्धिकानुरूपः परिहासः कृतः । शेखरक! त्वमपीम प्रसादय ॥

अहमपीमं प्रसादयामि । मर्षयतु मर्षयत्वार्यः, यन्मया मदपरवशेनापराद्धम् । येनाहं नवमालिकया सहापानकं गमिष्यामि । येन प्रसादेन, भवत्प्रसादेन विना गन्तुं न युक्तमित्यर्थः । आपानकं मद्यपानभूमिम् ॥

मर्षितं मया । गच्छ । यावदहमपि वयस्यं पश्यामि ॥

---

१. 'पि विअव' मूलकोशपाठः.

**विदूषकः** — (क) अदिक्कन्दो खु बंह्मणस्स अआळमिच्चू । ता अहं पि मत्तवाळअजणसंसग्गदूसिदो इह दिग्घिआअं ह्णाइस्सं । (तथा करोति । पुरोऽवलोक्य) एसो खु पिअवअस्सो रूविणीं विअ वरळच्छिं मळअवदिं ओळम्बिअ इदो एव्व आअच्छादि । ता इह एव्व चिट्ठिस्सं । (स्थित[1] ।)

(ततः प्रविशति[2] नायको मलयवत्यां[3] विभवतश्च परिवारः ।)

**नायकः** —

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ४ ॥

---

(क) अतिक्रान्तः खलु ब्राह्मणस्याकालमृत्युः । तदहमपि मत्तवालकजनसंसर्गदूषित इह दीर्घिकायां स्नास्यामि । एष खलु प्रियवयस्यो रूपिणीमिव वरलक्ष्मीं मलयवतीं वलम्ब्येत एवागच्छति । तदिहैव स्थास्यामि ।

---

एवं चेटचेटीविटविदूषकाणां परस्परालापादिना त्रिविधे हास्यनर्मणि कैशिकीवृत्त्यङ्गतया शोभार्थं प्रकाशिते उद्यानगमने सूचिते नायकप्रवेशसंघटनार्थं विदूषकस्य प्रवृत्तिः प्रतिपाद्यते — अतिक्रान्त इत्यादिना ॥

अथाङ्कान्तोपक्षिप्तप्रकारेण समुचितगृहिणीलाभसमेधितस्य नायकस्य संभोगशृङ्गारवर्णनोपक्रमः । तत्र 'ऋतुमाल्ये'त्यादिसूत्रनीत्या उद्यानगमनादीनां शृङ्गारपोषकत्वेन नवोढाविस्रम्भोपायतया सपरिवारया कान्तया सह कुसु-

---

१. 'जाव से परिस्सवती होमि । (ततः' ख. घ. पाठः. २. 'ति वरनैपथ्यो ना', ३. 'तीं' घ. पाठः.

माकरोद्यानं प्रति गन्तुमुद्यतः, 'कुसुमसधर्माणो हि योषित' इत्यादिकामसूत्रानुसारेण नवोढानुवर्तननिसर्गनिपुणस्तस्या वयोवस्थासमुचितेन रतिवैलोम्येन परं प्रीयमाणस्तस्या वामतामनुमोदमान आत्मनः प्रीतिपरिपोषं स्वयमेव समर्थयति — दृष्टेत्यादिना । प्रिया अद्य वामतयैव मे सुतरां प्रीत्यै जाता । प्रिया निसर्गत एव प्रीतिहेतुः, हेतुबलेनातीव प्रीतिकरी जाता । अद्य नूतनपरिणयनमङ्गले काले । किमिच्छानुवर्तनेनेति चेद्, नेत्याह — वामतयैव । वामता अनुवृत्तेरनङ्गीकरणं विरुद्धाचरणं च, तयैव । एवकारेण अवस्थोचिता या वामता सैवातीव प्रीतिहेतुः, अनुलोमतायामस्याः परा काष्ठा किं वर्ण्यतामिति द्योतितम् । अथवा न त्वानुलोम्येन, आनुलोम्ये एवं प्रीतिर्भवेदिति न स्फुरतीति प्रकाशितम् । इदानीमेवातिशायनप्रत्ययविशिष्टतामपेक्षते प्रियाशब्दः, परिचयपरिपाके किं पुनरिति कृतार्थता व्यज्यते । वामताप्रकारं विवृणोति — दृष्टा सकौतुकानुरागं मया वीक्षिता साम्मुख्यं न करोति । तर्हि दृष्टिं वस्त्वन्तरे प्रेरयतीति चेत्, तन्न, अधो ददाति अलक्ष्यमवनमयति । अध इति, न वस्त्वन्तरं प्रेरयति । ददाति चिरकालं विलक्षं तत्रैव भ्रमयति । अतो लज्जैवात्र हेतुरिति कल्प्यते । अत्र प्रत्यालोकनाभावो वामता । तदा पूर्वसिद्धायाः प्रीतेरुपरितनपर्वाक्रमणम् । पुनरतत्परिपोषबुभुत्सया आभाषिता प्रिये ! किं प्रसाधितवती, क्व ते वासाभिरुचिः, इत्यादि मधुरम् आभिमुख्येन भाषिता आलापं प्रतिवचनं न कुरुते । अत्रापि प्रतिवाक्याकरणमेव न त्वनवधानमिति पूर्वोक्त एव हेतुः । तेन प्रीतिस्तदुपरि पदं निहितवती । पुनः सखीनिर्बन्धेन शय्यायामेकत्रोपवेशिता परिवृत्य अन्यतोमुखी भूत्वा तिष्ठति । अत्र विरुद्धाचरणमातिष्ठति, न तु शय्यां मुञ्चति । अत्रापि पूर्वोक्त एव हेतुः । एवं वैलोम्यक्रमेऽपि प्रीतिरुत्तरोत्तरस्कन्धमाक्रामति । ततः बलाद् यदृच्छया आनुलोम्यमनपेक्ष्य, न तु हठात् । आलिङ्गिता मन्दमाश्लिष्टा । वेपते, दूरे प्रत्यालिङ्गनं, कम्पते न निषेधति । अतः स्पर्शस्य दुस्सहत्वं न हेतुः, किन्तु साध्वसमेव । एवं सहजया लज्जया तत्र तत्र निरुद्धेच्छाप्रसरायामस्यां नेयं बलादस्माभिरपनेतव्या रागः स्वयमपनेष्यतीति बुद्ध्या परस्परस्मितावलोकनकृतोद्यमासु सखीषु छलेन निर्यान्तीषु निर्गन्तुमेव ईहते वाञ्छति । सम्भ्रमतदवलोकनो-

(मलयवतीमवलोक्य)[1] प्रिये! मलयवति!।

हुङ्कारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद् दावानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता।

जिगमिषादिकमाचरत्येवेति नात्रानौचित्यबुद्धिः स्फुरतीति लज्जायाः प्राबल्यम्। अत्रापि विरुद्धत्वं वामता। एवं तत्र तत्र दत्तपदा कथमिच्छाविरोधिनी वामता प्रीतिपरिपोषहेतुरित्यत्र प्रबलं कारणमाह — नवोढा इदानीमूढा अपरिचिता। अपूर्णयौवनायाः कुलपालिकायाः सहजलज्जाविनयाचारभूषणाया नवोढाया रक्ताया अप्यपरिचये कान्तं प्रत्येवंवर्तनमेव धर्मानुगुणं रतिकरं रसिकसम्मतं च। अतो नवोढात्वस्य हेतोर्विरुद्धहेत्वन्तरापलापेन प्रीतिप्रकर्षं प्रति जागरणमिति भावः। एवमतिस्फुटस्य मुख्यस्य तस्य हेतोर्गर्भितत्वमेव शोभत इति तथा निर्देशः॥

एवं नायिकाया विनयानुरोधेन प्राप्तपरिपोषां रतिमुद्वहन्नुदात्तनायकः सुकुमारोपक्रमत्वमनुसृत्य तस्याः कृच्छ्रलब्धत्वप्रतिपादनद्वारा गुणोन्मीलनेन मृदुपूर्वमावर्जयितुमुपक्रमते — मलयवतीमवलोक्येति। प्रियतमानुसन्धानसामरस्येन स्वयमेव विमृशन्प्रेमभरः पश्चात् परिजनपरिशोभितां विलासवलितलज्जानुबद्धां मन्दं मन्दमनुसरन्तीं तां सर्वाङ्गीणकान्तिलावण्यामृतपानपारिप्लवया दृष्ट्या सादरानुरागमवलोक्य वदतीति सिद्धम्। प्रिये! इति। प्रेमसर्वस्वपरमालम्बनभूते!। सम्बोधयामि, न त्वाभिमुख्यं प्रार्थये। सत्येव तस्मिन् संव्यवहारः शोभत इति त्वमेव जानासीति बुद्ध्या शृण्वित्यादि न प्रयुक्तम्। तत्र विस्रम्भस्याल्पतयानङ्गीकारमाशङ्क्य जननीसखीप्रभृतिभिरविरताम्रेडितेन स्वाजन्यसौजन्यपरिपोषकेण प्राथमिकेन मङ्गलनाम्ना सादरं सम्बोधयति। मलयवतीति प्रेमविस्रम्भाभिजनसमुचितं सम्बोधयति। मुग्धमुखसुधाकरोन्नमननयनकुवलयोद्बोधनस्मितचन्द्रिकाप्रसरणादिकं त्वत्कारुण्याधीनम्। सर्वथा वस्तुवृत्तं बोधयामीति तत्रैव विश्रान्तिः, न तूत्तरवाक्यानुप्रवेशः। सम्बोधनेनानुमृत्य विश्रम्य चित्तावर्जनक्रमेणोक्तेरभिप्रेतत्वात्। अत एवोत्तरवाक्ये प्रिये! इति पुनर्वचनम्।

हुङ्कारमित्यादि। तस्याः कृच्छ्रलब्धत्वेन भोगोत्सुकत्वात् सुकृतशत-

१. 'तां पश्यन्) प्रि' मूलकोशपाठः.

ध्यातं यच्च बहून्यनन्यमनसा नक्तंदिनानि प्रिये !
तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ५ ॥

लभ्यत्वादिगुणोद्धोपणपूर्वकमावर्जयितुं विरहज्वरस्य तपोरूपत्वमारोप्य वदति । हुंकारं हुमित्यङ्गीकारद्योतकमव्यक्तवर्णं नादमात्रम् । यथा नैषधे कलादमयन्तीसंवादे —

"मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती ।
वादं वादं मुहुश्चक्रे हुं हुमित्यन्तरान्तरा ॥" (स० २०. श्लो० ६५)

इति । हुमित्येतच्छृण्वतामङ्गीकारानुकरणमिति च विश्वः । तदनुकरणत्वेन हुङ्कारशब्दः । तं ददता वचनशेषत्वेन प्रयुञ्जता । प्रतिवचः वचसि वचसि । न कदाचिदपि प्रतिवाक्यदानं, त्वदेकपरतया नर्मसचिवादिसलापे निरपेक्षेणापि दाक्षिण्येनाङ्गीकारमात्रं कुर्वता मौनं वाङ्नियमनमासेवितं परिपूर्णतया परिगृहीतम् । यदिति वाक्यार्थपरामर्शे । मौनस्योपपादनार्थं हुङ्कारमित्यादिविशेषणम् । तपस्यपि वाक्कायमनोभिरनुबद्धे वाचंयमत्वं जपादपि मुख्यमिति मौनस्य वाङ्निष्ठतपोरूपत्वम् । पुनर्दावानलदीप्तिभिः दावाग्नितुल्यप्रसरैः । दावसम्बन्धेनानलस्य निर्यन्त्रणत्वं बहुदेशव्याप्तत्वं च, तत्साम्येन चन्द्रातपानां दुःसहत्वं च प्रतिपादितम् । अनलातपशब्दाभ्यां पञ्चतपसामातपानलमध्यस्थितिश्चन्द्रातपैरेव साधितेति प्रकाश्यते । तनुरियमिति । इदानीमपि तापो नोच्छिन्नस्त्वत्कृपामृतासेचनं विना, पश्य इत्यालिङ्गनाभिरुचिर्व्यज्यते । कृशता च परिस्फुटेति शब्दशक्त्या प्रकाश्यते । तापिता उष्णीकृता । णिचा वैषम्यसहने प्रयासः तपोध्यवसायश्च प्रकाशितः । एवं कायिकमुक्त्वा मानसिकमाह — ध्यातं, ध्यानं कृतम् । भावे निष्ठा । बहूनीति, न तु द्वित्राणि नक्तंदिनानि । ध्यानस्योभयविधेन कालेनाविकलः सम्बन्ध इत्यत्यन्तसंयोगे द्वितीया । तत्रापि विच्छिद्य गृहीतमुक्तत्वेन ध्यानस्य न खलीकार इत्याह — अनन्यमनसा विजातीयप्रत्ययागृहीतचित्तेन त्वदेकपरेणेत्यर्थः । यां देवतां साक्षात्कर्तुं तपः, तस्या एव ध्यानविषयत्वं सिद्धमिति ध्यानविषयानुपादानम् । ध्यानकथनेन प्रत्याहारादीनामङ्गीकारोऽनुक्तसिद्धः । अत एवानन्यमनसेत्युक्तम् । तेन ध्यानस्य

१. 'त् सुब' मूलकोशपाठः.

**नायिका** — (अपवार्य) (क) हञ्जे! ण केवळं दंसणीओ, पिअं पि भणिदुं जाणादि।

(क) हञ्जे! न केवलं दर्शनीयः, प्रियमपि भणितुं जानाति।

समाधिसविधविश्रान्तत्वमनन्यशब्देनोन्मीलितम्। प्रिये! इति अभीष्टतमवस्तुसिद्धावेव प्रयत्नः शोभतेतरामिति प्रकाश्यते। तस्येति मौनतनुतापनध्यानरूपस्य यच्छब्दनिर्दिष्टस्य वाक्यार्थस्य परामर्शः। तपसः परामर्शे यत्तदोरेकविषयता न घटते। यच्छब्देन वाक्यार्थस्य परामर्शात्। तपस इति। यच्छब्देन निर्दिष्टस्य वाक्यार्थरूपस्य तपस्त्वं सिद्धवत् कथ्यते तपः खल्वेवंविधमिति। एवं विप्रलम्भसम्भूतस्य परिश्रमस्य तपोरूपत्वं समर्थ्य सम्भोगोपक्रमस्य तत्फलत्वं प्रतिपादयति — एतद् वक्ष्यमाणं तस्य तपसः फलम्। एतादति तपसोऽत्युत्कटतया इदानीमेव लब्धं फलमन्यदुर्लभमिति द्योत्यते। मुखमिदम् अवयवेषु मुख्यतमम्। अन्याङ्गानामुपलक्षणमेतत्। अथवा, एतावतस्तपसः फलमेतत्। अतः परमिन्द्रियान्तरजन्मसाफल्यस्य इदानींतनप्रवृत्त्यनुमितप्राचीनपुण्यसञ्चयसाध्यत्वं कल्प्यत इति फलस्य प्रकर्षः प्रतिपादितः। इदं परिपूर्णशोभं समुचितावि-वाहनैपथ्यमण्डितं लज्जयासकलव्यक्तयप्यधरकिसलयनयनकुवलयकपोलमणिदर्पणादिषु क्रमप्रसरणेन तृषितयोर्नयनयोः कान्तिपीयूषपूरं पायं पायं मन्दमन्दं सञ्चरितुं निकटलब्धम्। अत एव पश्यामीति दर्शनयाविश्रान्ततया औत्सुक्यापरिसमाप्तिः प्रकाशिता। अधुना आवयोर्दैवानुगुण्येन समीहितसिद्ध्यनन्तरम्। एवमभिलाषपरिश्रमस्य तपोरूपत्वं समर्थ्य तत्फलत्वेन वदनावलोकनप्रतिपादनेन परदेवतादिसाक्षात्कारवत् तपःप्रकर्षसाध्यत्वेन तस्या अन्यनारीविसदृशलोकोत्तरत्वरूपगुणवर्णनेनावर्जनम् अतिक्लेशलब्धस्य भोगारम्भानुकूल्यप्रार्थनं च मधुरया वक्रोक्त्या प्रकाशितम्॥५॥

एवं प्रियंवदस्य प्रयोज्यस्यानुकूल्यवर्तनफलं तन्मनःसाम्मुख्यरूपं तदुक्त्यैव प्रकाशयति — अपवार्येति। अन्यसंवरणाय परावृत्य पार्श्वगतां चेटीं नाट्यधर्मिन्यायेनाह — हञ्जे! न केवलं दर्शनीयः, प्रियमपि भणितुं

१. 'नुव' क. ख. ग. घ. ङ. पाठः.

**चेटी** — (विहस्य) (क) अइ पडिपक्खवादिणि ! सच्चं एव एदं । किं एत्थ पिअवअणं ।

**नायकः** — चतुरिके ! आदेशय कुसुमाकरोद्यानस्य मार्गम् ।

**चेटी** — (ख) एदु एदु भट्टिदारओ ।

---

(क) अयि प्रतिपक्षवादिनि ! सत्यमेवैतत् । किमत्र प्रियवचनम् ।

(ख) एत्वेतु भर्तृदारकः ।

---

जानाति । पूर्वं दर्शनीयताप्रकर्षं दृष्ट्वा एवं गुणान्तरं न भवेदिति निरूपितम् । इदानीं वाङ्मनसयोश्चातुर्यं ततोऽप्यधिकमिति बहुमानानुबद्धो रागोत्कर्षः प्रकाश्यते । अपिशब्दो गुणान्तरं समुच्चिनोति । भणितुं जानातीति न केवलं यदृच्छालापः, इदमेवं वक्तव्यमिति विमर्शक्रमोऽत्र ज्ञायते वचनचातुर्येण इति द्वयोर्गौरवसमर्थनम् । 'शकधृप—' (३. ४. ६५)इत्यादिना तुमुन् । प्रियमित्यनेन प्रियोक्तिरियं न वस्तुकथनमित्यात्मगुणश्रवणे विनयश्च प्रकाशितः ॥

अयि प्रतिपक्षवादिनि ! किमत्र प्रियवचनम् । प्रतिपक्षवादिनीति । उक्तस्य प्रतिकूलार्थकथनं तव स्वभावः । तदस्मास्वेव शोभते । प्रियतमस्य वस्तुकथनेऽनुमोदनमेव शोभते । अत्रारोप्य कथनं किञ्चिदपि नास्ति इति नायकेच्छानुसारेण चतुरिका विश्वसनं प्रति सहकरोति ॥

चतुरिके ! आदेशयेति । मार्गादेशव्याजेन तस्यास्तदन्तिकात् पृथक्करणं, ततो निकटीभूयगमनानुवृत्तिपूर्वकं वशीकारपरमसाधनस्य गुणवर्णनस्योपक्रमश्चाभिप्राय(विष)यः ॥

एतु एतु भर्तृदारक इति । आदरेण वीप्सा । अनेन पथेति शेषः । सर्वथैषा त्वामनुसरति इति प्रकाशयितुं भर्तृदारक इत्युक्तिः ॥

एवं तयोपदिश्यमानमार्गो गच्छन्ननुसरन्तीं प्रियतमां विस्मयानुरागकरुणानन्दसुन्दरं सस्मितमीक्षमाणस्तद्गमनमान्द्यमनुसृत्य रूपचातुर्यं भङ्ग्या वर्णयति ।

नायकः — (परिक्रमन् नायिकां निर्दिश्य) स्वैरं स्वैरम् आगच्छतु भवती ।

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपर-
स्ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्यानया किं पुनः ।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरे
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥६॥

---

"शृङ्गारं सूचयेत् तत्र सौभाग्यगुणसंस्तवैः"

इत्यस्मिन् प्रकरणे सर्वत्रानुगतम् । निर्दिश्येति । नायिकामभिमुखीकृत्य निकटत्वेनानन्यश्रव्यता यथा तथेत्यर्थः । वदतीत्यनुक्तसिद्धम् । स्वैरं स्वैरमिति मन्दमन्दम् । 'मन्दस्वच्छन्दयोः स्वैरम्' । आगच्छतु अस्मदभिमुखमिति शेषः । भवतीति गुणोद्घोषणद्वारतया बहुमानपूर्वं निर्देशः । त्वद्गमनमेव प्रधानम्, अस्माभिरनुवृत्तिः क्रियते । आचारार्थमग्रतः सरणम् । तत् स्वच्छन्दमागच्छतु । न खल्वस्मदनुसरणाय त्वरा कार्या, प्रत्युत वयं त्वद्गतिमनुसराम इत्यनुवृत्तिः प्रकाश्यते ।

स्तनजघनादिगौरवेण गमनवैषम्यमालक्ष्य मन्दगमनं प्रतिपादयन् तदेव हृदि निधायाङ्गानां चातुर्येण भूषाणां वैयर्थ्यं स्तुतिपूर्वं समर्थयते— खेदायेति । स्वाङ्गैरेव स्वावयवैः सहजैरेव व्यतिरिक्तं वस्त्वन्तरं सहकारित्वेऽप्यनपेक्षमाणैः । विभूषिता विशेषेण भूषणेभ्योऽधिकमलंकृता । असि वर्तसे । भूषितेति तेषामुत्पत्तावेव समग्रशोभाजनकत्वं सिद्धम् । तस्योपचितिक्रमेणाविश्रान्तिः । तत एव 'क्षणे क्षणे यन्नवतामुपैति' इत्युक्तवदवृष्टपारा शोभानुवृत्तिरसीत्यनेन प्रकाश्यते । अस्मासु सहजेषु सत्सु किमेभिः कनकाश्मशकलादिभिरागन्तुकैः क्रियते । एतत्कार्यं वयमेव सम्पादयाम इत्यवयवानामैकमत्याभिमानश्चोत्प्रेक्ष्यते । मण्डनवहनाक्षेपं प्रति वाक्यार्थस्य हेतुत्वम् । तत् किं मण्डनं वहसीति । वहसि भारवद् धारयसि । किं किमर्थम् । नैतदन्यनारीवत् समीहितसाधकम् । मण्डनं हाराद्यलङ्कारसाधनम् । तर्हि भारादृतेऽन्यत् फलं न, इत्येव न, अनर्थान्तरमस्ति चेत्याह — क्लेशाय

**चेटी —** (क) एदं कुसुमाअरुय्याणं, पविसदु भट्टिदाऌओ।

(सर्वे प्रविशन्ति ।)

---

(क) एतत् कुसुमाकरोद्यानं, प्रविशतु भर्तृदारकः ।

---

श्रमार्थम् । अङ्गानामिति शेषः । परस्परं स्वात्मनश्च सहजानामुपकर्तॄणां क्लेशापादने किमिदं साहसमिति प्रणयरूषिताधिक्षेपाभासश्च स्फुरति । तत्र स्वाङ्गानां भूषाकरत्वे मण्डनानां क्लेशावहत्वे च प्रतिपाद्ये पूर्वं चमत्कारकारितयाभिव्यज्य द्वितीयं वाक्यार्थेन प्रतिपादयति — स्तनभार एव मध्यस्य खेदाय श्रमाय । भवतीति वाक्यशेषः । प्रसरन्मत्सरयोर्यौवनदत्तहस्तयोः प्रतिक्षणं विजृम्भमाणयोरनयोः स्तनयोः भारो भरणमेव । अन्यदागन्तुकं विना मध्यस्यास्य स्वत एव कृशतमस्य । अपरः षाण्मासिकवृत्तमुक्ताप्रकरपरिकल्पितः पृथक् स्थितः भारोपरि भारायमाणो हारः किं पुनः । सहजानां परस्परकृतः परिश्रमः सह्य एव न तथान्यसम्पादित इति किमु इत्यनेन प्रकाश्यते । अत्र उन्नतयोः स्तनयोः कृशस्य मध्यस्य च शोभाकरत्वं व्यङ्ग्यम् । ते इति सर्वशेषः । नान्यस्या एवमिति व्यतिरेको व्यज्यते । नितम्बभरतः भरणेन ऊरुयुगं ताम्यति ग्लानिं गच्छति । अत्राप्येवेत्यर्थसिद्धम् । युगमिति । द्वयोः संभूयप्रवृत्तावपि ताम्यतीत्यनेन नितम्बस्य गौरवातिशयः प्रकाशितः । अनया गुरुतमरत्नमालाघटितया पुनरुक्तविन्यासशोभया किं पुनः । अत्रापि पूर्ववद् द्वयोर्वाच्यव्यङ्ग्ययोः प्रतिपादनम् । पादयुगस्य पद्यतेऽनेनेति कृत्वा प्रपदतलादिरूपस्य ऊरुयुगलं करिकरकदलीस्तम्भापहसनसमुचितगुणं प्रवर्धमानं वोढुं धारयितुं न शक्तिः । सर्वत्र शब्दभेदेन क्लेशः प्रतिपाद्यते । कुतो नूपुरे वोढुं शक्तिरिति सम्बन्धः । कनकदृढघटितप्रत्युप्तरत्नमञ्जीरभरणमतीव क्लेशावहम् । उपलक्षणमिदम् । अन्येष्वप्यवयवेषु कर्णादिषु कुण्डलादीनां क्लेशावहत्वं, कपोलमणिदर्पणादीनां स्वत एव भूषितत्वात् । एवमकृत्रिमशोभासाम्राज्यमुद्वहन्तीं भवतीं लब्धवतामस्माकं सिद्धं समीहितमिति कृतार्थता व्यज्यते । एवं व्यर्थान्यपि भूषणान्यसमीक्ष्यकारितया निवेशितवती । ततोऽपि मन्दगमनमेव शक्यमिति च प्रकृतशेषत्वेन प्रकाश्यते ॥६॥

**एतत् कुसुमाकरोद्यानं, प्रविशतु भर्तृदारकः ॥**

**नायकः**—(प्रविश्य) अहो! कुसुमाकरोद्यानस्य श्रीः।

इह हि,

निःष्यन्दश्चन्दनानां शिशिरयति लतामण्डपे कुट्टिमान्ता-
नाराद् धारागृहाणां ध्वनिमनु कुरुते ताण्डवं नीलकण्ठः।
यन्त्रोन्मुक्तश्च वेगाच्चलति विटपिनां पूरयन्नालवाला-
नापातोत्पीडहेलाहृतकुसुमरजःपिञ्जरोऽयं जलौघः॥ ७॥

---

कुसुमाकरोद्यानस्य श्रीः शोभा अहो आश्चर्यभूता। तदुपपादयति—इह हीति। इह उद्याने एतान्येवं वर्तन्ते यस्मादित्यर्थः।

निःष्यन्दश्चन्दनानां रसप्रसरः निकटस्थितानां शाखासंघट्टनादिना भिन्नानां घृष्टानां वा शिशिरयति शीतलीकरोति लतामण्डपे अर्थात् तल्लतामण्डपे कुट्टिमान्तान् रत्नादिबद्धभूभागान्। अनेन तेषां स्वैरासिकायोग्यत्वं प्रकाशितम्। आरात् समीपे। धारागृहाणां विन्यासविशेषेणान्तःसञ्चरजलधारासूक्ष्मबिन्दुपातानुगुणसुषिरसम्पूर्णानामातपादिषु शीतोपचारार्थं कल्पितानां गृहाणां 'धारागृहेष्वातपमृद्धिमन्तः' (रघु० स० १६. श्लो० ४९) इतिवद्। ध्वनिमनु ध्वनिं लक्षणीकृत्य, तन्निमित्तमित्यर्थः। 'अनुर्लक्षणे' (१. ४. ८४) इति कर्मप्रवचनीयसंज्ञायां तद्योगे द्वितीया। ताण्डवं नटनं कुरुते। नीलकण्ठः क्रीडामयूरः। अत्र मयूराणां मेघध्वनिप्रियतया निकटे धारागृहध्वनिश्रवणे सदा मेघध्वनिशङ्कया ताण्डवकरणमिति कल्प्यते। नीलः कण्ठ इति नामोचितं कर्म चास्येदमिति स्फुरति। यन्त्रोन्मुक्तः बहिर्जलाशयेभ्यो जलानयनार्थमावरणानुगुणेभ्यो यन्त्रेभ्य उन्मुक्तः विवृत्य प्रसारितसेकार्थं सारणिमुखेन बालवृक्षान् प्रति प्रवृत्तः। विटपिनां परिपूर्णविटपानां पुष्पितानां बालवृक्षाणामालवालान् पूरयन् वेगाच्चलति, अपूरितानां पूरणाय। जलौघस्य कर्तृत्वेन सेके स्वयं प्रवृत्त इवेति द्योत्यते। 'इदमेभिः' (अनर्घ० अङ्क० २. श्लो० २४) इत्युक्तवत्। आपाते वृक्षेष्वाभिमुख्येन प्रपाते

---

१. 'मर्दना' ग. पाठः.

अपिच,

अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।

बालतया यः उत्पीडः चलनं तेन हेलया अप्रचण्डं कुसुमचलनमात्रेण हृतेन स्वीकृतेन रजसा पिञ्जरः कपिशः । अत्र जलं दत्त्वा कुसुमरजोहरणमिति परिवृत्तिर्हृतशब्देन प्रकाश्यते । अयमिति सर्वशेषः । तत्र तत्र साक्षात्कारेण वर्णनम् ॥ ७ ॥

अपिचेति । नैतावदेव शोभाकरं, पुनरपि विशेषा दृश्यन्ते इत्युपरिवर्णनपदविन्यासः ।

अमी (गीतारम्भैः?) सम्भूय नयनगोचरे सञ्चरन्तः मधुपाः भृङ्गाः । विटत्वारोपाय मधुपशब्दः, पिबन्त इत्यनेन पानस्य गतार्थत्वात् । मधुपाः भृङ्गरूपा विटाः । समन्ताद् नैकत्र । तत्र तत्र तथा दृश्यमानत्वात् । आपानोत्सवम् आपानं मद्यपानम् । 'आपानं स्यात् सुरापानमि'ति नियतत्वात् । तद्रूपमुत्सवं हर्षोल्लासकरं महाविशेषम् ।

"उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः"

इति तन्निर्वचनम् । उत्सवशब्देन पानाङ्गानां परिग्रहः, न केवलं पानस्य । अनुभवन्तीति अनुभवसारोऽयमिति स्फुरति । इहेत्युद्यानवर्णनशेषत्वं घटितम् । उत्सवाङ्गानि प्रतिपाद्य(न्तीति)—गीतारम्भैः प्रारब्धैर्गीतैः । आरम्भशब्देन गानोपक्रमात् स्वरस्य ग्लानिरहितं मांसलत्वं प्रकाशितम् । अत एव मुखरितत्वं घटते । मुखरिताः गानानुबन्धेन मुखरीकृताः लतामण्डपभुवो यैः । मण्डपभूशब्देन तत्र पुष्पेषु स्वैरासिका इत्यापानस्थलपरिग्रहः । स्वयं गायन्तः सौहार्देन मण्डपभुवमपि गापयन्तीवेति मुखरितभूशब्दाभ्याम् उत्प्रेक्षा व्यज्यते । परागैर्निरन्तरवासलब्धैः चरणपक्षादिषु तत्र तत्र लिप्तैः कुसुमरजोभिः, 'परागः सुमनोरजः' इत्युक्तत्वात् । पुष्पसम्बन्धे सिद्धेऽपि तदानीं मधुरसेन सह विकासोन्मुखपुष्पप्रकरलब्धत्वेन बाहुल्यं पुष्पशब्देन प्रकाश्यते । अत एव प्रकटत्वम् । पटवासः उत्सवेषु हरिद्रातण्डुलादिचूर्णकृतः वसनकेशपाशादिपूद्धूलनाविधिः, तस्य व्य-

पिबन्तः पर्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीह मधुपाः ॥ ८ ॥

**विदूषकः—** (उपसृत्य) (क) जेदु भवं । सोत्थि भोदीए ।

**नायकः—** वयस्य! चिरादागतोऽसि ।

**विदूषकः—** (ख) भो वअस्स! ळहुं एव आअदो । किन्दु इअन्तं काळं विवाहमङ्गळूसवमिळिदसिद्धविज्जाहरापाणदंसणकोदूहळेण परिब्भमन्तो ण ळक्खिदो । ता पिअ-

---

(क) जयतु भवान् । स्वस्ति भवत्यै ।

(ख) भो वयस्य! लघ्वेवागतः । किन्तु इयन्तं कालं विवाहमङ्गलोत्सवमिलितसिद्धविद्याधरापानदर्शनकौतूहलेन परिभ्रमन् न लक्षितः । तत् प्रियवयस्योऽपि तावदेतत् पश्यतु ।

---

तिकरः सम्मेलनं, सः पुष्पपरागैः प्रकटो येषाम् । पिबन्त इत्युत्सवप्रधानक्रिया । वर्तमानेन मधुरसस्य पुष्टिस्तेषां तर्षः पानाविच्छेदश्च प्रकाश्यते । अत एव पर्याप्तं परिपूर्णं, यथेच्छमित्यर्थः । सहचरीभिः स्वप्नेऽपि वियोगस्वभावमजानानाभिः सह । तदुच्छिष्टतया सुभगमित्यर्थः । एवं तिर्यक्ष्वपि आपानोत्सवारोपेण सिद्धविद्याधराणां तदर्थं मिलितानां प्रवृत्तिः किं कथ्यतामिति प्रकाश्यते । अत एवोपरि तद्वर्णनम् ॥ ८ ॥

जयतु भवान् । स्वस्ति भवत्यै ॥

वयस्य ! चिरादागतोऽसि इति । न युक्तं तवास्मिन् काले एवं विलम्बनमिति नर्माधिक्षेपः ॥

भो वयस्य! लघ्वेव द्रुतमेवागतः । तर्हि कथं न दृष्टः इत्यत्राह— इयन्तं कालं विवाहमङ्गलोत्सवमिलितसिद्धविद्याधरापानदर्शनकौतूहलेन

---

१. 'वस्य प्र' च. पाठः.

वअस्सो वि दाव एदं पेक्खदु।

**नायकः**—यथाह भवान्। (सहर्षं परितः पश्यन्)

दिग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः।
सार्धं सिद्धगणैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनलताच्छायासु विद्याधराः॥९॥

तदेहि वयमपि तमालवीथिकां गच्छामः।

(सर्वे परिक्रामन्ति।)

---

परिभ्रमन् न लक्षितः, न समीपं प्राप्त इत्यर्थः। तत् प्रियवयस्योऽपि तावदेतत् पश्यतु। न मया असंविभागेन कदर्यत्वमङ्गीक्रियते इत्यपिशब्दार्थः॥

पूर्ववत् तदानीमपि तदुक्त्यनुसारेण प्रवृत्तिं प्रकाशयति। यथाह भवान्। तथा करोमीति शेषः।

सहर्षं परितः पश्यन्निति दर्शनक्रमेण वर्णनोपक्रमः—दिग्धाङ्गाः अनुलिप्तसर्वावयवाः। हरिचन्दनेन

"छेदे रक्तं कषे पीतं हरिचन्दनमुच्यते"

इत्येवंलक्षितेन कनकद्रवायमाणेन। दधतः केशादिषु धारयन्तः। सन्तानकानां कल्पतरुकुसुमानां मालाः। माणिक्यप्रधानानामाभरणानां काञ्चीप्रभृतीनां प्रभाव्यतिकरैश्चित्रीकृतानि शबलीकृतानि अच्छांशुकानि निर्मलवासांसि येषाम्। सितेषु अरुणकान्तिसम्बन्धे परभागप्रकर्षाद् धावल्यविशिष्टत्वम्। एवमङ्गभूतं वेषमुक्त्वा अङ्गिरूपं प्रतिपादयति—सार्धमित्यादि। विद्याधराणां विवाहोत्सवे प्राधान्यं सिद्धानां तदनुसरणमिति विशेषः सार्धं सिद्धगणैरित्यनेन प्रकाशितः। मधूनि गौलीप्रभृतीनि तत्तत्प्रकृतियोग्यानि। प्रथमं दयितापीतादवशिष्टानि तन्मुखसंसर्गपवित्रितानि। मिश्रीभूय चन्दनतरुच्छायासु परस्परसंसर्गं प्राप्य। सिद्धजनैरपि सार्धम् अमी तत्र तत्र परिस्फुटं दृश्यमानाः पिबन्ति॥ ९॥

**विदूषकः**—(क) एसा खु तमाळवीहिआ । एदं चन्दणळदामण्डवं । एदं च सरदादवपरिखेदिअं विअ तत्तहोदीए वदणं ळक्खीअदि । ता इह फळिअसिळादळे उवविसदु ।

**नायकः**—वयस्य ! सम्यगुपलक्षितम् ।

एतन्मुखं प्रियायाः शशिनं जित्वा कपोलयोः कान्त्या ।
तापाभिताम्रमधुना कमलं ध्रुवमीहते जेतुम् ॥ १० ॥

---

(क) एषा खलु तमालवीथिका । एतच्चन्दनलतामण्डपम् । एतच्च शरदातपपरिखेदितमिव तत्रभवत्या वदनं लक्ष्यते । तदिह स्फटिकशिलातले उपविशतु ॥

---

एवं तदुक्त्यनुसारेणापानोत्सवं वर्णयित्वा विश्रमार्थमासूत्रयति—तदेहीत्यादि । वयमपीति । अस्माकमप्युत्सवानुसरणं युक्तमिति स्वाभिप्रायं सूचयति । तमालवीथिकामिति वृक्षवाटिकाभेदम् ॥

एषा खलु तमालवीथिका । एतच्चन्दनलतामण्डपम् । एतच्च शरदातपपरिखेदितमिव तत्रभवत्या वदनं लक्ष्यते । तदिह स्फटिकशिलातले उपविशतु ॥

एवं तदुक्तिमनुमोदमान आह—वयस्य ! सम्यगुपलक्षितं चिह्नेन बोधितम् ।

इति तदुक्त्यनुवादेन प्रियामुखं वर्णयति—एतदित्यादि । एतत् परिस्फुटपरिश्रमम् । कपोलयोः कान्त्या शशिनं जित्वा इति वदनावयवमात्रेण जेतव्योऽसौ, न तु वदनसमष्ट्या इति कपोलशब्देन द्योत्यते । शशिनमिति । पूर्वमेव कलङ्कित्वेन सजयत्वम् । अधुना कमलस्योदयकाले । तापेन आतपौष्ण्येन अभिताम्रं कमलम् अभिताम्रस्वभावं जेतुमीहते ध्रुवं मन्ये । वदनप्रतिस्पर्धिनोर्द्वयोर्जितयोः निस्सपत्नमनेन सौन्दर्यसाम्राज्यमनुभूयते ॥ १०

(मलयवतीं हस्ते गृहीत्वा) प्रिये! इहोपविशामः।

(सर्वे उपविशन्ति ।)

**नायकः —** (नायिकामुखमुन्नमय्य पश्यन्) प्रिये! वृथैव त्वमस्माभिः कुसुमाकरोद्यानदर्शनकुतूहलिभिः परिखेदिता[1] । कुतः,

एतत् ते भ्रूलतोल्लासि पाटलाधरपल्लवम् ।
मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम् ॥ ११ ॥

---

मलयवतीं हस्ते गृहीत्वेति विस्रम्भक्रमः । उपविशाम इति एकासनोपवेशेन साध्वसापनयनम् ॥

पश्यन्निति स्पर्शगुणवर्णनमार्गोपक्रमः । उन्नमनं दर्शनस्य निरर्गलत्वसिद्धये । दर्शनेन सौख्यानुभूतिपरवशः सम्बोधनपूर्वं प्रशंसति—प्रिये! इत्यादि । वृथैव, निरूपणे किंचिदपि प्रयोजनं न पश्यामः । अस्माभिः असमीक्ष्यकारिभिः कुसुमाकरोद्यानदर्शनकुतूहलिभिः परिखेदिता । प्रथमं प्रस्थाने कुतूहलित्वं, पश्चाद् देशान्तरपरिचङ्क्रमणेन तव खेदजननम् । द्वयमपि प्रमादः, साध्यस्यान्तःपुर एव निर्वोढुं शक्यत्वात् । इदानीं सावधानं वदनकमलावलोकने तन्निर्णीतम् । किमुद्यानस्यापतितमितिचेद्, नेदमुद्यानं, गतानुगतिकत्वंभ्रम एव ।

एतत् ते मुखमुद्यानम् । यत् तद् भ्रूलतोल्लासि भ्रूलताभ्यामुल्लसनशीलं, न कदाचिद् विपर्ययः । अन्यत्र लतानां नानावस्थत्वात् तथा नोल्लसनम् । पाटलं सततारुणम् अधरपल्लवं यस्य । अन्यत्र पल्लवानामेव पर्णत्वं शुष्कत्वमपि भवति । नन्वयं समानधर्म एव । नियत्यादिकं तत्र न प्रयोजकम् । अत इदमप्युद्यानमित्येव वक्तुं युक्तम् । नान्यस्यापलाप इति चेत् । तन्न । नन्दनं परमानन्दप्रयोजकम् । उद्यानेषु च यस्य नन्दनत्वं विबुधोद्यानसंज्ञादिरूपेण, तस्यैव मुख्यत्वम् । अतो धर्मान्तरसाम्ये सत्यधिकस्य मुख्यो-

---

१. 'तास । कु' इति मूलकोशपाठः. २. 'त्व भ्र' क. पाठः.

**चेटी** — (सस्मितं विदूषकं निर्दिश्य) (क) सुदं तुए कहं वण्णिदेत्ति।

**विदूषकः** —(सस्मितम्) (ख) चउरिए! मा एव्वं गव्वं उव्वह। अह्माणं पि मज्झे दंसणीओ जणो अत्थि एव्व। केवळं मच्छरेण कोवि ण वण्णेदि।

**चेटी** — (सस्मितम्) (ग) अय्य! अहं दे वण्णेमि।

**विदूषकः** — (सहर्षम्) (घ) जीविदह्मि। करेदु होदी

(क) श्रुतं त्वया कथं वर्णितेति।

(ख) चतुरिके! मैवं गर्वमुद्वह। अस्माकमपि मध्ये दर्शनीयो जनोऽस्त्येव। केवलं मत्सरेण कोऽपि न वर्णयति।

(ग) आर्य! अहं ते वर्णयामि।

(घ) जीवितोऽस्मि। करोतु भवती प्रसादं, येनैष पुनर्न भणति ईद-

द्यानधर्मस्य जागरणादिदमेवोद्यानम्। तद्भिन्यस्य वराकस्य का संज्ञेति चेद्, अतोऽस्मादन्यत् केवलं वनं गिरिकान्तारादिवत्। तस्मादेतदवलोकन एव कुतूहलस्य युक्ततेति वृथात्वम्॥ ११॥

एवं गुणवर्णनेन कुमारावर्जनं कृतम्। अथास्य हास्यनर्मणा अयत्नसिद्धमावर्जनं चेटी विदूषकप्रवृत्तिमुखेन प्रतिपादयति। तत्र चेटीविदूषकमुद्दिश्य हासगर्भमाह—श्रुतं त्वया कथं वर्णितेति। अत्र वर्णनं वाचिकं सौन्दर्यप्रशंसनम्॥

चतुरिके! मा एवं गर्वमुद्वह। अस्माकमपि मध्ये दर्शनीयो जनोऽस्त्येव। केवलं मत्सरेण कोऽपि न वर्णयति। अस्माकमपि, न केवलं स्त्रीणां यूनामपि मध्ये इत्यर्थः॥

अहं ते वर्णयामि। दर्शनीयत्वमिति शेषः। अत्र वर्णनं नैपथ्यविरचनम्॥

जीवितोऽस्मि। करोतु भवती प्रसादम्। वर्णनं प्रतीति शेषः।

१. 'ए भट्टदारिआ क' इति मूलकोशपाठः.

पसादं, जेण एसो वुण ण भणादि ईदिसो तादिसो मक्कडाआरत्ति ।

चेटी —(क) अज्ज तुवं मए विवाहजागरेण णिज्जाअमाणो णिमीलिअच्छो सोहन्तो दिट्ठो । ता एव्वं एव्व चिट्ठ ।

(विदूषकस्तथा करोति ।)

चेटी —(आत्मगतम्) (ख) जाव णीळीरसाणुआरिणा तमाळपळ्ळवरसेण मुहं से काळीकरिस्सं ।

(उत्थाय पल्लवग्रहणं कृत्वा निष्पीडनं च नाटयति ।)

(नायको नायिका च विदूषकस्य मुखं पश्यतः ।)

नायकः—वयस्य ! धन्यः खल्वासि, यदस्मासु तिष्ठत्सु त्वमेवं वर्ण्यसे ।

---

शस्तादृशो मर्कटाकार इति ।

(क) अद्य त्वं मया विवाहजागरेण निद्रायमाणो निमीलिताक्षः शोभमानो दृष्टः । तदेवमेव तिष्ठ ।

(ख) यावन्नीलीरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि ।

---

येनैष पुनर्न भणति ईदृशस्तादृशो मर्कटाकार इति । ईदृशस्तादृश इति निरसनसंक्षेपः । यथासौ मां पुनर्न परिहसेत् तथा वर्णयेत्यर्थः ॥

अद्य त्वं मया विवाहजागरेण निद्रायमाणो निमीलिताक्षः शोभमानो दृष्टः । तद् एवमेव तिष्ठ ॥

यावन्नीलीरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि ॥

नायको नायिका च विदूषकस्य मुखं पश्यत इत्यनेन नर्मणा लज्जापनयक्रमः प्रकाशितः ॥

(चेटी तमालपल्लवस्य रसेन विदूषकस्य मुखं नाट्येन कालीकरोति ।)

(नायिका सस्मितं विदूषकं दृष्ट्वा नायकं पश्यति ।)

**नायकः—**

स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे ।
फलं तु जातं मुग्धाक्षि! [1]पश्यतश्चक्षुषोर्मम ॥ १२ ॥

**विदूषकः**—(क) भोदि! किं दे किदं ।

(क) भवति! किं ते कृतम् ।

सस्मितं विदूषकं दृष्ट्वा नायकं पश्यतीत्यनेनाभिमुख्यरूपं फलं प्रकाशितम् ॥

एवं हास्यनर्मणा लज्जातिलङ्घनेन परिहासेन तन्मुखं दृष्ट्वा कान्तमवलोकयन्त्याः सांमुख्येनावर्जनप्रयासस्य साफल्यमालक्ष्य स्मितावलोकनाय श्लाघते — स्मितेत्यादि । स्मितमेव पुष्पोद्गमः । विकाससौरभकान्तिसन्तानेन अयम् अनुभवैकवशंवदः । दृश्यते चिराद् दैवेन दृष्टिगोचरतां प्राप्नोति । अधरपल्लवे तदुपरि । पल्लवोपश्लिष्टत्वात् पुष्पस्य पुष्पत्वरूपणम् । फलं विशिष्टजन्मप्रयोजनम् । तदेव कुसुमोद्भवं फलम् । तु इति लोकतो विशेषद्योतकः । मुग्धाक्षि! पश्यतश्चक्षुषोर्ममेति । 'स्वभावालोकितं मुग्धम्' इत्युक्तत्वात् त्वन्नयनकुवलयाभ्यामकुटिलावलोकनेन सजातीययोरस्मन्नयनयोर्जन्मसाफल्ये सहकृतमिव इति द्योत्यते । स्मितावलोकनेनास्मन्नयनसाफल्यं जातमित्यर्थः । अत्र दृश्यते जातमिति कारणकार्ययोः पौर्वापर्यविपर्ययादतिशयोक्तिः । अन्यत्र कारणमन्यत्र कार्यमिति, फलमित्यत्र रूपकश्लेषानुगृहीता असङ्गतिश्चालङ्कारः । विरोधवदेवासङ्गतेर्न्यायः । कार्यकारणयोर्भिन्नदेशत्वे ह्यसङ्गतिः । सा आभासरूपा । अत्र लोकोत्तराणां वस्तूनामचिन्त्य एव प्रभाव इति व्यज्यते ॥ १२ ॥

अथ विदूषकस्य निर्गमनारम्भः । भवति! किं ते कृतम् ॥

१. 'चक्षुषोर्मम पश्यतः ॥' इति मूलकोशपाठः.

**चेटी**—(क) णं वण्णिदो सि ।

**विदूषकः**—(हस्तेन मुखं परामृज्य हस्तं दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य ससंरम्भम्) (ख) दासीए धीदे! राअउळं खु एदं । किं दे करिस्सं । (नायकमुद्दिश्य) भो! तुह्माणं पुरदो एव्व अहं दासीए धीदाए खळीकिदोह्मि । किं मम इह ट्ठिदेण । अण्णदो गमिस्सं । (निष्क्रान्तः ।)

**चेटी**—(ग) कुविदो खु मम अय्यो अत्तेओ । जाव गदुअ पसादेमि ।

**नायिका**—(घ) हञ्जे चउरिए! कहं मं एआइणिं उज्झिअ गच्छसि ।

---

(क) ननु वर्णितोऽसि ।

(ख) दास्याः पुत्रि! राजकुलं खल्वेतत् । किं ते करिष्यामि । भोः! युष्माकं पुरत एवाहं दास्या धीतया खलीकृतोऽस्मि । किं ममेह स्थितेन । अन्यत्र गमिष्यामि ।

(ग) कुपितः खलु मम आर्य आत्रेयः । यावद्गत्वा प्रसादयामि ।

(घ) हञ्जे चतुरिके! कथं मामेकाकिनीमुज्झित्वा गच्छसि ।

---

ननु वर्णितोऽसि ॥

दास्याः पुत्रि! राजकुलं खल्वेतत् । किं ते करिष्यामि । भोः! युष्माकं पुरत एवाहं दास्या धीतया सुतया खलीकृतोऽस्मि । किं ममेह स्थितेन । स्थितं स्थितिः ॥

कुपितः खलु मम आर्य आत्रेयः । यावद् गत्वा प्रसादयामि ॥

हञ्जे चतुरिके! कथं मामेकाकिनीमुज्झित्वा गच्छसि ॥

चेटी — (नायकमुद्दिश्य सस्मितम्) (क) एव्वं एव्व चिरं एआइणी होहि । (निष्क्रान्ता ।)

नायकः —

दिनकरकरामृष्टं बिभ्रद् द्युतिं परिपाटलां
दशनकिरणैरुत्सर्पद्भिः स्फुटीकृतकेसरम् ।
अयि मुखमिदं मुग्धे! सत्यं समं कमलेन ते
मधु मधुकरः किन्त्वेतस्मिन् पिबन् न विभाव्यते ॥१३॥

(क) एवमेव चिरमेकाकिनी भव ।

नायकमुद्दिश्येति । नायकेन सहावस्थानं संसूच्य तस्या वक्रोक्तिः — एवमेव चिरमेकाकिनी भव ॥

अथ शृङ्गारस्याङ्गभूतस्य परिपोषे समर्थिते रसान्तरावतरणे निरुपयोगत्वेन नर्मसचिवे विसृष्टे चेट्यां च तदनुवर्तनव्यपदेशेन गतायां विविक्ते 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति नीत्या प्रकारान्तरेण चुम्बनं प्रार्थयते — दिनेत्यादि । अयि प्रार्थये । मुग्धे! उचितस्यापि मौग्ध्यस्य फलमपेक्ष्य किञ्चिच्छैथिल्यं युक्तं, न तु सर्वथेति प्रसभोपक्रमपरित्यागः । एतावति सम्बोधने अवधानमालक्ष्य साध्यगर्भं प्रशंसति—इदं मुखं कमलेन समं, नान्यमुखेष्वेवं दृष्टम् । इदमिति अतिसाम्यनिर्वहणायोद्यतम् । सत्यं, नात्र चाटुबुद्धिं कृथाः । कमलेन समं , प्रायशः स्वमहिम्नैव । किं तत् साम्यमित्यत्राह — दिनकरस्य करैरामृष्टं रविकरस्पृष्टत्वात् परितः सर्वतः सौकुमार्यातिशयेनारुणां कान्तिं बिभ्रदिति सहजायाः कान्तेः सादृश्यनिर्वहणाय विशेषः स्फुटीकृतः । संस्थानस्यापि विशेषमाह — दशनकिरणैः स्मितप्रकाशितैः दशनमौक्तिककान्तिपूरैः स्पष्टीकृताः किञ्जल्का यत्र । एवं साम्यपरिकरेषु समग्रेषु किञ्चिद् वैकल्यं सूत्रयति — किन्त्विति । अल्पं वैगुण्यमत्र दृश्यते अन्यत्र तन्नास्तीति तस्य गर्वः[1] । वैगुण्यं प्रतिपादयति — मधु पिबन्निति । इदानीमेव गुणसामग्रीवत्त्वम्[2] । मधुकरः

१. 'समप्रार्थम् । म' क. पाठः. २. 'म्यात् । म' घ. पाठः.

(नायिका विहस्य मुखमुन्नमयति ।)

(नायको दिनकरेति तदेव पठति ।)

(प्रविश्य)

**चेटी**—(सहसोपसृत्य) (क) एसो खु सिद्धजुअराओ मित्ता-वसू केण वि कज्जन्तरेण कुमारं पेक्खिदुं आअदो ।

**नायकः**—प्रिये! गच्छ त्वमात्मनो गृहम् । अहमपि मि-त्रावसुं दृष्ट्वा त्वरिततरमागत एव ।

(चेटीसहिता निष्क्रान्ता नायिका ।)

(ततः प्रविशति मित्रावसुः ।)

**मित्रावसुः**—

अनिहत्य तं समर्थः कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि तव हृतं राज्यं रिपुणेति निर्लज्जः ॥ १४ ॥

---

(क) एष खलु सिद्धयुवराजो मित्रावसुः केनापि कार्यान्तरेण कुमारं प्रेक्षि-तुमागतः ।

---

भृङ्गः । पातुरेव वैकल्यं न मधुन इति पिबन्नित्यनेन द्योत्यते, मधुसम्पा-दनानुकूलः न तु शोषक इति टप्रत्ययेन । न विभाव्यते न सम्बद्धत्वेन साक्षात्क्रियते । तत् त्वदनुमतिमेवापेक्षते । मधुनि परिपूर्णे तदेकपरस्य म-धुकरस्यानाहूतोपसर्पणमयत्नसिद्धम् । अतः साम्यपरिपूर्तावनुवादं प्रार्थय इत्यावर्जनक्रमेण चुम्बनोपक्रमः ॥

यावत्सम्भोगवर्णने

"चुम्बनं लोकधर्मं च तथा गुह्यं न कारयेत् ।
केनचिद् वचनार्थेन तस्य भेदं प्रयोजयेत् ॥"

इत्युक्तत्वात् तन्निरोधाय सहसा चेटीप्रवेशः ॥

अथाङ्गत्वेन परिपोषं गतस्य भृङ्गारस्याङ्गतानयनपूर्वं नायकस्या-ङ्गिनि प्रवेशाय कान्तासोदरस्य मित्रावसोः प्रवेशं प्रतिपादयति । प्रविष्टः स सिद्धं मतङ्गवृत्तं हृदि निधायाह—अनिहत्येति । अहं तव राज्यं रिपुणा हृतमिति तमनिहत्य कथमिव जीमूतवाहनस्य निवेदयिष्यामि ।

तथाप्यनिवेद्यायुक्तरूपं गमनमिति निवेद्य गच्छामि ।

(उपसर्पति ।)

**नायकः**—मित्रावसो! इह आस्यताम् ।

(मित्रावसुरुपविशति ।)

**नायकः**—ससंरम्भ इव लक्ष्यसे ।

**मित्रावसुः**—कः खलु मतङ्गहतके संरम्भः ।

**नायकः**—किं कृतं मतङ्गेन ।

**मित्रावसुः**—स्वनाशाय युष्मदीयं किल राज्यमाक्रान्तम् ।

---

लज्जां विहाय तथा वक्तुं न शक्यम् । हतो मया तव रिपुरित्येव वक्तुं युक्तं, न राज्यं हृतमिति । जीमूतवाहनस्य वीराग्रेसरस्य प्रियसम्बन्धिनः । अहं, न त्वन्यमुखेन । असामर्थ्ये किं क्रियतामिति चेद्, न तथा । समर्थः, अद्यैव रिपुशिरः प्राभृतीकर्तुं निपुणः । तथा सति सुतरां न युक्तमित्यर्थः ॥ १४ ॥

तर्हि न निवेदयितव्यमिति चेत् तत्राह—तथापि, एवमनिवेदनस्य योग्यत्वे सत्यपीत्यर्थः । अयुक्तरूपम् अनुपपन्नं, तस्य प्रभुत्वहानेरित्यर्थः । इति अस्माद्धेतोः । निवेद्य गच्छामीति निवेदनस्य पौर्वकाल्येन गमने त्वरा सूचिता ॥

अथ नायकस्य तदावर्जनप्रकारमाह—मित्रावसो! इह समीपे आस्यतामिति तत्सम्भ्रममविज्ञायोक्तिः ॥

पश्चादवधानेन संरम्भमाशङ्क्योक्तिः—ससंरम्भ इव लक्ष्यसे । मुखरागादिभिरिति शेषः ॥

कः खलु मतङ्गहतके कुत्सिते संरम्भः । क्रोधवेगः खलु संरम्भः । अत्र संरम्भ इति वक्तुं न युक्तं, तस्य तुच्छत्वेन संरम्भाविषयत्वादित्यर्थः ॥

एवं सिद्धवत्कथने पृच्छति—किं कृतं मतङ्गेनेति ॥

राज्याक्रमणकथनस्यायुक्तत्वमाशङ्क्य तेन शत्रोर्भाविनमपकर्षं पुरस्कृत्याह—स्वनाशायेति । अधुनैव तथा करोमीत्यर्थः । युष्मदीय-

---

१. 'य न यु' इति मूलकोशपाठः.

**नायकः**—(सहर्षमात्मगतम्) अपि नाम सत्यमेतत् स्यात् ।

**मित्रावसुः**—तदुच्छित्तये मामाज्ञापयतु कुमारः । किं बहुना,

संसर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धं चोद्धृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम् ॥१५॥

---

मिति साहसिकत्वं प्रकाशितम् । राज्यमित्यमर्षणीयत्वम् । किलेति वार्तायाम् । वार्तापि न सह्यत इति क्रोधवेगः ॥

सहर्षमिति । रसान्तरतिरोहितस्य दयोत्साहसागरस्य तरङ्गायमाणा मतिगर्वधृतिप्रहर्षा इति निर्दिष्टस्य सत्त्वोन्मेपरूपस्य प्रहर्षस्य परिग्रहः । ततः स्वयं निरूपयति—अपिनाम सत्यमेतत् स्यात् । दैवस्यानुकूल्यमस्ति वास्मिन्नर्थे । सत्यमेवास्तु इत्यर्थः । परिग्रहो हीति पूर्वोक्तनीत्या पितृगौरवेण ममताबन्धविषये बलात्कृतेऽस्मत्समीहितसिद्धिरेवेति हर्षः ॥

एवं तद्धृदयमविज्ञाय संरम्भेणाह—तदुच्छित्तये मामाज्ञापय । त्वदाज्ञैवापेक्षणीयेत्यर्थः । तदेव स्फुटयति—किं बहुनेति । साध्यसाधनविपयेण कथनेन । साध्यस्य सिद्धत्वादित्याक्षेपः । सिद्धत्वं प्रतिपादयति—

संसर्पद्भिरित्यादि । संसर्पद्भिः सम्भूय प्रसर्पद्भिः । समन्ताद्, न त्वेकदेशे । अत एव कृतं सकलस्य वियन्मार्गस्य यानं यैः तादृशैः विमानैः स्थगितरविरुचो वासरस्य श्यामतां कुर्वाणाः । दृष्टान्तेन श्यामतापकर्षमाह—प्रावृषीव । प्रावृषि यथा श्यामता तथेत्यर्थः । स्थगितरविरुच इति वासरस्य विशेषणम् । मेघानां विमानप्रतिवस्तुतया तदधिष्ठितानां वैमानिकप्रतिवस्तुतया च प्रतीतिरयत्नसाध्या । यथा प्रावृषि मेघैर्वायव इति । अथवा कालमात्रे दृष्टान्तः । सर्वतः स्थगनमेव साध्यम् ।

अथवा किं बलौघैः,

एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
आरान्निपत्य हरिणेव मतङ्गजेन्द्र-
माजौ मतङ्गहतकं हतमेव विद्धि ॥ १६ ॥

---

एते इति आरूढविमानानां प्रत्यक्षनिर्देशः । सद्यः इदानीं त्वदाज्ञानन्तरम् । याताश्च, न तु यास्यन्ति । तव वचनावाप्तिरेव विलम्बहेतुः । इतः अस्माद् देशात् । स्वराज्यं सिद्धं च, न तु साधयिष्यते । ते इति, भवतो गौरवादित्यर्थः । कथमान्तरालिके शत्रुवधे साध्ये राज्यस्य सिद्धवत्कथनमित्यत्राह — उद्वृत्तः उच्छृङ्खलः यः शत्रुर्मतङ्गः तत्क्षयेण प्रयत्नान्तरं विना भयेन विनमद् राजकं राजसमूहो यत्रेति सिद्धेः पूर्णत्वमुक्तम् । क्रियाविशेषणं वा । विमानबाहुल्येन दण्डवृद्धिः, ततः सिद्धवत्कथनम् । युद्धाय सिद्धा इति नास्माकं गमनमपेक्षितं न विद्याधराणां चेति स्वस्य मित्रकार्यजागरणं सामर्थ्यं च प्रकाशितम् । याताश्च सिद्धं चेति यौगपद्यरूपेणातिशयेन आज्ञामात्रापेक्षया विलम्बः, तन्नियुज्यतामिति कार्यस्येषत्करत्वं प्रकाशितम् ॥ १५ ॥

अथ बलौघगमने आज्ञापरिग्रहविलम्बमाशङ्क्य निजशक्तिविश्वासाच्च पक्षान्तरमाह — अथवा किं बलौघैः । एकेनैव साध्ये बहुजनग्रहणं विलम्बहेतुरित्यर्थः ।

एकाकिना असहायेन । अपिशब्देन सहायप्रवृत्तौ किं पुनरिति साध्यरूपनिर्विघ्नत्वमात्मनः शौर्यं च प्रकाशितम् । आरान्निपत्य सेनादिकं पश्चात्कृत्य तत्सन्निधिं प्राप्य । आजाविति, न प्रच्छन्नप्रकारेण । मतङ्गहतकं पूर्वमेव दैवप्रहतम् । हतमेव विद्धि, न तु हन्यमानं हनिष्यमाणं वा । दुष्टोऽपि प्रबलोऽसौ कथमेकाकिना त्वया हन्यते इत्यत्र विकल्पच्छेदिनं दृष्टान्तमाह — हरिणेव सिंहेनेव । मतङ्गजेन्द्रं गजाधिपम् । अत्र बलवतोऽपि मतङ्गस्य नीचतया हतकशब्द इति दृष्टान्ते इन्द्रशब्देन वैषम्यं न

**नायकः —** (कर्णौ पिधाय आत्मगतम्) हहह दारुणमभिहितम् । अथवा एवं तावत् । (प्रकाशं सस्मितम्) मित्रावसो ! कियदेतत् । बहुतरमतोऽपि बाहुशालिनि त्वयि सम्भाव्यते । किन्तु,

**स्वशरीरमपि परार्थे यः खलु दद्यामयाचितः कृपया ।**
**राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमन्ये ॥ १७ ॥**

**अपिच क्लेशान् विहाय शत्रुबुद्धिरेत्र मे नान्यत्र । यदि तेऽस्मत्प्रियं कर्तुमीहा, तदनुकम्प्यतामसौ क्लेशदासीकृतस्तपस्वी ।**

---

शङ्कनीयम् । दृष्टान्तविशेषेणायुधादावपि नात्यादर इति प्रकाशितम् । साम्यं श्रौतेन धर्मेण द्रढयति — रभसेनावकृष्टस्य कोशादुद्धृतस्य निस्त्रिंशस्य खड्गस्य दीधितिसटाभरेण सटावदुज्ज्वलानां दीधितीनां भरेन भासुरेणेत्युपमासमासः । निस्त्रिंशस्य नखसाम्यमर्थौचित्यात् सिद्धम् ॥ १६ ॥

एवं परनिग्रहप्रतिपादकं वचनमाकर्ण्य परहितैकदीक्षितः अमङ्गलश्रवणप्रायश्चित्ततया कर्णौ पिधाय स्वयं तद्वचनमपलपति — हहह इति निपातसमुदायः परुषवचनस्य दुस्सहत्वद्योतकः । दारुणं रौद्रमभिहितम् । निग्रहवचनस्यैवारुन्तुदत्वं, किं पुनः क्रियाया इति भावः । अस्य दारुणत्वमेव कथयामीति विमृश्य तत्रापि पारुष्यमाशङ्क्य पक्षान्तरं निश्चित्याह — अथवा एवं तावत् । कथयिष्यामीति शेषः । मित्रावसो ! कियत् किंप्रमाणम्, अतितुच्छमित्यर्थः । एतदिति । तदुक्तममङ्गलरूपनिग्रहवचनमनभिधातुमेतदिति सर्वनाम्ना निर्देशः । अतोऽपि उक्तादपि । बहुतरम् अतिप्रचुरम् । वीर्यमिति शेषः । बाहुशालिनि भुजबलसम्पन्ने । बाहुभ्यां तद्बलेन शालितुं शीलमस्येति वा । सम्भाव्यते सम्भावनायोग्यत्वेन कल्प्यते । तर्हि किं नियोगे विलम्ब्यत इत्यत्र हेतुमभिधातुं पक्षान्तरमासूत्रयति — किन्तु, अस्य भवत्साध्यस्यापवादो निरूप्यत इत्यर्थः ।

स्वशरीरमिति । ममत्वे प्रथमं विषयीकृतं शरीरमपि । अपिशब्दः स्वोपपदात् पृथग्भूतं सम्भावयति । किं पुनरन्यदित्यर्थः । स्वशब्देन

सर्वेषां स्वदेहार्थमन्यत् सर्वमिति लोकबुद्ध्यात्याज्यत्वं निरूप्य स्वबुद्ध्या विशरणस्वभावस्यास्य हेयत्वमङ्गीकृत्योक्तिः। परार्थे स्वव्यतिरिक्तजन्तुमात्रस्यार्थं प्राणरक्षादिप्रयोजनं निमित्तीकृत्य। यः खल्वित्यनुवादवाक्येन तस्यार्थस्य पूर्वं निश्चितत्वं प्रकाशितम्। अत एव खल्वित्यविसंवादं द्योतयति। दद्यां दातुं शक्नुयाम्। ममत्वं विहायेति शेषः। 'शकि लिङ् च'(३. ३. १७२) इति लिङ्। अयाचितः अप्रार्थितः। अपीति शेषः। प्रार्थने किं पुनरित्यर्थः। अनेनायाचितदानस्य मुख्यत्वमिष्टत्वं च द्योतितम्। तत्र को हेतुः, कृपया धर्मसारभूतया। स तादृशाध्यवसायः। कथमिति। अभिप्रायविरुद्धोऽयं मार्ग इत्यर्थः। राज्यस्य बहिरङ्गस्य। कृते सम्पादनं निमित्तीकृत्य। प्राणिवधक्रौर्यं प्राणिनां वधरूपं क्रूरकर्म। प्राणिशब्देन प्राणिमात्रस्यावध्यत्वाद् वैरिष्वप्यविशेषं द्योतयति। अनुमन्ये क्रियतामित्यनुवदामि। 'तव वचनं प्राप्ये'त्यनुवादस्यापेक्षितत्वात्॥ १७॥

तर्हि अनुवादं विना प्रवृत्तिरिति चेत् तदपि न रम्यमित्यनुवर्तनपूर्वमाह—अपिचेति। एतदकरणं प्रकारान्तरेणापि प्रार्थये। क्लेशान् अविद्यास्मितरागद्वेषाभिनिवेशान् पञ्च,

"आत्मबुद्धिरविद्या स्यादनात्मनि कलेबरे"

इत्यादिना लक्षितान्। विहाय वर्जयित्वा। शत्रुबुद्धिः अयं शत्रुरिति बुद्धिः बोधः। एवकारेण वैरादिकं व्यावर्तयति। मे इति तत्त्वं विमृशतः। अन्यत्र पुरुषे। अविद्यादीनामात्मनो मूलोच्छेदहेतुत्वात् तेषामेव शत्रुत्वमिति भावः। यदीत्यादि भेदगर्भं साम। अस्मत्प्रियार्थं हि भवतस्तं प्रति साहसोपक्रमः। तदन्यथा चेत् सेत्स्यति किमकृत्यनिर्बन्धेन। मदुक्तं क्रियतामिति। अनुकम्प्यतां दयाविषयीक्रियतां, न द्विष्यताम्। तत्र युक्तिमाह—क्लेशदासीकृतः क्लेशैरस्मद्वैरिभिः पूर्वमेव दासीकृतः अविद्यातत्कार्येष्वेव भ्रमन्नित्यर्थः। अस्मद्राज्यापहारेण तस्याभ्युदयबुद्धिं मा कृथाः। वस्तुतोऽपकर्ष एव, मोहग्रस्तत्वात्। तपस्वीति विमर्शराहित्येन लघुत्वं लक्ष्यते। अहो अस्य जन्तोरविद्याविलास इति दुःखित्वनिरूपणेनानुकम्पैव क्रियतामित्यर्थः। अत्र चिरतिरोहितस्योपरि निरन्तरप्रवर्धमानस्य दयोत्साहस्यानुबन्धः कृतः॥

**मित्रावसुः**—(सामर्षं सहासं च) कथं नानुकम्प्यते, यादृशोऽसावस्माकमुपकारी कृपणश्च ।

**नायकः**—(आत्मगतम्) प्रत्यग्रकोपाक्षिप्तचेतास्तावदसौ न शक्यते निवर्तयितुम् । तदेवं तावत् । (प्रकाशम्) मित्रावसो! उत्तिष्ठ । अभ्यन्तरमेव प्रविशावः । तत्र च त्वां बोधयिष्यामि । सम्प्रति परिणतमहः । तथाहि—

निद्रामुद्रावबन्धव्यतिकरमनिशं पद्मकोशादपास्य-
न्नाशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्वः ।

---

तद्वचः श्रुत्वा कोपेनाभिप्रायमजानानो हासमवलम्ब्य क्षिपति—कथं नानुकम्प्यते । अनुकम्पायाः स्वतः प्राप्तौ किं प्रार्थ्यते । यादृशोऽस्माकमुपकारी उपकर्ता कृपणः दीनश्च । यादृशः प्रसिद्धः उपकर्तृत्वेन कृपणत्वेन च । तस्मादनुकम्प्यः । अथवा यादृशः अन्यः तादृशोऽसौ इति वा । अपकारी उद्धतश्चायं नानुकम्पाविषय इति विरुद्धलक्षणया प्रकाश्यते ॥

एवं तद्वचनमाकर्ण्य विमृशति—प्रत्यग्रेण नवेन कोपेन ग्रस्तचित्तस्तावदसावध्यवसायान्निवर्तयितुं न शक्यते । तदेवम् । कथयामीति शेषः । उत्तिष्ठ नायं कथनकालः । पुनस्त्वामभ्यन्तरे बोधयिष्यामि । उक्तमर्थमिति शेषः । अनेनैकदिवसप्रयोज्यसमाप्तौ अङ्कावसाने सन्ध्यावर्णनस्य प्रस्तावः कृतः । तदेव विवृणोति—सम्प्रति परिणतमहः । सन्ध्या सन्निहिता । तथाहि । दृश्यत इति शेषः ।

निद्रेत्यादि । इमं देहलाभमामरणं परोपकारसाधनत्वेन सफलयामीत्यात्माध्यवसायं शिष्टानुष्ठानविश्वासेन द्रढयति । एष नयनानन्दकरो

---

१. 'कः—(अपवार्य)
हिंसाप्रभवो विजयस्तस्य फलं श्रीस्ततः सुखं क्षणिकम् ।
तत्प्राप्तये विशुद्धं धर्मं च यशश्च को जह्यात् ॥
प्र' ख. पाठः. २. 'साम्प्रतं प' क. पाठः. ३. 'छोत्तिष्ठ । ना' ङ. पाठः.

दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छ-
न्नेकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रयासः ॥

(निष्क्रान्तौ ।)

तृतीयोऽङ्कः ।

---

विवस्वान् । एकः केवलः, न द्वितीयः सब्रह्मचारिपदे । श्लाघ्यः सर्वश्लाघास्पदम् । यस्य परहितकरणाय परेषामनुग्रहसम्पादनायैव, न किञ्चिदपि स्वप्रयोजनं पश्यामः । शय्योत्थायं प्रवर्तमानस्य प्रयासः सारथिरथादिवैकल्येऽपि तदा तदा आतपवर्षहिमादिकं सम्पाद्य सर्वलोकाभ्युदयसम्पादनायैव परिश्रमः । कथं भूतपूर्वस्योत्कर्षस्यापचयकाले श्लाघ्यताहेतुत्वमिति विरोधमङ्गीकृत्य क्षिपति — अस्तं गच्छन्नपीति । इदानीन्तनस्यास्तमयस्य 'पर्यायपीतस्य सुरैर्हिमांशो'रितिवत् श्लाघ्यतापोषकत्वम् । अस्तं गच्छन्नपि, किं पुनरुद्यन्निति वा । अत्र समासोक्तिच्छायया परपीडाशामकस्य वदान्यस्य परार्थं देहत्यागमपि कुर्वाणस्य कस्यचिन्महतो व्यवहारसमारोपः प्रस्तुतागन्तुभाववस्तुसूचनरूपपताकास्थानकभेदत्वेन विज्ञायते। तत्रास्तं गच्छन्नपि विनश्यन्नपि श्लाघ्यः परहितकरणेन जन्मसाफल्याद् इति । अस्तगमनात् प्रागवस्थां वर्णयति — निद्रायां सङ्कोचे मुद्रावबन्धः दृढसंश्लेपः । मुद्रया दृढत्वं लक्ष्यते । दलानामवयवसंश्लेषदौःस्थ्येन पिण्डीभूय वर्तनं मुद्रावबन्धः, तद्व्यतिकरम् । अनिशं दिने दिने पद्मकोशात् पद्ममुकुलेभ्यः । जातावेकवचनम् । अपास्यन् विकसनेन निरस्यन् । अन्योऽपि पद्माद्याकारात् कोशाद् भाण्डागाराद् निद्राम् अध्यक्षाणां मुद्रावबन्धं, मुद्रा राजलाञ्छनं, तन्मिश्रं बन्धमनिशमपास्यन् सदा भाण्डागारस्य विवृतत्वाद् दानोद्यमाच्च । अथवा पद्मकोशतुल्यात् संपुटितकरद्वयाद् उद्रावः उद्गतरावः यो बन्धव्यतिकरः लोहशृङ्खलया दृढनिगलनं कारागृहनिरुद्धानां स्ववंश्यैः परैर्वा तं तेषां निद्रां चाशक्तिकृतां स्तब्धतां स्वप्रभावेन निरस्यन् । बद्धान् मोचयन्नित्यर्थः । आशा दिशः तासां पूरः पूरणं 'निश्शेषाशावपूरे'तिवत्, तेजसा । तदेवैकं कर्म तत्प्रवणैः प्रवृत्तैर्निजकरैः रश्मिभिः प्रीणितं प्रकाशितम् अशेषं विश्वं लोकालोकान्तरालं येन । अन्योऽपि,

आशा इदं मे स्यादिति प्रार्थयितुरिच्छा तत्पूरणैककर्मप्रवणाभ्यां न तु कान्ताकुचपत्त्ररचनादिप्रवृत्ताभ्यां निजकराभ्यां न त्वमात्यादिकरैः प्रीणिताशेषभूमण्डलः । तद्वर्तिजनं विश्वशब्देन लक्षयति । दृष्टः सिद्धैस्तपस्विभिः प्रसक्ताभिः स्तुतिभिर्मुखरमुखैः । मुखरशब्देन भक्त्या स्वयं प्रवृत्तत्वं बाहुल्यं च प्रकाश्यते । अस्तगमनेऽपि तेषां स्तुतेर्न वैकल्यमिति पूर्वशेषतयापि योज्यम् । अन्योऽपि, सिद्धैः सिद्धिभिर्हेतुभिः, अभीष्टसिद्धेरित्यर्थः । धनैर्वा । प्रसक्तस्तुतिमुखरमुखैः । जनैरिति शेषः । दृष्टः समन्तादवलोकितः मरणान्तमेवं वर्तमानः । अन्योऽपि, एवं यदि, श्लाघ्यः, नच तथा । अयमेक एवैवं भाग्यभाजनमिति । अत्र यद्येवं परार्थमेव मम देहपातो भवेत्, किमतः परं श्लाघ्यमित्युत्तराङ्कार्थबिन्दुरूपेण नायकस्याध्यवसायः प्रकाशितः ॥ १८ ॥

इति शिवरामस्य कृतौ नागानन्दविमर्शिन्यां

तृतीयाङ्कार्थविमर्शनं

समाप्तम् ।

---

१. द्धै च. पाठः.

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति गृहीतवस्त्रयुगलः काञ्चुकीयः प्रतीहारश्च ।)

**काञ्चुकीयः —**

अन्तःपुराणां विहितव्यवस्थः
पदे पदेऽहं स्खलितानि रक्षन् ।
जरातुरः सम्प्रति दण्डनीत्या
सर्वं नृपस्यानुकरोमि वृत्तम् ॥ १ ॥

---

अथाङ्कावसानानुसंहितस्य परमसाध्यस्य प्रवृत्तयेऽपेक्षितं नीरसत्वात् सूच्यं वृत्तं

"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥"

इति लक्षणानुसारेण विष्कम्भेण प्रतिपादयितुं कञ्चुकिप्रतीहारयोः प्रवेशः ।

"ज्ञानविज्ञानसम्पन्नाः स्त्रीसम्भोगविवर्जिताः ।
अमत्सरा ये पुरुषाः काञ्चुकीयास्तु ते स्मृताः ॥"

इति कञ्चुकिलक्षणम् ।

तत्राप्यन्तःपुरवासे वृद्धानामौचित्यमिति तस्य वृद्धतां स्वोक्त्या प्रकाशयति — अन्तःपुराणामित्यादिना । गृहीतवस्त्रयुगल इत्यनेनाहार्यस्याप्यभिनयत्वेन वस्त्रयुगलपरिग्रहणैकोंऽशः सूचितः । तत्र ज्ञानवत्तया वार्धकग्रस्ताया देहावस्थायाः शोच्यतां हृदि निधाय भर्तृपिण्डप्राबल्यादशक्तोऽप्यादेहपातं प्रारब्धं करोमीत्यात्मावस्थां विचारयति — अहं सम्प्रति जरातुरः दण्डनीत्या नृपस्य सर्वं वृत्तमनुकरोमि । सम्प्रतीति विश्रान्तियोग्येऽपि काले । जरया आतुरः, न तु प्रवृत्त्यन्तरेण, वयोवस्थयैव शयनाशनादिष्वपि परवशः । दण्डनीत्या दण्डस्य नीत्या परिग्रहेण,

दण्डं विना पदमपि गन्तुं न शक्यमिति तत्परिग्रहः । तेन नृपस्य वृत्तम् अनुष्ठानम् अनुकरोमि विडम्बयामि । दण्डनीत्येत्यत्रापि सम्बध्यते । दमो दण्डः, तस्य नीतिर्दण्डनीतिः इति, दण्ड्यदण्डनादिरूपकृत्यनयनानुगुण्येन वर्तनमित्यर्थः । वृत्तमनुकरोमीत्युक्ते दण्डनयनादिसाधर्म्येण नृप इव वर्ते इत्युक्तं भवति । तदानुगुण्येन विवरणम्— अन्तःपुराणामित्यादि ।

"स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्"

इत्युक्तत्वात् तेषां व्यवस्था चेटीमूकवामनादीनां स्वकृत्यानुरोधेन विषयदेशक्रियादिक्लृप्तिः, सा विहिता नियोक्तृत्वेन निर्व्यूढा येन । गमकत्वात् समासः । नृपोऽपि पुराणामन्तः, न त्वेकस्य । बहुपुरा हि राजानः । विहितव्यवस्थः असङ्कीर्णविनियोजितवर्णाश्रमादिकृत्यमर्यादः । अन्तरित्युपलक्षणं राज्यस्यापि । विहितमण्डलकृत्य इत्यर्थः । किमेवमुदीर्यते नृपस्याप्यन्तःपुररक्षणं युक्तम् । अत एकरूप एव समानधर्मोऽस्तु, किमर्थभेदकल्पनया, कमलमिव मुखं मनोज्ञमित्यादिषु मनोज्ञतादीनामेकरूपत्वात् । अन्यथा कथं धर्मसाम्यम् । सत्यम् । विशेषणान्तरेषु शाब्दमेव साधर्म्यं घटते । अतोऽस्यापि तत्सब्रह्मचारित्वं निरूप्यैवमुक्तम् । किञ्च, आर्थादपि शाब्दः समानधर्मः स्वदते महाकविभ्यः । तदलम् । पदे पदे एकैकस्य पदस्य विन्यासे । स्खलितानि अशक्त्या निरूपितस्थानादन्यत्र विवशं सिद्धानि गतिस्खलनानि । रक्षन्, पतनादिति शेषः । स्खलनेऽपि दण्डबलेनाभ्यासेन च कथञ्चिदपतन् गच्छामीत्यर्थः । नृपोऽपि पदे स्थाने[1] दण्ड्यदण्डनादिकृत्यविषयेषु प्रमादादिजनितानि विरुद्धाचरणक्रमलङ्घनादीनि रक्षन् रुन्धन् । स्खलितस्य प्रसरं निरुन्धन्नित्यर्थः । 'संरक्षिता सम्प्रति वृक्षमूल' इत्युक्तवत् स्खलितानां रक्षणं न घटत इति मुख्यार्थबाधेन रक्षणेन निरोधो लक्ष्यते इति वा । एवमुत्साहसारस्य नृपस्यातिजडं स्वात्मानं प्रति उपमानत्वप्रकटनेनात्मनोऽपहास्यता निर्वेदगर्भा प्रकाश्यते । अत एव सर्वमिति परिपूर्णताकथनम् । एवं व्यवस्थाविधानेन विहितपरिग्रहे स्खलितरोधेन निषिद्धनिरासे च किमन्यदवशिष्टमिति भावः ॥ १ ॥

---

१. 'ने स्थाने द' घ. च. पाठः.

**प्रतीहारः**—आर्य[1]! क्वनुखलु भवान् प्रस्थितः।

**काञ्चुकीयः**—आदिष्टोऽस्मि देव्या[2] मित्रावसोर्जनन्या। यथा—कञ्चुकिन्! त्वया दशरात्रं यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानीति[3]। कुत्र प्रथमं गच्छामि। राजसुता[4] च श्वशुरकुले वर्तते। जीमूतवाहनोऽपि युवराजेन मित्रावसुना सह समुद्रवेलां द्रष्टुमद्य गत इति मया श्रुतम्। तन्न जाने किं मलयवत्याः समीपं गच्छाम्युताहो जामातुरिति।

---

अथ तयोः संव्यवहाराय प्रतिहारप्रश्नः—आर्येति पूज्यतया सम्बोधनम्। क्वनुखल्विति निपातसमुदायः। कं देशं प्राप्यतयाङ्गीकृत्य गन्तुमुपक्रान्त इत्यर्थः। अनेन पृथक् सन्देशप्रवृत्तयोस्तयोर्यदृच्छया सङ्गम इति प्रकाशितम्॥

तस्योत्तरमाह—आदिष्टोऽस्मीति। मित्रावसोरिति। तस्य प्रसिद्धतया तत्सम्बन्धेन मातुर्गौरवातिशयं द्योतयति। अत एवाशक्तावप्यादेशस्यावश्यानुष्ठेयत्वम्। यथेति प्रकारोपक्रमः। तं प्रकारं त्वां बोधयामीत्यर्थः। कञ्चुकिन्नित्यारभ्य इत्यवच्छिन्न आदेशप्रकारः। दशरात्रं यावद् दशरात्रावधि। रक्तवासांसि सम्पन्निमित्तं नेतव्यानि। द्वयोः परिधानीयोत्तरीयार्थं दिने दिने देयानीति। तयोर्भिन्नदेशस्थितत्वं ज्ञात्वा आह—कुत्र प्रथमं गच्छामीति वासोयुगलेन सह निर्गमः। तत्र विचारः—राजसुता च श्वशुरकुल इति। अनेन तस्या गुरुसन्निधिगमनं सूचितम्। जीमूतवाहनोऽपीति आगाम्यर्थसङ्घटनाय। समुद्रवेलां समुद्रस्योत्प्लवनम्। अद्येति प्रत्यागमनविलम्बनं सूचितम्। तद् द्वयोर्भिन्नदेशत्वात्। न जाने न निश्चिनोमि कुत्र प्रथमं गच्छामीति। युगपन्नेतुमशक्त्या युगलमेव गृहीतम्। पुनरपि नेष्यामीत्यस्य बुद्धिः॥

---

१. 'र्य! वसुभद्र! क्व', २. 'व्या युवराजमि', ३. 'ति। रा', ४. 'दुहिता' इति मूलकोशपाठः.

**प्रतीहारः** — आर्य! वरं राजपुत्र्याः समीपगमनम्। तत्र हि कदाचिदियत्यां वेलया जामाता प्रत्यागतो भविष्यति।

**काञ्चुकीयः** — सुनन्द! साधूक्तम्। भवता पुनः क गम्यते।

**प्रतीहारः** — अहमपि महाराजविश्वावसुना समादिष्टः। यथा — सुनन्द! गच्छ। मित्रावसुं ब्रूहि अस्मिन् दिवसे प्रतिपदुत्सवे मलयवत्या जामातुश्चैतदुत्सवानुरूपं किञ्चिदा-

वरं राजपुत्र्या इति। तत्र जामाता समागतश्चेत् प्रथमं समर्प्य पुनरपि तत्रैव नेतव्यम्। अन्यथान्यत्र गत्वा जामातुः प्रथमं दत्त्वा पुना राज्यपुत्र्यै देयम्। राजपुत्री च समीपे। इयत्या वेलयेति कालदैर्घ्येण प्रत्यागमनसम्भावना॥

एवं लाघवं बुद्ध्वानुवदति — साधूक्तमिति। राजपुत्रीसमीपं गत्वा तत्र न दृष्टश्चेदन्यत्र गत्वा समर्प्य पश्चाद् राजपुत्र्यै नेष्यामीत्यध्यवस्य तं पृच्छति। यद्येवं न योज्यते, युगलग्रहणस्यानुपपत्तिः। तत्सान्निधिप्राप्तेश्च पश्चादप्रत्यागमनं निश्चित्य समुद्रवेलागमनमित्यत्र न विरोधः॥

अहमपीति। आवयोः समं नियोगानुष्ठानप्रवृत्तत्वमित्यपिशब्दार्थः। महाराजविश्वावसुनेत्याज्ञागौरवम्। प्रतिपदुत्सवे स्थालीपाकाख्ये। मलयवत्या जामातुश्च द्वयोः सम्बन्धि। किञ्चिदिति। विमृश्यैव निश्चेतुं शक्यम्। अत एवागत्य निरूपयेति आवश्यकत्वं ध्वनितम्। एतदुत्सवानुरूपमिति निरूप्यस्य दिक्प्रकाशनम्। तद् गच्छतु। आवयोः कर्तव्यस्य परस्परं बोधितत्वादित्यर्थः॥

१. 'पं गतोऽसि। त' ख. घ. ङ. पाठः. २. 'त्यां॰वेलायां जा' इति मूलकोशपाठः

गत्य निरूपयेति । तद् गच्छतु राजपुत्र्याः सकाशमार्यः अहमपि मित्रावसोराह्वानाय गच्छामि ।

(निष्क्रान्तौ ।)

विष्कम्भकः ।

---

(ततः प्रविशति नायको मित्रावसुश्च ।)

**नायकः —**

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥२॥

---

एवमङ्काद् बहिर्भूतेनोभयाङ्कमध्यगेन विष्कम्भेण शालाद्वयसम्बद्धेन स्तम्भेनेव नायकस्य साध्यानुगुणदेशान्तरगमने तदुपायत्वेन वस्त्रनयने बन्धोर्विश्लेषोपाये राजपुत्र्याश्च गुरुकुलगमने सूचिते सरसवस्तुप्रस्तावायाङ्कारम्भे ससुहृदो नायकस्य प्रवेशः —

"प्रेयस्याः सोऽग्रजं तुल्यरूपं मित्रावसुं व्यधात् ।
विलासकेलीलीलासु विस्रम्भरसभाजनम् ॥
कदाचिदथ विस्रम्भात् स मित्रावसुना सह ।
चचार जलधेर्वेलावनान्तमवलोकयन् ॥"

इति क्षेमराजकथानुसारेण ।

अथ प्रथमाङ्कोपक्षिप्तस्य दूरान्तरितस्य पुनरपि तृतीयाङ्कावसानेऽनुसंहितस्य परोपकारस्यावसरालाभेन खिन्नस्तदुत्सुको वनवासस्य साध्यवैलोम्यं स्वयमेव समर्थयति — शय्येत्यादि । वने अयमेको दोषः । वसतामिति शेषः । वृथावस्थानस्य कर्तृसम्बन्धिनो दोषत्वानुवादात् तदुत्थानविषयत्वेन वनसम्बन्धित्वमपि दोषस्य । एकः केवलः प्रधान इति च विवक्षितम् । 'एको हि दोष' इति नीतिरत्र नाश्रीयते । दोषस्य गुणेभ्यः

प्राबल्यादित्यर्थः । एकशब्देन सूचितानां गुणानां समष्टिं कथयति — इत्य-प्रार्थितलभ्यसर्वविभवे प्रकारे आद्यर्थे वा इतिशब्दः । प्रार्थितं प्रार्थनं विना लभ्याः सर्वविभवा भोग्यसम्पदो यत्र । प्रार्थनमुपलक्षणं सम्पादनादेः । अयत्न-सिद्धसर्ववृत्तिसाधन इत्यर्थः । तत्र वस्तूनां समृद्धिर्वनगुणः । प्रार्थनादिनैरपेक्ष्यं तद्वासिगुणः । प्रार्थितेति कर्मणि निष्ठायां लभ्येति कृत्येन सामानाधिकरण्यं न चतुरश्रम् । तत्परिहाराय लब्धेति पाठे सामान्यरूपत्वं हीयेत, लाभक-र्तृत्वेनात्मनः स्फुरणात् । समष्ट्योक्तं विवृणोति — शय्येत्यादि । सर्ववि-भव इत्युक्ते प्रत्येकं बुद्धौ स्फुरितं निर्दिशति । तत्र कथमत्र मृद्वी शय्या इति स्फुरणानुगुण्येन प्रथमं निर्देशः । शय्या प्रासादादिषु सम्पाद्या । शाद्वलं 'शष्पकर्दमयोः शादः' इत्युक्तत्वान्निरन्तरशष्पहरितं स्थलं तत्र तत्र शयनापे-क्षायां सुलभम् । अत्र तल्पादिभ्यो यत्नसाध्येभ्यो व्यतिरेकः सर्वत्र व्यज्यते । शय्या एवमस्तु । कथं विचित्रपरमासनलाभ इत्याकाङ्क्षाक्रमेणाह—आसनं शुचिशिला । शुचिशब्देन क्षालनादिप्रयत्नाविषयत्वमुक्तम् । एतदस्तु । गृ-हस्यैवं न निर्वाह इत्यत्राह — सद्म गृहं द्रुमाणाम् अधः अधोभूमिः । बहुवचनेन तत्र तत्र निरन्तरस्थित्या वृक्षाणामधोभागस्यच्छायाप्रचुरत्वं परितः संवरणं च सद्मातिरिक्तं प्रकाश्यते । किमत्र पीयते तत्राह — शीतं निर्झरवारि पानम् । पीयत इति पानं पेयम् । तृषितस्य शीते स्पृहातिशय इति शीतग्रहणम् । निर्झरशब्देन लघुत्वादिकमपि ध्वनितम्[1] । न तु पानका-दियत्नसाध्यम् । अत्रानूद्यमानांशस्य प्रथमं निर्देशः । निर्देशे न क्रमापेक्षा, सोऽन्वयस्य भर इति प्रकाशयितुम् । सर्वमस्तु । शाल्यन्नादिकमत्र ना-स्ति । तत्राह — अशनम् अश्यत इति भोज्यं वस्तु कन्दाः, न तु बीज-वापादियत्नसाध्याः । एवमस्तु । परिजनः कथं सेत्स्यति । अत्राह — सहाया मृगाः । न तु वेतनादिदानयत्नसाध्याः । एवमाकाङ्क्षाक्रममनुसृत्य विधेयांशस्य प्रथमं निर्देशः । अन्यथा शाद्वलादिकं प्रथममनूद्य शय्यादिकं विधेयं, शाद्वलं शय्या, शिला आसनमित्यादि । अयमुद्देश्यविधेयभावः न निर्देशक्रममपेक्षते । 'रथः क्षोणी यन्ता शतधृति'रित्याद्याप्तवचनेषु अ-न्यथा दृष्टत्वात् । एवञ्च व्यक्तिविवेककारेण वाच्यावचनदोषप्रस्तावे,

---

१. 'श' घ. पाठः.

मित्रावसुः—(ऊर्ध्वमवलोक्य) कुमार! त्वर्यतां त्वर्यताम्। समयोऽयं चलितुमम्बुराशेः।

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्।
न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति॥"

इति स्वोक्तिमनुसृत्य

"त्वक् तारवी निवसनं मृगचर्म शय्या
गेहं गुहा विपुलपत्रपुटा घटाश्च।
मूलं दलं च कुसुमं च फलं च भोज्यं
पुत्रस्य जातमटवीगृहमेधिनस्ते॥"

इत्यमुं श्लोकमुदाहृत्य प्रत्युदाहरणत्वेनेमं श्लोकमुक्त्वा अत्रोदाहरणप्रत्युदाहरणप्रतीत्योर्यदन्तरं, तन्मतिमतामेव भासते, अन्येषां तु शपथप्रत्येयमेवेत्युक्तं दोषदर्शनसंरम्भेणैव। न सर्वत्रानुवाद्यविधेयक्रमेणैव निर्देशः। अस्माकमपि विद्वांसः प्रमाणम्। तदलमवान्तरेण। 'उद्यानं वनभूमय' इत्यादावपीयमेव युक्तिः। एवं गुणान् विविच्य यद्वृत्तवाक्येन सर्वातिशायिनं दोषमनुवदति। परार्थघटनावन्ध्यैः प्राणैरपि परस्य स्वव्यतिरिक्तस्य जन्तुमात्रस्य अर्थः प्रयोजनं प्राणसंरक्षणादि तत्सम्पादनविमुखैः अप्रवृत्तैः वृथा स्थीयते। अन्यकरणेऽपि तदकरणे वृथासिकैव फलति। परार्थघटनैव जन्मकार्यम् इत्यध्यवसायातिशयः तत्त्वधीरूपा मतिश्च प्रकाश्यते। सा चोत्साहव्यभिचारिभूता। वन्ध्यैरित्यनेन 'वन्ध्योऽफलोऽवकेशी च' इति फलहीनवृक्षनिर्देशात् तत्सब्रह्मचारित्वं व्यज्यते। वनवासिनां वृथासिकायां किं वराकस्य वनस्य दूषणम्। अत्राह— दुष्प्रापार्थिनि दुष्प्रापाः दुर्लभाः अर्थिनो यत्र। अस्य दोषस्य वनसम्बन्धित्वम्। अत्र यद्यर्थी सिध्यति, तर्हि प्राणैरपि तदर्थं करोमीति साध्यं प्रत्यौत्सुक्यम् उत्साहानुगुणं व्यज्यते। एवं सामान्येनाप्रस्तुतेन प्रस्तुतः स्वात्मनो वृथासिकाखेदो व्यज्यते॥ २॥

एवं नायकस्य स्वावस्थानिरूपणे समुद्रवेलां द्रष्टुं गत इति सूचितं मित्रावसुमुखेनानुसन्धत्ते—कुमार! त्वर्यतामिति। ऊर्ध्वावलोकनं काल-

**नायकः**—(आकर्ण्य) सम्यगुपलक्षितम् ।

उद्गर्जज्जलकुञ्जरेन्द्ररभसास्फालानुबद्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायःप्रेङ्खदसङ्ख्यशङ्खवलया वेलेयमागच्छति ॥ ३ ॥

---

निश्चयेन जलधेर्वेलोत्प्लवनावतरणस्य निश्चेतव्यत्वात् । अत एव समयोऽयमित्युक्तम् । समुद्रस्योत्प्लवने नित्यसिद्धः कालोऽयम् । अतस्त्वर्यताम् । तटमवतीर्य वेलामवलोकयितुमिति शेषः ॥

एवं तदुक्त्यनुसारेण समुद्रक्षोभप्रकारमवलोक्यानुवदति—सम्यगुपलक्षितं कालविशेषेण चिह्नेन बोधितम् । सम्यग् अव्यभिचारि, तथा दृश्यत इत्यर्थः ।

दर्शनं प्रतिपादयति—उद्गर्जदित्यादि । वेलेयमागच्छति । तटं प्रतीति शेषः । 'अब्ध्यम्बुविकृतौ वेले'त्युक्तत्वाद् विकृतम् उत्प्लुतम् अम्बु आगच्छति । आ समन्ताद् गच्छति प्रसरति । इयमिति तदनुभूत्या साक्षात्कारप्रकारमाह—प्रायः बाहुल्येन तत्र तत्र प्रेङ्खन्ति चलन्ति असङ्ख्यानि बहूनि शङ्खानां वलयानि मण्डलानि यत्र । प्राय इति प्रेङ्खदित्यनेन सम्बध्यते । यथा अयम् उच्चैः ध्वनिः उच्चरति । यस्मिन्नागमनप्रकारे उच्चैर्ध्वनिः प्रसरति, तथा तं प्रकारमवलम्ब्य । उच्चैर्ध्वन्युत्पादनपूर्वकमित्यर्थः । उच्चैरिति ध्वनिविशेषणमव्ययम् । उल्बण इत्यर्थः । क्रियाविशेषणस्योदुपसर्गेणैव सिद्धत्वात् । अकर्मकत्वादात्मनेपदाभावः । उच्चैस्त्वं समर्थयति—श्रुतिपथोन्माथी । शब्दस्य ग्राहकमपि श्रुतिपथं शब्दान्तराविषयत्वेन निजमांसलत्वेनाक्रम्य निरुन्धन् । जलोत्प्लवनजनितस्य ध्वनेः सहकारिसामग्र्येणौद्धत्यं प्रतिपादयति—उद्गर्जतां मदेन जलोत्प्लवनेन च तारं नदतां जलकुञ्जरेन्द्राणां करिमकरश्रेष्ठानां रभसेन संरम्भेण य आस्फालः शुण्डादण्डेन तरङ्गोपरि ताडनं तदनुबद्धः आस्फालनादसम्मिलितः अत एवोद्धतः प्रचण्डः । गर्जनसम्मेलनं दण्डापूपिकया सिद्धम् । औद्धत्यफलमाह—

मित्रावसुः — कुमार ! नन्वागतैव । पश्य —

कबलितलवङ्गपल्लवकरिमकरोद्गारसुरभिणा पयसा ।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति ॥ ४ ॥

---

सर्वाः पर्वतकन्दरोदरभुवः पर्वतस्य गुहाकुहरस्थलीः प्रतिध्वानिनीः बहुलप्रतिनादयुक्ताः कुर्वन् । वेलागमनजनितहर्षाः कन्दरभुवः सखीः कपोलध्वनिं कारयन्निव इति कर्तृतानिर्देशेन व्यज्यते । एवं ध्वन्युदयानुगुणम् इयं वेला आगच्छति । अत्र यथा ध्वनिः तथा इति ध्वनिरूपेण लिङ्गेन वेलागमनानुमाने इयमिति साक्षात्कारः तदनुगुणं विशेषणं च न घटते। ध्वनेः प्रकारकथनं च साक्षात्कार एव घटते । अत्र वर्णनीयानुगुण्येन समासानुप्राससङ्ग्रहः ॥ ३ ॥

तदुक्तमनुवदति—नन्वागतैवेति । वेलोत्प्लवने तरङ्गफेनयादोनिकरतरुलताकुसुमपत्रादिसम्मिलितं तटागमनं समुद्रान्तिकस्थितानामनुभवसिद्धम् । आगतैव । वर्तमाननिर्देशस्य नावसरः । वेगादित्यर्थः । पश्य । आगतामिति शेषः ।

कबलितेत्यादि । एषा समुद्रवेला भाति । भानहेतुगर्भं विशिनष्टि— रत्नानां मुक्तादीनां द्युतिभिः बहुप्रकाराभिः रञ्जिता लिप्ता । कबलिताः चर्विताः लवङ्गपल्लवाः द्वीपान्तरोद्भवाः समुद्रोद्भवा वा यैः, तेषां करिमकराणामुद्गारेण चर्वितपल्लवसौरभमिलिततृप्तिवायुसम्मेल(ने)न सुरभिणा पयसा उपलक्षिता । इदमसाधारणं विशेषणं वेलात्वज्ञापकम् । पयसा भातीति करणत्वे भानान्तरङ्गं हेतुगर्भं विशेषणं वेलासम्बद्धत्वेन न घटते । अत्र वेलेति वेलागमजनितशोभां तटभुवमपि वक्तुं शक्यम् ॥ ४ ॥

एवं प्रसङ्गागतं वेलावलोकनं प्रतिपाद्य साध्यानुगुणं वस्तु प्रस्तौति—

"ददर्श तत्र शिखराकारतारास्थिसञ्चयम् ।
युगक्षये महाभूतकरङ्कैरिव पूरितम् ॥
किमेतदिति तेनाशु पृष्टो मित्रावसुस्ततः ।
उवाच गरुडेनात्र भक्षिता भुजगोत्तमाः ॥

---

१. 'द्धं न घ' घ. ङ. च. पाठः.

**नायकः**— मित्रावसो! पश्य शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्यचलसानवः ।

**मित्रावसुः**— कुमार! नैवामी मलयसानवः । नागानामस्थिसङ्घाताः खल्वेते ।

**नायकः**— (सोद्वेगम्)[1] कष्टं, किन्निमित्तं पुनरमी सङ्घातमृत्यवो जाताः ।

सर्वभक्षभयात् तार्क्ष्यस्ततो वासुकिनार्थितः
विसृष्टस्तेन वारेण तदैकं नागमत्त्यसौ ॥
अयमस्थिचयस्तेषामद्रिकूटसमुच्छ्रितः ।
उक्त्वेति जनकाहूतस्तूर्णं मित्रावसुर्ययौ ॥
जीमूतवाहनोऽप्येकः सर्वेषु करुणालयः ।
चचार तत्र संसारं निस्सारं कलयन् धिया ॥"

इति क्षेमराजकथानुसारेण । मित्रावसो! पश्येति । शरत्समयेत्यादिना विपर्ययज्ञानस्य दार्ढ्यमुपपादयति । मलयसानुत्वबोधेन तत्र तत्र प्रचुरत्वम् । एवं निश्चितस्य विपर्ययस्य अधिष्ठानबोधे तन्निष्ठं प्राचुर्यं दयोद्दीपकत्वेन प्रकृताध्यवसायपरिपोषकमिति तथोपक्रमः ॥

तद्भ्रमं निरस्यति— नैवामी मलयसानव इति । किं तर्हीत्यत्राह — नागानामस्थिसङ्घाताः खल्विति । प्रसिद्ध एवायमर्थः चिरन्तनत्वादिति खलुशब्देन द्योतितम् । मेघावृतत्वभ्रमोऽस्थिनिर्देशेनैव निरस्त इति अस्थिसङ्घाता इत्येवोक्तम् ॥

एवं भ्रमापगमेऽहिंसाधनस्यास्थिनिमित्तं निधनं निरूप्य उद्वेगः परिखेदेन जातः । तद्गर्भत्वेन प्रश्नः । सङ्घातमृत्यवः युगपदवाप्तमरणाः । अन्यथा कथमेवं तत्र तत्रास्थिसञ्चया इति भावः ॥

१. 'सावेगम्' ख. ग. पाठः.

मित्रावसुः — कुमार! कुमार! नैवामी सञ्जातमृत्यवः।

नायकः — मित्रावसो! किमन्यत्।

मित्रावसुः — श्रूयतां — पुरा किल स्वपक्षपवनापास्तसागरजलस्तरसा रसातलादुद्धृत्य भुजङ्गमाननुदिनमाहारयति स्म वैनतेयः।

नायकः — (सोद्वेगम्) कष्टम्, अतिदुष्करं करोति। ततस्ततः।

मित्रावसुः — ततः सकलनागलोकविनाशशङ्किना नागराजेन[1] गरुत्मानभिहितः।

---

नैवामीति निषेधः प्रकारान्तरजिज्ञासोत्थापनाय ॥

अत एव किमन्यदिति प्रश्नः। एवं सञ्चये निमित्तमिति शेषः॥

अस्योत्तरमाह इतिहासमुखेन। श्रूयतामिति कथनोपक्रमः। पुरा किलेत्यादि। पुराशब्देन दीर्घकालारब्धत्वम्। किलेति वार्तायाम्। स्वपक्षेत्यादिना अनिवार्यत्वम्। अनुदिनमित्यनेन अनेकदिनानि तथाप्रवृत्तत्वं प्रकाशितम्। आहारयति चौरादिको हृञ्। आहारं करोतीति वा 'तत्करोती'ति णिच्। वैनतेय इत्यनेन वैरनिमित्तं मातुर्दास्यादिकं ध्वनितम्॥

कष्टमिति तत्प्रवृत्तावयोग्यतया। अत एवातिदुष्करमित्युक्तम्। अयोग्यतया कृच्छ्रेण क्रियमाणमनुपपन्नमित्यर्थः। ततस्तत इति। अतः परमप्यत्याहितमस्ति किमित्यनिच्छया प्रश्नः॥

नागराजेनेति शङ्कौचित्यम्॥

---

१. 'न वासुकिना ग' ख. ग. च. पाठः.

**नायकः**—(सादरम्) किं मां[2] भक्षयेति ।

**मित्रावसुः**—नहि नहि ।

**नायकः**[3]—किमन्यत् ।

**मित्रावसुः**—इदमुक्तं[4]—त्वदभिसम्पातत्रासात् सहस्रशः स्रवन्ति भुजङ्गाङ्गनानां गर्भाः । शिशवश्च पञ्चत्वमुपयान्ति । एवञ्च सन्ततिसमुच्छेदादस्माकं तवैव स्वार्थहानिर्भवेद्, यदर्थमभिपतति भवान् पातालम् । तदेकैकं भुजङ्गमानामनुदिवसं समुद्रतटस्थितस्याहमेव प्रेषयिष्यामीति[6] । प्रतिपन्नं च तत् पक्षिराजेन ।

---

किं मां भक्षयेतीति मध्ये आक्रम्य कथनम् एवं वक्तुमेव योग्यं नान्यथेति बुद्ध्या ॥

तद्विपर्ययमालम्ब्याह — नहि नहीति । वीप्सयातिविपर्ययो द्योत्यते ॥

किमन्यदिति अनौचित्यकलङ्कितस्य पक्षान्तरस्याप्रतिभानात् ॥

इदमुक्तमिति । वैनतेयं प्रतीति शेषः । त्वदभिसम्पातनिमित्तेन त्रासेन गर्भाः स्रवन्ति । शिशवश्च पञ्चत्वमुपयान्ति । तिष्ठतु भक्षितानां विनाशः, बीजवापनाशेन सन्ततिसमुच्छेदे त्वदभिप्रायविरोध एवास्माभिर्निरूप्यते । स्वसन्ततिच्छेदपरिजिहीर्षयायं वदतीति बुद्धिं मा कृथा इत्यर्थः । यदर्थमिति साध्यनिर्बन्धं प्रकाशयति । एवं निर्बन्धे सिद्धे त्वदभिप्रायानुगुणमुपायं कल्पयामीति भेदप्रयोगः समुद्रतटस्थितस्येति । प्रेषयिष्यामि, नात्रागन्तव्यमिति शेषः । प्रतिपन्नं च अङ्गीकृतं च । तद् वचनम् ।

---

१ 'कः — किं'. २. 'मां प्रथमं भ' ख. ग. च. पाठः. ३. 'कः — मित्राव- सो ! किं' ख. ग. घ. पाठः. ४. 'क्तं च — त्व' ख. ग. पाठः. ५. 'कम' घ. पाठः. ६. 'ति । ना' इति मूलकोशपाठः.

इत्येकशः प्रतिदिनं विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ५ ॥

**नायकः**—कष्टं, रक्षिताः किलैवं नागराजेन पन्नगाः।

जिह्वासहस्रद्वितयस्य मध्ये
नैकापि सा तस्य किमस्ति जिह्वा।
एकाहिरक्षार्थमहिद्विषोऽद्य
दत्तो मयात्मेति[1] यया ब्रवीति ॥ ६ ॥

---

इतीत्यादि। इतिहासस्य प्रकृतेन योजनम्। इति उक्तप्रकारेण विहितकर्तव्यमर्यादः पतगाधिराजः। यानहिपतीन् प्रतिदिनमेकैकशो भक्षयतीति व्यवस्थापितानुष्ठानप्रकारः। तेषाममी अस्थिकूटा इति सम्बन्धः। तुहिनशैलरुच इति 'प्रालेये'ति भ्रमस्य योग्यताकथनं, कूटशब्देन मलयशिखरभ्रमस्य। अस्थिकूटानां क्रमवृद्धिं प्रतिपादयति— दिनैर्भाविभिर्वर्तमानैर्भूतैश्चेति। यास्यन्ति यान्ति च याताश्चेत्यवचनं वृत्तनिर्वहणार्थम्। एते यास्यन्तीत्यादि च विधेयं कालत्रयेऽप्यस्य विपर्ययो न ज्ञायत इति नायकोत्साहोद्दीपनरूपतया पर्यवस्यति ॥ ५ ॥

तदुक्तमनादृत्याह— कष्टमिति। अतितुच्छमभिहितमिति शेषः। रक्षिताः किलेति, अपरमार्थमिदम्। रक्षेति भ्रमः। निग्रहक्लृप्तिरेव कृतेत्यर्थः। नागराजेन स्वामित्वाभिमानिना। पन्नगाः स्ववर्ग्या इत्यनौचित्यातिशयः प्रकाशितः।

औचित्ये सति तदनुष्ठानं प्रतिक्षिपति — जिह्वेत्यादि। सहस्र-

---

१. 'ति ॥ **मित्रावसुः** प्रतिपन्नं च तत् पक्षिराजेन।
इत्येकशः प्रतिदिनं विहितव्यवस्थो यान् भक्षयत्यहिपतीन् पतगाधिराजः।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥
**नायकः** — आ' इति मूलकोशपाठः. २. 'वंश्या इ' च. पाठः.

आश्चर्यमाश्चर्यम् ।

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ७ ॥

द्वितयस्य शिरःसहस्रेषु औचित्यविरोधेन वृथा द्वन्द्वशः स्थितस्य । मध्ये, सर्वासामेकवाक्यता युक्ता, तत् तिष्ठतु । सा औचित्यानुसारिणी एकापि विधेया किं नास्ति । अद्य अस्मिन् दिने । तिष्ठत्वतीतानागतदिनप्रवृत्तिः । एकस्य अस्मिन् दिने नियोक्तव्यस्य रक्षार्थं तां प्रयोजनीकृत्य मया आत्मा दत्तः । इतीति उक्तप्रकारोपसंहारे । अहिद्विप इत्यनेन सर्वेषां रक्षणस्याशक्यता प्रकाश्यते । यया ब्रवीति, एकैकं प्रेषयिष्यामीत्यन्यासां पामरीणामुक्त्यविरोधेन उचितवादिनी जिह्वा किमेकापि नास्ति । जिह्वेति वागिन्द्रियस्योपलक्षणम् । स्वदेहत्यागं विनान्येषां विसर्जनमस्यात्यन्तमनुपपन्नमेवेति भावः ॥ ६ ॥

एवमितिहासरूपेण गरुडस्य हिंसानिर्बन्धे श्रुते तन्निरासार्थं विरागमूलं नित्यानित्यवस्तुविचारमवलम्ब्य सामान्येन मूढानां प्रवृत्तिं निरस्यति — आश्चर्यमाश्चर्यमिति । आश्चर्यान्तरमेव नास्ति । पुनरप्येतदेवेत्यर्थः ।

तत् साधयति — सर्वेत्यादि । शरीरकस्यापि स्वतो विशरणस्वरूपस्य । कुत्सायां कन् । अपीति । यद्यन्यार्थः[1] कश्चिद् गुणोऽपि निरूप्यते, तन्नेति गर्हापरिपोषः । कृते पोषणादिकार्यं[2] निमित्तीकृत्य[3] । मूढाः विचित्ताः विवेकशून्या जन्तवः । पापानि हिंसास्तेयपरदारगमनादीनि । कुर्वते, कर्तुः क्रियाफलविवक्षायामात्मनेपदम् । नित्यमेव वर्तमानेयमधर्मप्रवृत्तिर्नोच्छेद्या इत्याश्चर्यबुद्धिः । शरीरस्य कुत्स्यत्वमेव बहुधा निरूपयति — सर्वाशुचीति । सर्वस्य पूर्णस्य अशुचिनः अशुचित्वस्य । धर्मप्रधानो निर्देशः । निधानस्य निधीयतेऽस्मिन्निति व्युत्पत्त्या नित्याश्रयस्य । अशुचित्वं पूर्णमत्रैवेत्यर्थः । अथवा सर्वेषामशुचीनां विण्मूत्रशुक्रमांसरुधिररोमनखादीनामेकाश्रयस्य । सर्वेति, अन्यत्र वस्तुन्यशुचीनां नैवं सम्भूयस्थितिरिति व्यतिरेको हेयतासमर्थकः । गुणान्तरेषु सत्सु तत्सम्बन्धेनायं

१. 'म् स' क. पाठः. २. 'र्थं' क. पाठः. ३. 'त्येत्यर्थः । मू' क. पाठः.

कष्टम्, अनवसानेयं विपत्तिर्नागानाम्[1]। (आत्मगतम्) अपिनाम शक्नुयामहं स्वशरीरदानादेकस्यापि फणभृतः परिरक्षां कर्तुम्।

(ततः प्रविशति प्रतीहारः।)

प्रतीहारः — आरूढोऽस्मि गिरिशिखरम्। (विलोक्य)

---

दोषः सह्यते। तन्नेत्याह — कृतघ्नस्य। 'कृतघ्ने नास्ति निष्कृतिः' इत्युक्तत्वात् तादृशस्य दोपराजस्य प्रथमाश्रयस्य। सायमाशाभावे प्रातराशकृतं पोषमनादृत्य शोषं प्रयाति, सर्वदा घृताप्लुते भोजने सिद्धे एकवारमन्यथात्वे पूर्वफलमुत्तरफलेन निरस्यतीत्यादि सर्वत्र कृतघ्नता। तथापि आकल्पमवतिष्ठते चेत् कोऽपि गुणः इत्यत्राह — विनाशिनः नित्यनश्वरस्य॥ ७॥

एवं सामान्येन गरुडस्य हिंसानिर्बन्धं समर्थ्य तत्फलं दयालुतयात्मनोऽरुन्तुदत्वेनापरिहार्यतया प्रतिपादयति — कष्टम् अस्माकमपि खेदावहमिदं व्यसनम्। अनवसाना वैरमूलत्वात् परिकल्पितत्वाच्च। एवं प्रासङ्गिकं परिसमाप्य स्वाध्यवसायनिर्वहणसामर्थ्यं दैवप्रार्थनागर्भं सम्प्रधारयति — अपिनामेति दैवप्रार्थनायाम्। शक्नुयामहम्। अत्र शक्तिरस्ति वा नवा। सर्वथा दैवमभिमुखमस्तु, शक्तिरपि तदनुसारिणीत्याशंसागर्भोक्तिः। स्वशरीरेति। ममत्वभावनाया इदमेव फलमिति भावः। एकस्यापीति। तिष्ठतु सर्वेषां परिरक्षा, अशक्यत्वाद्, न त्वयोग्यत्वात्। स्वदेहविनिमयेनैकदिनभोज्यं रक्षितुं यदि दैवं घटयति, सफलोऽस्माकं देहलाभ इति सत्त्वाध्यवसायोत्थापितो यावत्साध्यं वर्तमान उत्साहोऽनुसंहितः॥

एवमध्यवसितस्य प्रवृत्तये द्वारमुद्घाटयति सुहृद्विश्लेषहेतुना प्रतिहारप्रवेशेन। आरूढोऽस्मीति विष्कम्भे प्रसक्तत्वात् प्रवृत्तिमात्रकथनम्।

---

१. 'मापतिता। (आ' क. पाठः.

अये मित्रावसुर्जामातुः समीपे वर्तते । यावदुपसर्पामि । (उपसृत्य प्रणम्य) विजयेतां कुमारौ ।

**मित्रावसुः** — सुनन्द! किन्निमित्तमिहागमनम्।

**प्रतीहारः** — (कर्णे) एवम् ।

**मित्रावसुः** — कुमार! तातो मामाह्वयते[2] ।

**नायकः** — गम्यताम् ।

**मित्रावसुः** — कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे कुतूहलान्न[3] चिरं स्थातव्यम् ।

(निष्क्रान्तो मित्रावसुः प्रतीहारश्च।)

**नायकः** — यावदहमपि गिरिशिखरादवतीर्य समुद्रतटमवलोकयामि । (परिक्रामति ।)

---

जामातुः समीप इति सौहार्दादरः समुदाचारलाघवनिरूपणं च स्फुरति । अत एव विजयेतामित्यपृथगुक्तिः ॥

इहेति क्रीडाभूमौ । आगमने आवश्यकत्वमाशङ्क्य प्रश्नः ॥

तदेव कर्णे कथयति[1] । पूर्वं कञ्चुकिसंवादेन सिद्धमेवमिति सङ्गृह्यते ॥

तदुक्तं लेशतो बोधयति — तातो मामाह्वयत इति । तात इत्यवश्यगन्तव्यत्वम् ॥

अत एव गम्यतामित्यनुवादः ॥

गम्यतामित्युक्ते सहगमनमनिष्टं मत्वा तदिच्छानुसारेण प्रत्यवायपरिहारार्थमाह — बहुप्रत्यवाये अनर्थबहुले । अत एव न चिरं स्थातव्यम् । स्थितौ हेतुः — कुतूहलादिति ॥

एवं तद्गमनेन कृतार्थः स्वाध्यवसायानुगुणमाह — यावदित्यादि । यावदित्यध्यवसाये । समुद्रतटमवतीर्यावलोकयामि । वेलामिति शेषः । अवलोकयामि अन्विच्छामि प्रकृतनिर्वहणोपायमिति च वक्तृप्रकरणसाचिव्येन द्योत्यते ॥

---

१. 'रः कर्णे कथयति ।', २. 'ति', ३. 'न्नैव चिरमवस्था' इति मूलकोशपाठः.

(नेपथ्ये)

(क) हा पुत्तअ! सङ्खचूळ! कहं वावादिअमाणो किळ अज्ज तुवं मए पेक्खिदव्वो।

**नायकः —** (आकर्ण्य) अये योषित इवार्तप्रलापः। तद् यावदुपेत्य[1] केयं कुतोऽस्या[2] भयकारणमिति स्फुटीकरोमि। (परिक्रामति।)

---

(क) हा पुत्र! शङ्खचूड! कथं व्यापाद्यमानः किलाद्य त्वं मया द्रष्टव्यः।

---

अथ चूलिकया पात्रप्रवेशं सूचयति — हा पुत्रेत्यादि। कथमिति, कथमेवं जातम्। व्यापाद्यमानः किल वध्यमानः त्वं मयेत्यत्यन्तानौचित्यम्। किलेति वार्तामनुसृत्य॥

एवमार्तनादं श्रुत्वा विमृशति — अये इति अकाण्डे आर्तनादश्रवणसम्भ्रमवशात् तदनुसन्धानद्योतकमव्ययम्।

"अये क्रोधे विषादे च सङ्भ्रमे स्मरणेऽपि च"

इत्युक्तम्। योषित इवेति, पुत्रेत्यादिश्रवणात्। इवेत्यनिश्चितस्वरूपत्वात्। अत एवाह — तद्यावदिति। यावदित्यध्यवसाये। योषित्सम्बन्धित्वमार्तनादरूपत्वं च सिद्धम्। अतः एतदसहिष्णुतया उपेत्येति सम्भ्रमः। केयमित्यादि जिज्ञासितांशनिर्देशः। भयकारणमिति आर्तनादहेतुत्वेन कल्पितम्। अस्मिन् प्रकरणे —

"ततो ददर्श करुणाक्रन्दशुष्काधराननाम्।
वृद्धाङ्गनां कुमारेण सान्त्व्यमानां मुहुर्मुहुः॥
तं वीक्ष्य तनयं वृद्धा विललापाश्रुगद्गदम्।
हा पुत्र! नयनानन्द! सौन्दर्यामृतदीधिते! ॥

---

१. 'पसृत्य', २. स्याः प्रतिभयमि' इति मूलकोशपाठः.

(ततः प्रविशति क्रन्दन्त्या वृद्धयानुगम्यमानः शङ्खचूडो गोपायितवस्त्रयुगलः किङ्करश्च ।)

**वृद्धा** — (सास्रम्) (क) हा ! पुत्तअ ! शङ्खचूळ ! कहं वावादिअमाणो किळ अज्ज तुवं मए पेक्खिदव्वो । (चिबुके गृहीत्वा) इमिणा मुखचन्देण विरहिदं अन्धआरीभविस्सदि पाआळं ।

**शंखचूडः** — अम्ब ! किमेवमतिविक्लबा सुतरामात्मानं पीडयसि ।

**वृद्धा** — (निर्वर्ण्य पुत्रस्याङ्गान्यामृशन्ती) (ख) हा ! पुत्तअ ! कहं दे अदिट्ठसूरसुउमारं सरीरं णिग्घिणहिअओ गळुळो आहारयिस्सदि । (कण्ठे गृहीत्वा रोदिति ।)

**शंखचूडः** — अम्ब ! अलमलं परिदेवितेन । पश्य,

---

(क) हा पुत्रक ! शङ्खचूड ! कथं व्यापाद्यमानः किलाद्य त्वं मया प्रेक्षितव्यः । अनेन मुखचन्द्रेण विरहितमन्धकारीभविष्यति पातालम् ।

(ख) हा पुत्रक ! कथं ते अदृष्टसूर्यसुकुमारं शरीरं निर्घृणहृदयो गरुड आहारयिष्यति ।

---

शङ्खपालमहावंशव्यक्तमुक्तामणिद्युते ! ।
हा शङ्खचूड ! लावण्यनिधानमिव ते वपुः ॥
पुनर्गरुडचञ्च्वग्रवज्रपातसहं कथम् ।"

इत्यादिक्षेमराजकथानुसारेण प्रस्तुतघटनयत्नः । मातुः शोकभारमालक्ष्य वस्तुविचारेण शमयति शङ्खचूडः — अलमलमिति । अनुवर्तनाय पुनः पुनः कथनम् । परिदेवितेन प्रलापेन । वैयर्थ्यादयोग्यत्वाच्चेत्यर्थः । अयोग्यत्वं समर्थयति — पश्येति । न केवलं मन्निर्दन्धेन, स्वयमेव चापलं विमुच्य निरूपयेत्यर्थः ।

क्रोडीकरोति प्रथमं जातं नित्यमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥ ८ ॥

**वृद्धा —** (क) हा! पुत्तअ! चिट्ठ । मुहुत्तअं पि दाव वदनं दे पेक्खिस्सं ।

**किङ्करः —** (ख) एहि कुमाळ! । किं तव एताए भणन्तीए । पुत्तशिणेहमोहिदा क्खु एशा ण ळीअकज्जं जाणादि ।

(क) हा पुत्रक! तिष्ठ । मुहूर्तमपि तावद् वदनं ते प्रेक्षिष्ये ।

(ख) एहि कुमार! । किं तवैतया भणन्त्या । पुत्रस्नेहमोहिता खल्वेषा न राजकार्यं जानाति ।

क्रोडीकरोति स्वीकरोति, आक्रामतीत्यर्थः । प्रथमं मातुरिति शेषः । जातं गर्भाशयान्निष्क्रान्तम् । सामान्यापेक्षया विशेष्यानिर्देशः । जन्तुमात्रम् । 'जातस्य हि ध्रुवो मृत्युः', 'यज्जायते तन्नश्यती'त्याप्तवचनात् प्रत्यक्षसिद्धत्वाच्च दुर्ज्ञेयो नायमर्थः । नित्यं सदा । आसृष्टेर्नियमितोऽयमर्थः । न ममैकस्यैव कल्पित इत्यर्थः । अनित्यता नश्वरत्वम् । अनित्यतेति शब्दं स्त्रीत्वमनुसृत्य दृष्टान्तो धात्रीवेति । यथा जन्मनि प्रसवशूलेन मातरि मूर्छितायामुपमाता प्रथमं बालं गर्भाशयान्निष्क्रमणसमय एव स्वहस्तेन सन्धार्य गर्भक्लेदाद्यपनयेन मातुः प्रबोधं यावद् धारयति, तथा अनित्यता प्रथममाक्रामति, पश्चाज्जननी स्वाङ्कस्तनतटादिषु निदधाति । तदा तदित्यर्थः । जातस्य जन्तोरनित्यताया निश्चितत्वात् ।

"क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ"

इत्युक्तत्वाद् इयन्तं कालं जीवनं प्रति कृतार्थता युक्ता । नेदानीं शोकः । कः क्रमः परिपाटी, इदानीं शोको युक्तो न पूर्वमिति । वस्तुविचारे न शोकः । प्राप्तानुसरणमेव युक्तम् । अन्यथा जन्मन आरभ्य शोचितव्यम् । तच्छोकं मा कृथा इत्यर्थः ॥ ८ ॥

१ 'णा', २. 'णपरत्वमे' क. पाठः.

**शंखचूडः** — भद्र ! अयमहमागच्छामि ।

**किङ्करः** — (आत्मगतम्) (क) आणीदो क्खु मए वज्झशिळाशमीवं शङ्खचूळो । जाव एदं वज्झचिण्हं ळत्तंसुअजुअळं दइअ वज्झशिळं दंशेमि ।

**नायकः** — अये इयमसौ योषित् । (शङ्खचूडं दृष्ट्वा) नूनमनेनाप्यस्याः सुतेन भवितव्यं, यदर्थमाक्रन्दति । (समन्तादवलोक्य) न खलु पुनः किञ्चिद् भयकारणं पश्यामि । तत कुतोऽस्य भयं भविष्यतीति किमुपेत्य पृच्छामि । अथवा प्रसक्त एवायमालापः । कदाचिदित एव व्यक्तिर्भविष्यति । तद् विटपान्तारितस्तावच्छृणोमि ।

---

(क) आनीतः खलु मया वध्यशिलासमीपं शङ्खचूडः । यावदेतद् वध्यचिह्नं रक्तांशुकयुगलं दत्त्वा वध्यशिलां दर्शयामि ।

---

इयमसाविति । पूर्वं जिज्ञासितस्यैकदेशः सिद्धः । इयमिति परिदृश्यमानाम् असाविति आर्तनादेन बुद्धौ सन्निधापितां चैकीकृत्य निर्देशः । मया निरूपितेयमित्यर्थः । अस्याः सुतेनेति । पुत्रेत्यादिप्रलापेनैतन्निमित्तमाक्रन्दनम् इति च सिद्धम् । आक्रन्दति उच्चै रोदिति । रोदनस्यान्यथानुपपत्त्या भयं च कल्पितम् । तत्कारणं न पश्यामि । परदुःखदुःखितया सम्भ्रमेणाह — किमुपेत्येति । अथवेति प्रश्ने । गोपनादिकमपि क्रियेत, तत्तटस्थवृत्त्या वस्तुनिर्णयः सुकरः इति विचारः । प्रसक्त एव प्रारब्ध एव । श्रुतेन ज्ञातुं शक्यम् । तद् इत एव आलापादेव । प्रश्नं विनेति शेषः । व्यक्तिः स्फुटता । भयकारणस्येति शेषः । विटपान्तरित इति विस्रब्धभाषणस्यावसरदानाय । अस्य वस्तुसिद्धये करुणप्रकर्षेणाध्यवसायस्थैर्याय च तद्वचोविस्तरः ॥

किङ्करः — (सास्रं कृताञ्जलिः) (क) कुमाळ! शङ्खचूळ! एशो शामिणो आदेशो त्ति कळिअ ईदिशं पि णिट्ठुळं मन्तीअदि।

शंखचूडः — भद्र! कथय।

किङ्करः — (ख) णाअळाओ वाशुई[1] आणवेदि।

शंखचूडः — (शिरस्यञ्जलिं कृत्वा सादरम्) किं मामाज्ञापयति स्वामी।

किङ्करः — (ग) एदं ळत्तंसुअजुअळं पळिहिअ आळोह वज्झशिळं, जेण ळत्तंशुअचिण्होवळक्खिदं गळुळो गण्हिअ आहाळकळणाअ णइश्शदि।

नायकः — (सास्रम्) कष्टमसौ वासुकिना परित्यक्तस्तपस्वी।

किङ्करः— (घ) शङ्खचूळ! गण्ह एदं[2]। (वस्त्रयुगलमर्पयति।)

(क) कुमार! शंखचूड! एष स्वामिन आदेश इति कृत्वेदृशमपि निष्ठुरं मन्त्र्यते।

(ख) नागराजो वासुकिराज्ञापयति।

(ग) एतद् रक्तांशुकयुगलं परिधायारोह वध्यशिलां, येन रक्तांशुकचिह्नोपलक्षितं गरुडो गृहीत्वाहारकरणाय नेष्यति।

(घ) शङ्खचूड! गृहाणैतत्।

कष्टमसाविति पूर्वश्रुतस्यानुसन्धानम्॥

१. 'ई शामी आ' क. पाठः. २. 'दं। शं' ग. पाठः.

**शंखचूडः**—(सादरम्) उपनय । (इति गृहीत्वा शिरसि स्वाम्यादेशमर्पयति ।)

**वृद्धा**—(पुत्रहस्ते वाससी दृष्ट्वा सोरस्ताडनं) (क) हा वच्छ! एदं क्खु तं वज्झचिण्हं वसणं, जेण भाएदि मे हिअअं । (मोहमुपगता ।)

**किङ्करः**—(ख) आशण्णा क्खु गळुळस्स आगमणवेळा । ता ळहु अवक्कमामि । (निष्क्रान्तः ।)

**शंखचूडः**—अम्ब! समाश्वसिहि समाश्वसिहि ।

**वृद्धा**—(समाश्वस्य, सास्रं) (ग) हा जाद! हा पुत्तअ! हा मणोरहसदळद्ध! कहिं तुमं पुणो पेक्खिस्सं । (कण्ठे गृहीत्वा रोदिति ।)

**नायकः**—(सास्रम्) अहो! नैर्घृण्यं गरुत्मतः । अपिच

**मूढाया मुहुरश्रुसन्ततिमुचः कृत्वा प्रलापान् बहून्**
**कस्त्राता मम पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम् ।**

---

(क) हा वत्स! एतत् खलु तद् वध्यचिह्नं वसनं, येन बिभेति मे हृदयम् ।

(ख) आसन्ना खलु गरुडस्यागमनवेला । तल्लघ्वपक्रामामि ।

(ग) हा जात! हा पुत्रक! हा मनोरथशतलब्ध! कुत्र त्वां पुनः प्रेक्षिष्ये ।

---

सास्रमिति दुःखानुवेधेन स्वयमश्रुमोचनम् । अस्य च वागारम्भानुभावः अहो इति । क्रूरतया आश्चर्यावहमित्यर्थः । अपिचेति हिंसानिर्बन्धेन निर्दयत्वं निश्चितम् । एतदवस्थयायमपि विशेषोऽत्र स्फुरतीत्यर्थः । तं प्रतिपादयति—मूढाया इत्यादि । मूढायाः विचित्तायाः । पुत्रस्नेहेन

---

१. 'ह्नः (सानुशयं) अ' क. पाठः.

अङ्के मातुरुपाश्रितं शिशुमिमं त्यक्त्वा घृणामश्नत-
श्चञ्चुर्नैव खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥ ९ ॥

शंखचूडः—(अम्बाया अश्रूणि परिमार्जयन्) अम्ब! अलमलं वैक्लव्येन। ननु समाश्वसिहि समाश्वसिहि।

---

भ्रान्तचित्तायाः। मुहुः न त्वेकवारं, पुनः पुनः शोकोज्जृम्भणानुसारेणाश्रुप्रवाहमुचः। कृत्वा प्रलापान् बहून् बहुप्रकारान् दुःखार्णवकल्लोलायमानान् सम्पाद्य। कस्त्राता मम पुत्रक! मत्सम्बन्धी त्वमेक एव पुत्रो जातः। अतोऽनुकम्पनीय इति ममतानिर्बन्धः। कस्त्राता, आवयोरिति। अथवा को मम त्राता तव जीवितदानादिति। उक्त्वेति शेषः। कृपणं दीनं दिक्षु दृशं क्षिपन्त्याः प्रेरयन्त्याः त्रातारमपेक्ष्य तत्र तत्रावलोकयन्त्या इत्यर्थः। अङ्के उत्सङ्गे, नतु परोक्षम्। उपाश्रितं स्वयमपि मातृस्नेहपरवशं विश्लेषानभिज्ञम्। शिशुं न प्रौढम्। इममिति दर्शनप्रियम्। साभिप्रायैर्विशेषणैर्घृणापरिपोषस्यैव युक्तता प्रकाश्यते। एवं स्थितेऽपि घृणा त्यक्त्वा दूरे निरस्य। अश्नतः मृष्टान्नमिव भुञ्जतः आसन्नत्वाद् वर्तमाननिर्देशः। खगाधिपस्य गरुत्मतः। हृदयं वज्रेण कृतं वज्रमस्योपादानकारणं निमित्तबलात् कल्प्यते काठिन्यातिशयेन। अन्यथा कथमेवमवस्थस्याशनं जाघटीति। घृणाया एव योग्यता। ततश्च चित्तस्यार्द्रत्वं, ततो विरुद्धाचरणानुपपत्तिः। अतश्चित्तकाठिन्यमेव विरुद्धाचरणे निमित्तम्। अत एवं सम्भाव्यते इत्याह—मन्य इति। अतोऽतिकाठिन्याद् घृणाप्रवेश एव न घटते। त्यक्त्वेति प्रध्वंसकथनं लोकदृष्ट्येत्यर्थः। चञ्चुर्नैवेति। अस्य चञ्चुर्वज्रसारेति प्रसिद्धिमात्रम्। वस्तुतो वज्ररूपत्वं हृदयस्येत्यर्थः। इयं तत्कर्मणि वैराग्यगर्भोक्तिः॥ ९ ॥

---

१. 'वृ०:—(दुःखातिशयान्मातुर्हृदयस्फोटं शङ्कमानो मातरं प्रति)
यैरत्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता
मातः! संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते॥
(हस्तेन मातुरश्रूणि परिमार्जयन्)' इति मुद्रितकोशपाठः.

**वृद्धा** — (सास्रम्) (क) पुत्तअ! कहं समस्ससिमि। किं एकपुत्तो त्ति किदाणुकम्पेण णिवत्ताविदो सि णाअळाएण। हा कदन्तहदअ! कहं दाणि तुए णिग्घिणहिअएण एव्वं वित्थिण्णे जीवळोए मम पुत्तओ एव्व सुमरिदो। सव्वहा हदाह्मि मन्दभाइणी। (मूर्छां नाटयति।)

**नायकः** —

आर्तं कण्ठगतप्राणं परित्यक्तं स्वबान्धवैः।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः॥ १०॥

तद् यावदुपसर्पामि।

**शंखचूडः** — अम्ब! संस्तम्भयात्मानम्।

---

(क) पुत्रक! कथं समाश्वसिमि। किमेकपुत्र इति कृतानुकम्पेन निवर्तितोऽसि नागराजेन। हा कृतान्तहतक! कथमिदानीं त्वया निर्घृणहृदयेनैवं विस्तीर्णे जीवलोके मम पुत्रक एव स्मृतः। सर्वथा हतास्मि मन्दभागिनी।

---

एवं तस्या मूर्छापर्यन्तं करुणप्रकर्षं दयोद्दीपकत्वेनावलम्ब्य स्वाध्यवसायं व्यतिरेकमुखेन समर्थयति — आर्तमित्यादि। आर्तं सर्वप्रकारेण दुःखपीडितम्। कण्ठगतप्राणं आसन्नमरणम्। परित्यक्तं निरस्तम्। स्वबान्धवैः सम्बन्धिभिः। स्वशब्देन परित्यागस्यात्यन्तानौचित्यं प्रकाश्यते। (न) त्राये न रक्षामीति। अयमेव रक्षाकालः। कालात्यये व्यर्थ एव मनोरथः इत्युद्यमातिशयो वर्तमाननिर्देशेन प्रकाशितः। यदीत्यकरणेऽनिष्टकथनम्। कः, न कोऽपीत्यर्थः। शरीरेण विशरणस्वभावेन, यः स्वतो निर्गुणेनाशनादिसम्भृतेन गुणः अनुग्रहः। एतदकरणे निष्फलमेव विशीर्यते। तद् एतत्त्राणे एतच्छरीरं साधनीकृत्य अस्य साफल्यं परार्थसम्पादनरूपं प्रयोजनं च साधयामि इत्यध्यवसायः स्थिरीकृतः॥ १०॥

तद्यावदिति तदुपक्रमः॥

**वृद्धा** — (क) हा पुत्तअ! संखचूळ! दुळ्ळहो सत्थंभो। जदा एव्व णाअळोअपरिरक्खएण वासुइणा सअं परिच्चत्तोऽसि, तदा को दे परित्ताणं करिस्सदि।

**नायकः** — (उपसृत्य) नन्वयमहम्।

**वृद्धा** — (ससम्भ्रममुत्तरीयेण पुत्रमाच्छाद्य नायकमुपसृत्य) (ख) गळुळ! विणदाणन्दण! वावादेहि मं। अहं दे आहारणिमित्तं परिकप्पिदा।

**नायकः** — (सास्रम्) अहो पुत्रवात्सल्यम्।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लबत्वमिदम्।
अकरुणहृदयः करुणां कुर्वीत भुजङ्गशत्रुरपि॥ ११॥

(क) हा पुत्रक! शङ्खचूड! दुर्लभः संस्तम्भः। यदैव नागलोकपरिरक्षकेण वासुकिना स्वयं परित्यक्तोऽसि, तदा कस्ते परित्राणं करिष्यति।

(ख) गरुड! विनतानन्दन! व्यापादय माम्। अहं ते आहारनिमित्तं परिकल्पिता।

कस्त्राणं करिष्यतीति प्रस्तावे अयमहमिति। त्राणं करोमीति शेषः। वाक्यस्यासकलोक्त्या निःसन्दिग्धत्वे सूचितम्॥

अहो पुत्रवात्सल्यमिति। अन्यासां नैवं दृष्टमित्यतिशयः॥

तेन शङ्कते — अस्या इति। पुत्रस्नेहेन हेतुना विक्लबत्वं व्याकुलत्वं तत्कार्यभूतानि त्रासरोदनप्रलापादीनि विलोक्य मन्ये इदानीमन्यथा शङ्के। पूर्वमेतद्भक्षणाध्यवसायेन गरुत्मतो नैर्घृण्यं शङ्कितम्। इदानीमस्याश्चापलातिशयं दृष्ट्वा हठात् तच्चित्तमप्येषा द्रावयतीति शङ्के इत्यर्थः। अकरुणहृदयः पूर्वं निरूपितप्रकारेण। अपीत्यत्रापि युज्यते। भुजङ्गशत्रुरिति, वैरस्यापि

१. 'हा दुक्कहळ्द्ध! पु' क. पाठः.

**शंखचूडः—अम्ब! अलमलं त्रासेन। न खल्वयं नागशत्रुः। पश्य,**

**महाहिमस्तिष्कविभेदमुक्तरक्तच्छटाचर्चितचण्डचञ्चुः।**
**कासौ गरुत्मान् क च नाम सोमसौम्यस्वभावाकृतिरेष साधुः॥**

---

करुणाप्रतियोगित्वम्। सम्भावनायां लिङ्, हेतुद्वयमाक्रम्य तच्चित्तं द्रवीकर्तुमस्याः शोकवेगस्य सामर्थ्यमिति। अनेन दुःखस्य निरतिशयत्वं तेन स्वसाध्यानिर्बन्धश्च प्रकाश्यते॥ ११॥

अलमलमिति। त्रासातिशयो भ्रमस्य हेतुर्न सादृश्यादिकमिति तन्निषेधः। नागशत्रुरिति तस्य त्रासहेतुत्वं स्वतः सिद्धमिति सूचयति। वैसादृश्यं प्रत्यक्षमनिलङ्घ्य नागशत्रुरिति प्रस्तुतप्रसिद्धतत्स्वरूपप्रतिपादनपूर्वं प्रतिक्षिपति—पश्येति। न मदुक्तिमात्रेण, स्वयमेव त्रासं विमुच्य विमृश निरीक्षस्व चेत्यर्थः।

महाहीति। महतामहीनां दुर्विग्रहाणां स्थूलानां च, अत एव विषौल्बण्यशमनार्थं मस्तिष्कभेदः शिरोविदारणं, तत्र मुक्ता याः ताभी रक्तच्छटाभी रक्तधाराभिः चर्चिता रक्तचन्दनद्रवेणेव लिप्ता अहिवधप्रीत्या प्रतिदिनं निचितस्त्यानरुधिरा चण्डा तीक्ष्णा अस्मत्क्षयकरी चञ्चुर्यस्य। असौ भयेन तव बुद्धावपरोक्षवत् प्रकाशः। गरुत्मानित्यनेन चञ्चुरेव न भेदहेतुः पक्षादिकमपीति सूचितम्। केति वैसादृश्येनैकत्रावस्थितिनिर्देशोऽपि न योग्य इत्यैकाधिकरण्याक्षेपः। क चेति प्रकारान्तरप्रतिपादनाय। नामेति न यत्नबोध्योऽयम्, अतिस्फुटो भेद इत्यर्थः। सोमवत् सौम्ये मधुरशीतले स्वभावाकृती यस्य। आकृत्या वचनेन च स्वभावोऽपि सौम्य इति कल्प्यत इत्यर्थः। अत एव साधुरिति निश्चयगर्भोक्तिः। अत्र त्रास एव विदुषीं त्वां भ्रमयति। तं मा कृथा इत्यर्थः॥ १२॥

**वृद्धा**—(क) हा पुत्तअ! अहं पुण तुज्झ मरणभीदा सव्वं एव्व गळुळमअं पेक्खामि।

**नायकः**—अम्ब! मा भैषीः। नन्वयमहं विद्याधरः, त्वत्सुतसंरक्षणार्थमेवायातः।

**वृद्धा**—(ख) (सहर्षम्) पुत्तअ! पुणो पुणो एव्वं भण।

**नायकः**—अम्ब! किमनेन पुनः पुनरभिहितेन। कर्मणैव सम्पादयामि।

**वृद्धा**—(ग) (शिरस्यञ्जलिं कृत्वा) पुत्तअ! चिरं जीव।

**नायकः**—

ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यावद् विनतात्मजाय।
पुत्रस्य ते जीवितरक्षणार्थं स्वं देहमाहारयितुं ददामि॥१३॥

---

(क) हा पुत्रक! अहं पुनस्तव मरणभीता सर्वमेव गरुडमयं पश्यामि।
(ख) पुत्रक! पुनः पुनरेवं भण।
(ग) पुत्रक! चिरं जीव।

---

एवमस्या वैक्लव्यं दृष्ट्वा नायको विश्वासजननाय अम्बेति पुत्रवत् सम्बोधयति। अयमहमिति अयं रक्षकत्वेन तव बुद्धौ सामान्येन स्थापितः, अहं विशेषरूपेण प्रकाशः। विशेषं प्रतिपादयति—विद्याधर इत्यादिना। संरक्षणार्थमेवेति नान्यन्मम कृत्यमित्यर्थः। अनेन तदाश्वासननिर्बन्धः प्रकाशितः॥

चिरं जीवेत्युक्तौ तदपेक्षामालक्ष्य सामभेदगर्भं वध्यचिह्नं प्रार्थयते—ममेत्यादि। सम्प्रदानत्वेनाविवक्षणाच्चतुर्थ्यभावः। मम हस्ते इति वा। एतदिति पुत्रहस्तगतम्। तज्जीवनापेक्षया सा तस्मादपहृत्य दद्यात्। स तु तथा न विधेय इति मत्वा तां प्रति प्रार्थनायां लोट्।

**वृद्धा**—(कर्णौ पिधाय) (क) पडिहदं खु एदं । तुमं पि मे संखचूळणिव्विसेसो पुत्तओ एव्व । अहव संखचूळादो अहिअदरो, जो एव्वं बन्धुजणपरिच्चत्तं मे पुत्तअं सरीरप्पदाणेण रक्खिदुं इच्छसि ।

---

(क) प्रतिहतं खल्वेतत् । त्वमपि मे शङ्खचूडनिर्विशेषः पुत्रक एव । अथवा शङ्खचूडादधिकतरः, य एवं बन्धुजनपरित्यक्तं मम पुत्रकं शरीरप्रदानेन रक्षितुमिच्छसि ।

---

वध्यचिह्नमिति तत्संवादेन ज्ञातत्वात् सिद्धवत्कथनम् । साध्यसिद्धाववश्यापेक्षणीयत्वं च वध्यचिह्नशब्देन प्रकाश्यते । तद्विनियोगं प्रकाशनार्थं साक्षात् प्रतिपादयति—प्रावृत्य । अत्रापि देहस्य बलिस्त्वम् । देहमवगुण्ठ्य । यावदित्यध्यवसाये । इदानीमेव त्वत्साध्यं सम्पादयामीत्यध्यवसायप्रकाशनेन भेदनम् । अत एव ददामीति वर्तमाननिर्देशः । विनतात्मजायेति मातृदास्यनिमित्तेन संरम्भेण जिघत्सोरस्य प्रतिदेहार्पणं वध्यचिह्नानुबन्धं विना न घटत इत्यनिवारणीयत्वं प्रकाशितम् । विशिष्टे पुत्रे सति तज्जननीत्वं मातॄणामतिश्लाघ्यमिति च सूचयति । अत एव पुत्रस्य ते इति जन्यजनकभावस्यातिलोभनीयत्वं प्रकाशितम् । जीवितरक्षणार्थमिति । एतदेव तव साध्यम् । अतस्तदनुगुणं वर्तस्वेति भेदप्रयोगः । स्वमिति नात्रान्यदृष्टिरपेक्ष्यत इति निरन्तरायत्वं सूचितम् । देहमिति न वस्त्वन्तरं, त्वदपेक्षायास्तदपेक्षायाश्चाविरोधेनेति भावः । आहारयितुं भोक्तुम् । आहारयति स्मेतिवत् । विनतात्मजाय ददामीति सम्प्रदाननिर्देशेन स्वस्य कृतार्थता व्यज्यते । अत एवैतत्प्रवृत्तिनिश्चयेन फणिनो विस्मयः ॥ १३ ॥

एवं तदध्यवसायश्रवणेन सा पुत्रवत्सलाप्यनौचित्यं निरूप्य कर्णौ पिदधानाह—प्रतिहतं खल्वेतत् । अयं पक्षोऽनुत्थानोपहतोऽस्तु । यतस्त्वं मे शङ्खचूडादधिकः । आधिक्यमुपपादयति—य एवं बन्धुजन-

**शंखचूडः**—(सस्मितम्) अहो जगद्विपरीतमस्य महासत्त्वस्य चरितम्। कुतः,

विश्वामित्रः श्वमांसं श्वपच इव पुराभक्षयद् यन्निमित्तं
नाडीजङ्घो विजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन।
पुत्रोऽयं काश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थे
प्राणांस्तानेव चित्रं तृणमिव कृपया यः परार्थे जहाति ॥१४॥

---

परित्यक्तं मम पुत्रं शरीरप्रदानेन रक्षितुमिच्छसीति। अनन्यशरणं स्वशरीरप्रदानेन रक्षितुमध्यवस्यंस्त्वमेव मम पुत्रादपि लोभनीयः। अत एकपुत्रव्ययेनान्यपुत्ररक्षणं न मम प्रीतिकरं धर्मविरुद्धं चेति पक्षस्य प्रतिहतत्वं साधितम्॥

अथ तदध्यवसायं निशम्य शङ्खचूडः लोकोत्तरगौरवनिरूपणेन विस्मित आह—आश्चर्यमेतत्। अस्य महासत्त्वस्य चरितं जगद्विपरीतं जगच्चरितविसदृशम्। नेदृशं चरितं जगति कस्यापि दृष्टम्। महासत्त्वस्येति विधिगर्भोऽनुवादः। एवमध्यवसायेनायं महासत्त्व इति निश्चीयते। अन्यथा कथमेवमुपक्रम्यत इति भावः। कुत इति जगद्विपरीतत्वमुपपादयितुमुपक्रमः। कस्माज्जगद्विपरीतत्वमिति चेद्, अनेन प्रकारेणेत्यर्थः।

विश्वामित्र इत्यादि। न तु यःकश्चनाविशेषज्ञः। तपस्सञ्चयेन क्षत्रजन्मापहाय ब्रह्मर्षिमुख्यतां प्राप्तो विहितनिषिद्धविवेकपरमप्रामाणिकः। श्वमांसम् अभक्ष्येष्वग्रिमम्। श्वपच इव यथा श्वपाकः स्ववंशौचित्येन तत्र निस्संशयं प्रवर्तते, तथेति न तत्रानौचित्यबुद्धिरुद्भूतेति प्राणरक्षणप्रयासस्य प्राबल्यं गम्यते। पुरेतीतिहासकथामनुस्मारयति। पुरा किल चिरेण समाधेर्विरतो मुनिः देहधर्मानुवृत्त्या क्षुधार्तोऽभ्यवहाराय किमप्यपश्यन् श्वपचसन्निधौ श्वमांसं याचमानोऽनुचितमिदमिति तेन निषिद्धोऽपि

प्राणानां सर्वथा रक्षणीयत्वं समर्थ्य युक्त्या तं बोधयित्वा श्वमांसं भक्षितवानिति श्रूयते। यन्निमित्तं यान् प्राणान् निमित्तीकृत्य। एतद्रक्षणादृते नान्यदभक्ष्यभक्षणे निमित्तम्। यदि केनचिन्महात्मना तथा कृतं, कथं तद्वैलोम्येन जगद्विपरीतत्वमिति चेद्, भूयोऽप्युच्यते — नाडीजङ्घः कश्चित् पक्षी। निजघ्ने निहतः। भक्षितश्चेत्यर्थात् सिद्धम्। केवलस्य निग्रहस्य प्राणरक्षाशेषत्वाभावाद् अनौचित्यातिशयेन निहननं विहितम्। तत्साधयति — कृततदुपकृतिरिति। कृता तदुपकृतिः तस्य पूर्वोपकृतिर्येन। अनेन कृतघ्नताख्यो दोषश्च प्रकाशितः। यत्कृते येषां प्राणानां कृते रक्षणं निमित्तीकृत्य। गौतमेन गौतमनाम्ना केनचिद् ब्राह्मणेन, न तु मुनिना। पुरेत्यनुषङ्ग इतिहासस्मरणाय। पुरा किल गौतमो नाम कृपणो ब्राह्मणो धनलिप्सया पर्यटन् नाडीजङ्घेन दृष्टः। स तस्य प्रतिग्रहार्थित्वं ज्ञात्वा कस्यचिद् वदान्यस्य राक्षसस्य समीपं प्रेषितवान्। स गौतमस्तस्माल्लब्धधनः प्रतिनिवृत्य नाडीजङ्घसन्निधौ विश्रान्तः। रात्रौ स्वधनव्ययमसहिष्णुः क्षुधार्तः तं नाडीजङ्घं निहत्य विपच्य भक्षितवानिति भारते श्रूयते। तां कथामनुसृत्योक्तिः। 'अत्र गौतमस्य कर्तृत्वे प्रतिपादिते उपकृतिसम्बन्धित्वेन तस्य तच्छब्दनिर्देशो न युक्तः। कृतोपकृतिरित्येवालम्' इति व्यक्तिविवेककारो दूषणं प्रतिपादितवान्। यस्य येन पूर्वमुपकारः कृतस्तस्य तेनोत्तरकालं निग्रहोऽतीव कष्ट इति दोषस्य परिस्फुटता तटस्थबुद्ध्यनुसारेण तथोक्तौ प्रकाशत इति वयं मन्यामहे। इदं कथामात्रम्। नेदानीं केनचित् तथा क्रियते इत्यत्राह — पुत्र इत्यादि। न तु गोत्रजः कश्चित्। अयमिति प्रकरणाद् बुद्धिस्थत्वेनापरोक्षवन्निर्देशः। अद्यापि दूरदेशे कश्चिदस्तीति श्रूयत इति न, इदानीमेव दृश्यः। काश्यपस्य चतुर्मुखपौत्रस्य सुरासुरजनकस्य। तार्क्ष्य इत्युक्त्यैव कर्तृविशेषे सिद्धेऽपि काश्यपस्य पुत्र इत्यनेन, आस्तां हरिप्रियत्वादिगुणगणः। आमुष्यायणत्वमात्रेणास्य निषिद्धवीथीचङ्क्रमणमनुचितम्। तथापि तथा क्रियत इति प्राणपोषणस्य प्राबल्यं प्रकाश्यते। प्रतिदिनं, न तु प्रमादेन कदाचित्, कृत्यबुद्ध्येत्यर्थः। उरगान् उरगजातिम्। जातौ बहुवचनम्।

---

१. 'ति चेद् तत्रा' क. पाठः.

(नायकमुद्दिश्य) भो महात्मन्! दर्शिता त्वयेयमात्मप्रदानाध्यवसायान्निर्व्याजा मयि दयालुता । तदलमनेन निर्बन्धेन । कुतः,

---

अन्यथा 'इत्येकशः प्रतिदिनम्' इत्यनेन विरोधः । अत्ति भक्षयति । न तु वैरनिर्यातनमत्र हेतुः । तथा सति हननमेवापेक्षितं, नादनम् । अत उक्तं — यदर्थमिति । अत्रापि प्राणपोषणमेव सूक्ष्मो हेतुः । तानेव निषिद्धाचरणेन दोषान्तरानिरूपणेन निजगौरवाविस्मरणेन च पुरातनैरिदानीन्तनैरर्थाद् भाविभिश्च रक्षितान् रक्ष्यमाणान् रक्षिष्यमाणांश्चेत्यर्थः । तत्परित्यागे कौतुकातिशयेन मध्ये चित्रमिति निर्देशः । तत्रापि न कृच्छ्रादित्याह — तृणमिव । किञ्चिदपि गौरवमनाकलय्य । यः परार्थे स्वव्यतिरिक्तजन्तुमात्ररक्षणाय, न तु सौहृदादिनिरूपणेन । तत्रापि स्वाम्यर्थं त्यज्यते कान्तावियोगादिना च । तादृशं त्यजनमात्मार्थमेव पर्यवस्यति । नायमेवम् । कृपया केवलया दयया । जहाति, न तु जिहासति । 'स्वं देहमाहारयितुं ददामी'त्युक्त्वा वध्यचिह्नप्रार्थनायां तदलाभो गरुडानागमनं चास्य विलम्बहेतुः । स्वयं बद्धपरिकरः । यत एवं करोति, अत एतच्चरितस्य जगद्विपरीतता कथं कथ्यतामित्यद्भुतानुभावरूपोक्तिः ॥१४॥

अथ नायकस्य निर्बन्धं प्रशंसापूर्वं निवारयति — भो महात्मन्निति । मातरं याचमानमात्मनः सम्मुखयति, महात्मन्निति । माहात्म्यमप्यनेनैव प्रकाशितमिति भावः । दर्शिता प्रकाशिता । त्वया कारुणिकतायां द्वितीयसब्रह्मचारिविरहितेन । इयं प्रार्थनादिपरिस्फुटा, मदर्थं स्वदेहार्पणनिश्चयात् । मयि अनन्यशरणे । निर्व्याजा अच्छला । दयालुता निजमाहात्म्यसदृशी । तत् सदाचारस्यानुज्झितत्वात् । अनेन वध्यचिह्नप्रार्थनादिरूपेण । निर्बन्धेन फलपर्यन्ततानयनसाहसेन । अलमिति अयोग्यत्वान्निष्फलत्वाच्चेति शेषः ।

---

१. 'पि च स्वा' ग. पाठः. २. 'तया द्वि' ष. पाठः.

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ॥ १५ ॥

तत् किमनेन । मुच्यतामयमध्यवसायः ।

**नायकः**—(शंखचूडं हस्ते गृहीत्वा) कुमार! शंखचूड! न मे चिराल्लब्धावसरस्य परार्थसम्पादनमनोरथस्यान्तरायं कर्तुमर्हति भवान् । (पादयोः पतित्वा) तदलं विकल्पेन । दीयतां वध्यचिह्नम् ।

---

अयोग्यत्वमुपपादयति—कुत इत्यादिना । जायन्ते क्षुद्रकर्मप्रभावात् प्रवाहरूपेणेत्यर्थः । म्रियन्ते च, न तु जननानन्तरं मृतिव्यतिरेकेण स्वार्थं परार्थं वा साधयितुं सामर्थ्यम् । अतस्तद्विनाशे नान्यस्योपहतिरिति भावः । मादृशाः अहमिव दृश्यमानाः । अहमत्र प्रथमोदाहरणमित्यात्मवैराग्यं सूचितम् । क्षुद्रजन्तवः कृमिकीटादिप्रायाः । परार्थे न स्वार्थेऽपि । बद्धकक्षाणाम् एतदेकपराणां देशकालादीनन्विच्छताम् । त्वादृशां त्वद्विधानाम् उद्भवः कुतः । तादृशस्य कर्मणो दुर्लभत्वात् त्वादृशां बहूनां जन्म न सम्भवति । अतो मदपायेऽस्मत्सब्रह्मचारी कश्चिदन्यो भविष्यतीति बुद्धिं मा कृथाः । परोपकारार्थं चिरं जीव । स्वदेहत्यागेन मद्रक्षणं माणिक्यपरिहाणेन गैरिकपरिग्रहतुल्यम् । अतस्तन्निर्बन्धो न युक्त इत्यभिप्रायः ॥ १५ ॥

अत एवाह—तत्किमनेन । मुच्यतामयमध्यवसाय इति ॥

एवमयोग्यत्वे समर्थितेऽपि दयोत्साहप्रेरितः साम्ना वशीकर्तुं स्वाजन्यपुरस्कारेणारभते । हस्ते गृहीत्वेति सौहार्दाविष्करणम् । तदानुगुण्येन कुमार! शङ्खचूड! इति विस्रम्भोचितं सम्बोधनम् । न मे इत्यादि साम । चिराल्लब्धावसरस्येति स्वशरीरतःप्रभृतीति अपि नाम शक्नुयामित्यादि पूर्वोक्तमनुसन्धत्ते । लब्धावसरस्य कथमपि दैवादागतनिर्वाहसमयस्य । चिरादित्यनेनेदानीमलाभे पुनर्दुर्लभत्वं च प्रकाश्यते । परार्थ

शंखचूडः—भो महासत्त्व! किमनेन वृथाप्रयासेन। न खलु शङ्खचूडः शङ्खधवलं शङ्खपालकुलं मलिनीकरिष्यति। अथ ते वयमनुकम्पनीयाः, तदियमस्मद्विपत्तिविक्लवा यथा न परित्यजति जीवितमम्बा, तथाभ्युपायश्चिन्त्यताम्।

---

परप्रयोजनम्। तत्रापि प्राणरक्षायाः प्राथम्यम्। तत्सम्पादने यो मनोरथो वाञ्छा तस्या अन्तरायं कर्तुम्। भवान् एवं विशेषज्ञः। नार्हति मदपेक्षयैतस्य देहोत्सर्गाध्यवसाय इति बुद्धिं मा कृथाः। मम चिराभिलषितमनोरथसम्पादनायैव। तत् परोपकारे त्वमपि वैमुख्यं मा कृथा इत्यर्थः। एवं वाचिकेन साम्ना सह पादपतनेनानुसरति परचित्तभेदनाय। तदलं विकल्पेन युक्तायुक्तादिविचारविलम्बनेन। दीयतां वध्यचिह्नं नान्यत्किमपि प्रतिवक्तव्यम्॥

एवमस्यानुबन्धमालक्ष्य दुर्लभत्वोपपादनेन निरस्यति—भो महासत्त्वेति। महासत्त्वविधानेन स्फुटीकृता। किमनेन प्रणामादिरूपेण वृथाप्रयासेन। व्यर्थ एवायं प्रयास इत्यर्थः। वृथात्वमुपपादयति—न खल्वित्यादि। शङ्खधवलं स्वतो निर्मलम्। शङ्खचूड इति अभिजन्मगर्वेण परीकृत्य नामोच्चारणम्। मलिनीकरिष्यतीति स्वामिनियोगं निरस्य देहलोभेनान्यं गरुत्मते दत्त्वाधर्मायशःकलङ्केन दूषयिष्यति। अनेन कुलमेव दूषितं भवति। अतो दुर्लभोऽयं पक्ष इत्यर्थः। अथेति तदावर्जनाय स्ववैषम्यपरिहारार्थं च पक्षान्तरोपन्यासः। ते त्वया। वयमनुकम्पनीयाः येनकेनाचित् प्रकारेणावश्यं दयनीयाः। न विशेषापेक्षा इति चेत् तत्तर्हि उभयसाध्याविरोधेनास्मद्विपत्त्यानन्तरभाविन्या विवशाम्बा यथा येन प्रकारेण जीवितं न त्यजति, तथा तदनुगुणः कोऽप्युपायो भवता चिन्त्यताम्। तत्र वयमनुमोदामहे॥

---

१. 'यत्नेन' इति मूलकोशपाठः.

नायकः — किमत्र चिन्त्यते । चिन्तित एवाभ्युपायः । स तु त्वदायत्तः ।

शङ्खचूडः — कथमिव ।

नायकः —

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ १६ ॥

अयमभ्युपायः । तदर्पय त्वरितं वध्यचिह्नम् । यावदनेनात्मानमाच्छाद्य वध्यशिलामारोहामि । त्वमपि जननीं पुरस्कृत्यास्माद् देशान्निवर्तस्व । कदाचिदियमालोक्यैव सन्निकृ-

---

इत्युक्तौ तस्य ममत्वलेशमाकलय्य तद्द्वारा तं वशीकर्तुं साध्यमन्तर्निधाय गम्भीरमनुवदति — चिन्तित इत्यादि । पूर्वमेवेति शेषः । स तु त्वदायत्त इति अभ्युपायस्य चिन्तितस्य निर्वाहकत्वं तवैवेति ॥

गम्भीरोक्तिमजानानः पृच्छति — कथमिवेति । कथं मयाविज्ञातो निर्वोढव्य इति ॥

तदेव स्फुटयति — म्रियते म्रियमाण इति । न तु मृते । मरणजीवनयोः समकालत्वेन जीवनस्यानन्यसाध्यत्वमनूद्य तज्जीवनापेक्षा यदि भवति, तर्हि नियतं त्वज्जीवनमुपायमङ्गीकुरुष्व ॥ १६ ॥

तत्र विनिमये ममासवो विधेया इत्युक्त्वा तदेवोक्तशेषतया स्फुटयति — अयमभ्युपाय इति । अयमेवेत्यर्थः । अथ भेदगर्भं मातृरक्षणाशां पोषयन् नियुङ्क्ते — तदर्पयेति । अभ्युपायनिर्वहणप्रकारो मदुक्त्यनुसारेण क्रियताम् । वध्यचिह्नं त्वरितं देहि । तत्फलमाह — यावदित्यादि । तस्य कर्तव्यमाह — त्वमपीति । जननीं पुरस्कृत्येति ममतां द्रढयति । अस्माद् देशादिति । सर्वथायं दूरीभवत्वित्यभिप्रायः । निवर्तनाकरणे साध्यविरुद्धं

---

१. 'मेवाभ्यु' ख. पाठः.

ष्टमाघातस्थानं स्त्रीसहभुवा कातरत्वेनाम्बा प्राणान् जह्यात् । किञ्च न पश्यति भवान् इदं विपन्नपन्नगानेककङ्कालसङ्कुलं महाश्मशानम् । तथाहि —

चञ्चच्चञ्चूद्धृतार्धच्युतपिशितलवग्राससंवृद्धगर्धै-
र्गृध्रैरारब्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे । [वाना-
वक्रोद्वान्ताः पतन्त्यश्छिमिति शिखिशिखाश्रेणयोऽस्मिञ्छि-
मास्रस्रोतस्यजस्रस्रुतबहलवसावासविस्रे स्वनन्ति ॥ १७ ॥

---

दोषं पाक्षिकत्वेनाविष्करोति — कदाचिदित्यादि । आलोक्यैव । आस्तां गरुडागमनम् । वध्यशिलादर्शनमेव प्राणापायहेतुः । आलोकने कथमेवमित्यत्रोपपत्तिः — स्त्रीसहभुवेत्यादि । स्त्रीत्वसहजेन । अम्बेति जीवितत्यागनिरोधयोग्यता । एवं तस्योत्तरकथनावकाशं निरुध्य साध्यशेषमुक्त्वाघातस्थानस्य भयावहत्वं तच्चित्तमभिक्षोभयितुमाह — किञ्चेत्यादि । कथं न पश्यति । इदं निकटे वर्तमानम् । भवान्, आस्तामियम् । भवतोऽपि भीतिकरमिदमिति भावः । यतः विपन्नानां चिरकालमेकत्रैव नष्टानां पन्नगानाम् अनेकैः कङ्कालैः कायास्थिभिः सङ्कुलं महाश्मशानं शवायतनम् । तथाहीति श्मशानस्य भीषणत्वोपपादनप्रकारारम्भः ।

चञ्चदित्यादि । चञ्चन्त्या चञ्च्वा उद्धृतादर्धादंशात् च्युतस्य उद्धृतादर्धच्युतस्य वा, अर्धमार्गे व्यावर्तत इतिवद् अर्धपथे च्युतस्य वा । चञ्चुचाञ्चल्येन भ्रष्टस्य पिशितलवस्य ग्रासे पुनरुपादाने संवृद्धगर्धैः प्ररूढेच्छैः । अत एवावपतनार्थं प्रारब्धा पक्षद्वितयस्य विधुतिः विवृत्य चलनं यैः । अत्र गरुडस्योद्धरणवेलायां च्युतमिति केचित् । गृध्राणामिति केचित् । गरुडपक्षे चञ्चदित्यत्र सम्बन्धिपदादर्शनात् समासेऽपेक्षा न शाम्यति । अन्यत्र गृध्राणामेव सम्बन्धित्वं सिद्धम् । तैर्गृध्रैः बद्धः

**शङ्खचूडः**—कथं न पश्यामि।

प्रतिदिनमशून्यमहिनाहारेण विनायकाहितप्रीति।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥१८॥

तद् गच्छ। किमेभिस्त्रासनोपायैः। आसन्नः खलु गरुडस्याग-

---

सूचितः सान्द्रः नैश इव समन्तादावारकः अन्धकारो यत्र। अस्मिन् श्मशाने। आस्नस्रोतसि प्रतिदिनं प्रचीयमानरुधिरनदीप्रवाहे। अजस्रं प्रत्यहं स्रुतया बहलया महाभोगिभोगक्षरितया वसया धातुविशेषेण यो वासः गन्धसंस्काराधानं तेन विस्रे आमदुर्गन्धदुःसहे। पतन्त्यः अर्थाद् ग्रसनवेलायाम्। शिवानामुल्कामुखानां वक्त्रोद्वान्ताः तन्मुखानां ज्वलनरूपत्वात् ततो गलिताः शिखिशिखाश्रेणयः। छिमिति, जलेऽग्निपतनेऽव्यक्तानुकरणशब्दः। स्वनन्ति तत्र तत्राविच्छेदेन श्रूयन्ते। एतदुपलक्षणं शिवास्वनस्यापि। एवं स्ववंश्यकायास्थिगृध्रान्धकारवसामिलितदुर्गन्धपेशलरुधिरप्रवाहशिवामुखाग्निरुतादिभिः अतिभीषणम् अनिरोध्यवैरिविक्रमं महाश्मशानं भवतोऽपि भयजनकम्। अतो मातृरक्षणायेतः शीघ्रमपसर। वध्यचिह्ने सिद्धे त्वत्साध्यमहं साधयामीत्यध्यवसायानुगुणं बीभत्सभयानकाभ्यां तं दुरीकर्तुं सामभेदगर्भोक्तिः ॥ १७ ॥

अथ स्थिरमतिः शङ्खचूडोऽस्य भीषिकामङ्गीकारपूर्वमाक्षिपति—**कथं न पश्यामीति,** किञ्च न पश्यसीत्यस्य क्षेपः। चक्षुषोः सतोः दृश्ये च निकटस्थिते किञ्च न पश्यसीति किं दर्शनमनुयुज्यते। पश्याम्येवेत्यर्थः।

स्वप्रतीत्यनुसारेण श्मशानं वर्णयति—**प्रतिदिनमित्यादि**। नित्यमशून्यमनुबद्धम् अहिना अस्मत्स्वामिनियमितेन एकेन नागेन आहारेण आह्रियत इति कृत्वा अहिरूपेण भोज्येन। अन्यत्र अहिमयेन हारेण सदा शोभनमिति। तथा विनायकस्य पक्षिराजस्य अहितस्यास्मद्वैरिणः प्रीतिर्यत्रेति वैयधिकरण्येन। अन्यत्र विनायकेन गणाधिपेन अङ्कारोह-

मनसमयः । (मातुरग्रतो जानुभ्यां स्थित्वा शिरोनिहिताञ्जलिः) **अम्ब!** त्वमपि निवर्तस्वेदानीम् ।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां प्रियसुते! माता भूयास्त्वमेव नः ॥ १९ ॥

(पादयोः पतति ।)

---

णादिना आहिता सम्पादिता विनायकस्य वा दत्ता प्रीतिः यस्य येन वा । वपुपः प्रीतिरुपचारतः । तथा शशीव धवलम् अस्थिकपालं यत्र । अन्यत्र शशिना चूडाशशिकलया धवलानि द्विगुणद्युतीनि भूषणास्थिशिरः-कपालजालानि यत्र । एवं शाब्देनार्थेन च समानधर्मेण श्मशानं रौद्रं वपुरिव, नोद्वेगजनकम् । स्वामिनियोगनिर्वाहस्थानतया शिवविग्रहवदनु-ग्राहकमेवेति भावः । अत्र श्मशानोपमानत्वेन शिववपुषो न दुष्टत्वम् । 'श्मशानेष्वाक्रीडे'त्युक्तदिशा तत्सम्बन्धेन सर्वेषां मङ्गलत्वमेव, न केनापि तस्यामङ्गलत्वम् । किञ्च मरणोद्यतस्य तस्य परमशैवस्य महेश्वरानुसन्धा-नानुबन्धेन तथा दृष्टान्तपरिग्रहस्तस्य भीषिकानिरासार्थः ॥ १८ ॥

अत एवाह—गच्छेति । एभिरश्वासनानां वचनानामुपन्यासैर्न कि-ञ्चिदपि भवदभिमतं फलति । वृथाभाषणस्य च नायं कालः । गरुडागम-नसमय आसन्नः । तत् स्वामिनियोगार्थं त्वरामहे । तद् गच्छेति तदनुबन्धं खण्डयित्वा मातुरनुज्ञार्थं प्रणामपूर्वमाह भक्त्यनुनयाभ्याम्—अम्ब! निवर्तस्वेदानीम् । इदानीमिति । इयन्तं कालं प्राप्तावसरतया प्रलापादिकं न निषिद्धम् । स्वामिनियोगानुष्ठानकालस्य प्राप्तत्वान्निवर्तनमेव प्रार्थय इत्यर्थः ।

समुत्पत्स्यामह इति । कर्मपाकानुसारेण जननान्न विभ्रमः । तत्रेयदाशास्यते—यस्यां यस्याम् आवृत्त्या गतौ गम्यत इति कृत्वा योनौ जनिष्यामहे । तस्यां तस्यां, न क्वचिदपि विपर्यासोऽस्तु । त्वमेव मे माता भूयाः । त्वद्गर्भ एव भूयात् प्रवेशः । त्वदङ्क एव शयिषीमहि । त्वत्स्तन्यमेव पिबेम । प्रियसुते! एवं पुत्रवात्सल्यमन्यस्या मातुर्न दृष्टमिति हेतुः ॥ १९ ॥

**वृद्धा**—(सास्रम् आत्मगतम्) (क) कहं पच्छिमं से वअणं । (प्रकाशम्) पुत्तअ! तुमं उज्झिअ अण्णदो मे पाआ ण पस[1]-रन्ति । ता तुए[2] सह गमिस्सं ।

**शंखचूडः**—(उत्थाय) यावदहमपि नातिदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि ।

(उभौ निष्क्रान्तौ ।)

**नायकः**—कष्टम् । न सम्पन्नमभिलषितम् । तत् कोऽत्राभ्युपायः[3] ।

---

(क) कथं पश्चिममस्य वचनम् । पुत्रक! त्वामुज्झित्वान्यत्र मे पादौ न प्रसरतः । तत् त्वया सह गमिष्यामि ।

---

कथं पश्चिममस्य वचनम् । पुत्रक! त्वामुज्झित्वान्यत्र मे पादौ न प्रसरतः । तत् त्वया सह गमिष्यामि ॥

एवं तदुक्तिमनाकर्णयन् स्थिरमतिरुत्थाय कर्तव्यं निश्चिनोति । यावदित्यध्यवसाये । अहमपि । इयं गच्छति अहमपि । नातिदूरे इत्यनेन कालातिपातं परिहरति । भगवन्तं दक्षिणगोकर्णमिति स्थानेन व्यपदिशति

"वध्यशैलं प्रणम्याशु गोकर्णे शशिशेखरम्"

इति क्षेमराजकथोक्त्यनुसारेण । अथवा क्षेत्रमेव । भगवन्तं माहात्म्यसम्पन्नम् । तत्राश्रमो विशेष्यम् । अत एव प्रदक्षिणीकरणेनैव कृतार्थत्वम् । कालातिपात[4]परिहारार्थं च स्वाम्यादेशमिति । तत्र कृतार्थता प्रतीयते । एवं साध्यं निश्चित्य मात्रानुगतः सन् निष्क्रान्तः ॥

एवं तस्मिन् गते निजाध्यवसायविघ्नेन खिन्न आह—**कष्टमि-त्यादि** । अभिलषितं वध्यचिह्नरूपं तत्साध्यं देहविसर्जनं वा ॥

---

१. 'वहन्ति', २. 'ए एव्व स' इति मूलकोशपाठः. ३. 'यः । प्र' ख. पाठः. ४. 'तार्थंप' क. पाठः.

(सहसा प्रविश्य)

**काञ्चुकीयः**—इदं वासोयुगलम् ।

**नायकः**—(दृष्ट्वा सहर्षमात्मगतम्) दिष्टया सिद्धमभिवाञ्छितमनेनातर्कितोपनतेन रक्तांशुकयुगलेन ।

**काञ्चुकीयः**—इदं वासोयुगलं देव्या मित्रावसोर्जनन्या कुमाराय प्रेषितम् । परिधत्तां कुमारः ।

**नायकः**—उपनय ।

(काञ्चुकीय उपनयति ।)

**नायकः**—(गृहीत्वात्मगतम्) सफलीभूतो मे मलयवत्याः पाणिग्रहणविधिः । (परिधाय प्रकाशम्) कञ्चुकिन्! गम्यताम् । मद्वचनादभिवादनीया देवी ।

**काञ्चुकीयः**—यदाज्ञापयति कुमारः । (निष्क्रान्तः ।)

---

तत् कोऽत्राभ्युपाय इत्युक्तौ दैववशात् पूर्वप्रस्तुतः काञ्चुकीयः सहसोपसृत्य इदं वासोयुगलमिति वाक्यान्तरशेषमप्येतद्वाक्यशेषत्वेनोक्तवान् इदं वासोयुगलमभ्युपाय इति योजनानुगुणम् ॥

तेन प्रीयमाण आह—दिष्टयेत्यादि । अभिवाञ्छितं देहोत्सर्जनरूपम् । अतर्कितेत्यनेन दैवानुगुण्यं द्योतितम् । अत एव सिद्धमिति भूतवन्निर्देशः । रक्तांशुकयुगलेनेति वाससः साध्यसिद्ध्यानुगुण्येन ॥

प्रीतस्त्वरया सहसोक्तं वाक्याङ्गमात्मनियोगकथनेन पूरयति—इदं वासोयुगलमित्यादिना । परिधत्तामिति स्वप्रवृत्तेः फलपर्यन्तत‍ानयनाय ॥

**सफलीभूत** इत्यादि । एतत्परिणयनेन हि सम्बन्धद्वारा वध्यचिह्नवासोयुगलसिद्धिः । अतः जन्मकार्यपरार्थदेहविसर्जनपरमाङ्गसिद्धिहेतुत्वात् साफल्यं, न तु भोगादिशेषतया । अनेन दूरानुवृत्तस्यापि शृङ्गारस्य दयोत्साहशेषत्वं स्वोक्त्यैव प्रकाशितम् । गम्यतामिति तद्विसर्जनप्रकारः । अभिवादनीयेति तदाज्ञाङ्गीकारप्रकाशनम् ॥

**नायकः —**

वासोयुगमिदं रक्तं प्राप्तकाले ममागतम् ।
करोति महतीं प्रीतिं परार्थे देहमुज्झतः ॥ २० ॥

(दिशो विलोक्य) यथायं चलितमलयाचलशिखरशिलासञ्चयः प्रचण्डो नभस्वांस्तथा तर्कयामि आसन्नीभूतः पक्षिराज इति । अपिच —

तुल्याः संवर्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरं वेगान्निरस्तं क्षिपति भुव इव प्लावनायाम्बु सिन्धोः ।
कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रै-
र्देहोद्द्योतो दशाशाः कपिशयति शिशुर्द्वादशादित्यदीप्तिः ॥

---

वासोयुगमित्यादि समीहितसिद्धिश्लाघनम् । परार्थे देहमुज्झत इति परमसाध्याविष्कारः ॥ २० ॥

तदुपक्रमाय दिग्विलोकनम् । यथेत्यादि । प्रचण्डतोपपादनं— चलितेति । तथेति नभस्वत्प्राचण्ड्येन हेतुना पक्षिराजस्यासन्नीभूतत्वानुमितिः ।

अपिचेति । न केवलमनुमेयमेव, दृश्यते चासावेकदेशेनेत्याह — तुल्या इत्यादि । पक्षतीनां उभयोः पार्श्वयोरुपर्युपरि पङ्क्तिशः स्थितानां तिर्यक्प्रसृतानां पक्षाणां पटलिकाः, व्याप्त्या संवर्तकाभ्रैः प्रलयमेघैस्तुल्याः । अत एव गगनं सर्वतः पिदधति आच्छादयन्ति । दृष्टान्तेनाच्छादकस्य व्याप्तिः, तेनाच्छाद्यस्य बहुदेशावरणं च प्रकाशितम् । वेगाद् अर्थात् पक्षवायुजनितात् । निरस्तं स्वस्थानत उच्चलितम् । सिन्धोः समुद्रस्य जलं तीरं क्षिपति विभिद्याक्रामति । तत्र हेतुरुत्प्रेक्ष्यते — भुवः साकल्येन प्लावनायेव स्वस्मिन् निमज्जनायेव । उत्प्रेक्षानिमित्तेन जलोत्प्लुत्यतिशयेन तत्कारणस्य वेगस्य प्रचण्डता प्रकाश्यते । प्लावनोत्प्रेक्षया वेगवायोरुत्पातवातसाम्यं च प्रतीयते । प्रथमं पक्षदर्शनं, ततो वेगकार्यतया

तद् यावदसौ नागच्छत्येव शङ्खचूडः, तावत् त्वरिततरमिमा वध्यशिलामारोहामि। (तथाकृत्वोपविश्य स्पर्शं नाटयन्) अहो स्पर्शोऽस्याः—

न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा।
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथा स्पृष्टा ॥ २२ ॥

---

समुद्रक्षोभदर्शनं, ततो देहप्रभावलोकनमिति प्रतीतिक्रमेण वर्णनम्। देहोद्द्योतः 'स्वर्णवर्णं सुपर्णम्' इत्युक्तदिशा छन्दोमयस्य विश्वातीतविष्णुतेजोवहनधुरन्धरस्य विग्रहप्रभासञ्चयो दश दिशः कपिशयति स्वर्णरुचीः करोति। दशाशा इति व्याप्तिविषयत्वेन ब्रह्माण्डान्तरालपरिग्रहाद् उद्द्योतस्य व्याप्तिः। अत एव दिग्द्विपेन्द्रैः दिक्सीमावस्थितैः। सभयं वीक्षितः। अन्येषां भयं दण्डापूपिकया सिद्धम्। तद्भयनिमित्तं कल्पान्तशङ्कां कुर्वन्निति। अन्यदा एवंप्रभाया अदृष्टत्वात्। सपदीति दीप्त्यतिशयेन विमर्शमनवलम्ब्य। कल्पान्तभ्रमनिमित्तं प्राचुर्यमुपपादयति—शिशुद्वादशादित्यदीप्तिः, शिशुरल्पा द्वादशादित्यानां प्रलये समुदितानां समुचिता दीप्तिर्येन, ततोऽप्यधिक इत्यर्थः। शिशूनामुदितमात्राणां द्वादशादित्यानां दीप्तिरिव दीप्तिर्यस्येति विग्रहे उद्द्योतस्यारूक्षत्वं सिध्यति, नाधिक्यम्। उद्द्योतस्य दीप्तिरिति च न चतुरश्रम् ॥ २१ ॥

एवं तदागमनं निश्चित्य साध्यार्थमुपक्रमते— तदित्यादिना। आगच्छत्येवेति स्वाम्यादेशमनुष्ठातुं नियतमागच्छत्येव। तावत् त्वरिततरमिति तस्यापि त्वरणं सूचयति। आरोहामीति पश्चान्न विलम्ब इति साध्यनिश्चयः। स्पर्शमिति शिलास्पर्शमनुभवन्। अहो स्पर्श इति आश्चर्यभूतः, स्पर्शान्तरातिशयात्।

अतिशयमुपपादयति—न तथेत्यादि। मलयवती स्पृश्येषु हृद्यतया परिगृहीता। मलयचन्दनस्य अन्यदेशजानां हीनगुणतया मलयग्रहणम्। स्वतः संस्कारतश्च सुखस्पर्शा। मन्य इति तत्त्वदृष्टावेवं स्फुरति। समीहितसिद्धये वध्यशिलेयं स्पृष्टा यथा सुखयति न तथा मलयवती इत्यनेन स्वोक्त्या शृङ्गारस्याङ्गत्वमत्रापि स्फुटीकृतम्।

---

१. 'स्पर्शसुखं ना' इति मूलकोशपाठः.

अथवा किं मलयवत्या ।

शयितेन मातुरङ्के विस्रब्धं शैशवे न तत् प्राप्तम् ।
लब्धं सुखं मयास्या वध्यशिलाया यदुत्सङ्गे ॥ २३ ॥

तदयमागत एव गरुत्मान् । यावदात्मानमाच्छाद्य तिष्ठामि ।
(तथा करोति ।)

---

अथवेत्यादि । एतदधिकादपि स्पर्शादस्याधिक्यमिति प्रतिपादयितुमुक्तस्य मलयवतीस्पर्शस्य निकर्षमाक्षेपमुखेन कथयति — किं मलयवत्या । स्पर्शसुखे तदधिकस्यानुभूतत्वात् किं मलयवतीस्पर्शस्य वैशिष्ट्यकथनेनेत्यर्थः ।

तत् प्रतिपादयति — शयितेन । मातुः अस्मज्जनन्याः । अङ्के विस्रब्धं विश्वस्तं पतनादिभीतिरहितम् । शैशवे मात्रा सततं चिन्त्यमानयोगक्षेमहृद्ये वयसि । सर्वातिशायिनि मातृस्पर्शे तादृशं सुखं न प्राप्तम्, अस्या वध्यशिलाया उत्सङ्गे शयितेन इदानीं यत् प्राप्तम् । एतस्य लोकोत्तरजन्मकार्यशेषत्वादिति भावः ॥ २३ ॥

एवं परार्थदेहोत्सर्जनस्य प्रीतिहेतुत्वं समर्थ्य तदागमनकालमालक्ष्याह — तदयमागत एव । तदिति एवं स्पर्शस्य प्रीतिहेतुत्वात् तदानुगुण्येनास्मत्प्रियार्थमागत एव । एवकारेण विलम्बं परास्यति । आत्मानमाच्छाद्य, नागबुद्धिं सम्पादयितुम् । अत्र —

"आगतं गरुडं ज्ञात्वा सूचितं पक्षमारुतैः ।
आरुरोह मुदा वध्यशिलां जीमूतवाहनः ॥
रक्तांशुकेन सञ्छन्नः स्थितस्तत्र व्यचिन्तयत् ।
सत्त्वोपकाराय पुनर्जन्म भूयान्ममेति सः ॥
ततोऽदृश्यत दिग्दाहदारुणच्छविडम्बरः ।
प्रलयाग्निशिखालोलपक्षक्षेपः खगेश्वरः ॥
तस्योरुवेगसङ्घट्टस्फूर्जद्घनघनारवैः ।
चुक्रोश कालकल्पान्तसन्त्रस्तेव जगत्त्रयी ॥"

इत्यादिक्षेमराजकथानुसारेण वस्तुनिर्वहणम् ।

(ततः प्रविशति गरुडः ।)

**गरुडः**—एष भोः ।

क्षिप्त्वा बिम्बं हिमांशोर्भयकृतवलयां संहरन् शेषमूर्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रान्तावसज्जज्जलधरपटलात्यायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिग्रासगृध्नुः क्षणेन ॥ २४ ॥

---

अथ प्रस्तुतस्य गरुडस्य प्रवेशः । तत्र समयसिद्धनागभक्षणाय वैकुण्ठलोकात् क्षणेन मलयोपान्तेऽवतीर्णः, अहङ्कारस्फूर्तिवशेन स्वात्मावलोकनपुरःसरं प्रीयमाण आह—एष भो इति । भो इति सुखे । दौरात्म्येन मातरं दासीपदे स्थापयित्वा निरस्तवतां वैरिणां क्रमेणापि कुलोच्छेदेन कृतार्थतया प्रीतिः । एषोऽस्मीति तत्रैव वाक्यपरिसमाप्तिः । एष इति समीहितदेशमागतमात्मानं निरीक्ष्य निजमहत्त्वमेव हर्षेण प्रकाशयति । पश्चादुत्तरवाक्ये प्राप्तिसमर्थनम् । एष इति श्लोके निर्देशादेवं योजना । एष भो इति पाठाभावे नैतद् वैषम्यम् ।

तत्रागमनवेगं प्रकाशयति—एषोऽहं क्षणेन मलयं वेलामहीध्रं प्राप्तः । एष इत्यनेन प्रकृतं प्रति सन्नाहः प्रकाश्यते । वेलामहीध्रं सीमापर्वतम् । तत्र विशेषो मलयमिति । प्राप्तिप्रयोजनमाह—अहिग्रासगृध्नुः । अहेः ग्रासः ग्रसनं तद्गृध्नुः अभिलाषुकः । अहिरेव ग्रासः कबलमिति वा । प्राप्तिप्रकारमाह नभस ऊर्ध्वमध्याधोभागावस्थाप्रतिपादनेन । तत्र न क्रमापेक्षा । क्षिप्त्वा निरस्य, मध्यमार्गवर्ति हिमांशोर्बिम्बं निःसारतया वेगवायुना निरस्य । शेषस्य मूर्तिं संहरन् सङ्कोचं नयन् । शिष्यते इति व्युत्पत्त्या प्रपञ्चातीतत्वेन व्याप्तत्वं ततः संहरणस्य दुष्करत्वं शेषशब्देन द्योत्यते । कथं संहरणमित्याह—भयकृतवलयाम्, अस्मिन् काले मद्दर्शनभयेन कृतवलयां सम्पादितजात्युचितमण्डलीभावाम् । अत्रोर्ध्वलोकादवतरणे भानुमार्गादधस्तनस्य चन्द्रस्य क्षेपः प्रथमं न घटते । शेषमूर्तेस्त्वधः स्थिताया अपि दूराद्दर्शनमात्रेण भयाद् वलयीकरणं घटते इति चेद्, अत एवोक्तं न क्रमापेक्षेति । अथवा बिम्बक्षेपणं शेषमूर्तेरेव वलयीकरणक्रियायाः पूर्वावस्था । हिमांशोर्बिम्बं

---

१. 'पः छो' क. पाठः.

**नायकः—**

संरक्षता पन्नगमद्य पुण्यं मयार्जितं यत् स्वशरीरदानात् ।
भवे भवे तेन ममैवमेवं भूयात् परार्थः खलु देहलाभः ॥ २५ ॥

**गरुडः—** (नायकं निर्वर्ण्य)

अस्मिन् वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिदण्डचण्डतरया चञ्च्वाधुना वक्षसि ।

---

पूर्णं मण्डलं क्षिप्त्वा निजसौभाग्येन न्यक्कृत्य कृतवलयां हिमांशुमण्डलाद् धवलवृत्तस्वरूपामित्यर्थः । एवं विपक्षभीतिकरत्वमात्मन उक्त्वा स्वपक्षप्रीतिकरत्वमाह—स्यन्दनाश्वाना नित्यचङ्क्रमणपराणां रथवाजिनां त्रसनेन भयेन मद्दर्शनादिना विचलिते रथस्य विसंस्थुलत्वेन कम्पिते पूष्णि जगत्पोषके सवितरि अग्रजेन अस्मज्ज्यायसा अरुणेन स्यन्दनचलने असूयां विस्मृत्य मद्वेगोत्कर्षजनितानन्दसुन्दरं श्रीमन्नयनयुगलमधुरावलोकनविषयीकृतः । पुनर्मध्यमवीथ्यवस्थामाह—एष इति, तत्कालोपबृंहितं देहमालोक्योक्तिः । उपबृंहणप्रकारमाह—प्रान्ते निजान्ते अवसज्जद्भिः वेगवायोराकर्षणसंस्कारेण श्लिष्यद्भिः जलधरपटलैः जलधरशब्देन विद्युदुन्मेषात् कनकप्रभत्वं पक्षसाम्यार्थं सिद्धम् । तैरत्यायतीभूताः विसदृशसम्बन्धप्रतीतिरहितं द्विगुणव्याप्तयः पक्षा यस्य । एवं प्राप्त इत्यौद्धत्यगर्भमभिधानम् ॥ २४ ॥

एवमस्यागमनं ज्ञात्वा श[...]न एव साध्यस्य सिद्धप्रायतां विचिन्त्य कृतार्थ आत्मनः पुनरपि पु[...]तामाशास्ते—संरक्षतेत्यादि । स्वशरीरदानात पन्नगं संरक्षता, न तु वस्त्वन्तरेण । पुण्यं परत्राणसिद्धमदृष्टम् अर्जितं यत्, तेन हेतुनेति वाक्यार्थपरामर्शः । भवे भवे जन्मनि जन्मनि । पुण्यमित्यनुषङ्गः । भूयादित्याशास्ते । किमेतदेव प्रार्थ्यत इत्याह—परार्थः खलु परः अर्थः प्रयोजनं यस्य । खल्वित्यवधारणेन स्वभोगादिकं व्यावर्तयति । परः परसम्बद्धरक्षादिः । अनेनाभिव्यक्तैर्मतिधृतिप्रहर्षैरुपोद्बलितस्यामोहाध्यवसायस्थाय्यात्मनो दयावीरस्योत्कर्षः प्रतिपादितः ॥ २५ ॥

अथागतस्य गरुत्मतो विपर्यस्तभ्रमं साध्यनिश्चयं प्रतिपादयति—नायकं निर्वर्ण्येति । वध्यचिह्नावरणनैश्चल्यदर्शनमेव निर्वर्णनम् ।

---

१. 'तव', २. 'यनेन', ३. 'द्वाव' च. पाठः.

भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ २६

(अभिपत्य नायकं गृह्णाति । नेपथ्यात् पुष्पाणि पतन्ति । दुन्दुभिध्वनिश्च । ऊर्ध्वं दृष्ट्वाकर्ण्य च) अये पुष्पवृष्टिर्दुन्दुभिध्वनिश्च ।

---

अस्मिन्नित्यादि । वध्यशिलातल इति पूर्वसमयानुस्मरणम् । निपतितं निश्चेष्टं, न त्वन्यभुजङ्गवन्मरणभयेन विवर्तनपरम् । शेषान् स्वव्यतिरिक्तान् अहीन् स्वजात्यान् रक्षितुम् । अस्मिन् दिन इति शेषः । अन्यथा समयलङ्घनेऽहं सर्वानेकदिवस एव भक्षयेयम् । तन्निवृत्तये । अतोऽयमद्यान्यान् रक्षतीति रक्षितुमित्युक्तम् । अथैतन्निमित्तमन्येषां नष्टानामनष्टानामप्यनुग्रहो भवतीति भाविवृत्तानुसारेण सामाजिकमनःसु तदुक्त्यनुसारेण बीजवापं करोति कविः । निर्भिद्येति । अधुना निर्भिद्य उद्धरामि, न पूर्ववत् । अस्य क्षोभराहित्यादेकान्ते भोक्तुं युक्तम् । तदुद्धरामीत्यर्थः । वक्षसि निर्भिद्य एवमुद्धरणसौकर्यम् । चञ्च्वेति । उद्धरणनिर्भेदनसाधारणं नखस्याप्युपलक्षणमेतत् । अशनिदण्डवद् दण्डाकारकुलिशवत् चण्डतरया अतितीक्ष्णदीर्घया । दैर्घ्यार्थं दण्डग्रहणम् । चञ्चुग्रहणेन सकृदाघात एव वक्षोभेदो नयनसौकर्यं च प्रतिपादितम् । भोक्तुम् एकान्ते यथेष्टमाहारयितुम् । भोगिनमित्यनेनान्यथाप्रतीतिमार्गं निरुणद्धि । उद्धरामीति वर्तमानसामीप्ये । अत एव तरसेत्यविलम्ब उक्तः । तत्र हेतुः — रक्ताम्बरप्रावृतमिति । वध्यचिह्नदर्शनेन विकल्पाविषयत्वम् । प्रावृतं प्रकर्षेण सर्वत आच्छादितम् । न किञ्चिदप्यङ्गं दृश्यते । नैश्चल्येन सर्वावरणेन च भयप्रकर्षः कल्प्यते । अत एवमुत्प्रेक्षा । मद्भयेन दीर्यमाणात् स्वयमेव भिद्यमानाद् हृदयात् प्रस्यन्दिना बहुलं स्रुतेन असृजा लिप्तमिव उपचितसर्वाङ्गमिव । भयकार्योत्प्रेक्षयान्यथाशङ्कानिरासः प्रकाशितः ॥ २६ ॥

अत एवाभिपत्य नायकं गृह्णातीति निश्चयफलप्रकाशनम् । एवमस्य लोकोत्तरदयारूपं धर्ममाकलय्य देवैर्मुक्ता पुष्पवृष्टिः दुन्दुभिध्वनिश्च । तददृष्टपूर्वमालक्ष्य गरुडः शङ्कते विस्मयेन । पुष्पवृष्टिः दुन्दुभिध्वनिश्च । कथं पुष्पवृष्टिः, किं दुन्दुभिध्वनिरित्युभयथा शङ्का ।

---

१. 'चञ्चुविशेषणे' ग. च. पाठः.

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ।

(विहस्य)

आ ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः
सार्धं संवर्तकाभ्रैरिदमपि रसितं जातसंहारशङ्कैः ॥ २७ ॥

**नायकः**— (आत्मगतम्) दिष्ट्या कृतार्थोऽस्मि ।

---

ऊर्ध्वावलोकनेन पुष्पवृष्टिं निश्चित्य दुन्दुभिध्वनिं स्वरूपेण शङ्कते— इयं पुष्पवृष्टिः नभस्तः निपतति । आमोदेन अतिहृद्येन सौरभेण आनन्दिता आमोदप्रियत्वात् समन्तान्नन्दिता अर्थात् समाकृष्टाश्च अलयः यया । विशेषणेन पुष्पवृष्टेर्मांसलत्वं प्रकाशितम् । किमिति स्वरूपे सिद्धे हेतौ विमर्शः कस्मादिति । स्वर्गे किमेष दुन्दुभीनां निनाद इति निनादस्वरूपस्य दुन्दुभिसम्बन्धित्वेन संशयः । किमेष निनादः दुन्दुभीनाम्, अन्यसम्बन्धी वा इति । दिशां चक्रं मुखरयतीति अत्रापि मांसलत्वप्रकाशकम् । उभयस्य हेतुस्व[1]रूपकल्पनेन कौ[2]तुकाभावात् प्रहासः । उभयस्मरणं द्योतयति—आ इति । ज्ञातमिति हेतुस्वरूपविषयं ज्ञानम् । उभयं प्रकाशयति— सोऽपीति । न केवलं समुद्रादयः, स्वयं स्थिरोऽपीति वा । मन्ये निरूपयामि । ज्ञातमिति सि[3]द्धस्य ज्ञानस्य सामान्यरूपस्य भेदेन विमर्शक्रमार्थं[4] मन्ये इति पुनर्वचनम् । एवं मननेन ज्ञानसिद्धिरित्यर्थः । ममेत्यौद्धत्यगर्भं वचनं, नान्येनैवमिति । जवमरुता आगमनसमयवेगवायुना । कम्पितश्चालितः । पारिजातः सुरतरुराजः । तत्कम्पनेन पुष्पवृष्टिरिति पुष्पवृष्टिहेतुः समर्थितः । द्वितीयेस्वरूपं विमृशति । मन्ये इत्यत्रापि सम्बध्यते । इदमपि ज्ञातमिति व्यवहितः समन्वयः । इदमिति नादेन दिक्चक्रमुखरीकरणं, नादस्वरूपमित्यर्थः । संवर्तकाभ्रैः प्रलयमेघैः । रसितं शब्दितम् । प्रत्येकं नादे एवं मांसलत्वं न भवेदिति सम्भूयेत्युक्तम् ।

---

१. 'ति हे' क. पाठः. २. 'ति सिद्धस्य' च. पाठः. ३. 'द्धं प्रकाशयति सोऽपीति । न केवलस्य ज्ञा' ख. पाठः. ४. 'यं' क. पाठः.

गरुडः — (कलयन्)

नागानां रक्षिता भाति गुरुरेष यथा मम ।

तथा सर्पाशनाशङ्कां व्यक्तमद्यापनेष्यति ॥ २८ ॥

तद् यावदहं मलयशिखरमारुह्य यथेष्टमाहारयामि । (नायकं गृहीत्वा निष्क्रान्तः ।)

चतुर्थोऽङ्कः ।

---

तत्र हेतुः — जातसंहारशङ्कैरिति । संहारः प्रलयः मम जवमरुता प्रलयोपक्रममाशङ्क्य अस्माभिरपि सहकर्तव्यमिति सम्भूय तैः कृतोऽयं नादः, न दुन्दुभिध्वनिः । अत उभयस्यास्मन्महत्त्वमेव हेतुरित्यौद्धत्येन हासः । इदमपि रसितमित्यन्वये संवर्तकाभ्रैः कृतमित्यध्याहार्यम् । यद्येवं न योज्यते, दुन्दुभिध्वनित्वेन पूर्वं निश्चितस्यान्यथा साधनं दुर्घटं स्यात् । अत्र कविस्तत्त्वप्रकाशनहेतूनां साध्यशेषार्थं गूहने स्वचातुर्यं गरुडप्रतीतिमुखेन दर्शितवान्, पुष्पवृष्ट्यादीनामन्यथाकरणेन साध्यस्य मध्ये भङ्गाभावनिरूपणात् ॥ २७ ॥

नायकस्य दिष्ट्या कृतार्थोऽस्मीति हर्षप्रकाशनम् ॥

अथैतदुद्धरणे निस्सामान्यं महापुरुषोचितं देहगौरवं स्वसाध्यानुगुण्येन कल्पयन् निरूपयन्नाह — नागानामित्यादि । एष नागानां रक्षिता स्वदेहेन अन्येषां रक्षिता । अद्य भक्ष्यत्वेन कल्पित इत्यर्थः । गुरुः पूर्वाहिभ्यो दुर्धरः । भाति उद्धरणे बुद्धौ प्रकाशते । यथा येन प्रकारेण, तथा तेन प्रकारेण सामान्यस्य भेदको विशेषः प्रकारः कल्प्यत इति शेषः । अद्य, न पूर्वमेवमित्यर्थः । मम सर्पाशने अहिभोजने आशङ्काम् अद्य पूर्तिरस्ति वा न वेति विकल्पम् । व्यक्तमपनेष्यति गौरवेण मांसरुधिरादीनां प्राचुर्यकल्पनात् तत्कार्या तृप्तिरपि निश्चीयत इत्यर्थः । अत्र —

"प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचनम् ।
पताकास्थानकं तुल्यसंविधानविशेषणम् ॥"

इति,

"व्यर्थो वचनविन्यासो यत्र स्यात् काव्ययोजितः ।
उपन्याससुयुक्तश्च तच्चतुर्थमुदाहृतम् ॥"

इति च प्राकरणिकस्य भाविनो वस्तुविशेषस्यान्योक्त्यान्यार्थप्रतिपादिकयोक्त्या सूचनरूपं पताकावच्छोभाकरं पताकास्थानकमिति लक्षितस्य नाटकाङ्गस्य सामाजिकमनःसु अनुकार्यप्रतीतिमनपेक्ष्य वस्तुस्फुरणार्थं प्रकाश्यस्य तुल्यसंविधानरूपो भेदोऽप्यत्र प्रतिपादितः । नागानां रक्षिता सर्वेषामेव जीवनदानात् । गुरुरेष मम धर्मोपदेष्टा यथा भाति प्रकाशते तथा सर्पाशने नागभक्षणे आशङ्का कर्तव्या वा न वेति विकल्पं व्यक्तमद्यापनेष्यति । 'प्राणिनो न हन्तव्या' इत्युपदेशेनेति वक्तृप्रतीतिं विनापि भाविवृत्तानुसारेण सामाजिकैरेवमनुसन्धातुं शक्यत्वात्, सूचितस्य भाविवृत्तान्तयोजने शोभाकरत्वाच्च ॥ २८ ॥

एवमस्य गौरवेण तृप्तिं समर्थ्य भक्षणप्रकारं निश्चिनोति — तद् यावदित्यादि । यदेवं गौरवेणास्य तृप्तिजनकत्वं, तस्मादित्यर्थः । मलयशिखरं सन्निकृष्टमारुह्य यथेष्टं महानागानाम् एकान्ते हि भोजनं सुखायत इत्युक्तत्वाद् विविक्ते सुखमासीनोऽभ्यवहरामि । एवं तस्य निष्क्रमणप्रतिपादनं तदानीं भक्षणं विना भाविवृत्तनिर्वहणार्थम् ॥

इति शिवरामस्य कृतौ नागानन्दविमर्शिन्यां

चतुर्थाङ्कार्थविमर्शनं

समाप्तम् ।

---

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति प्रतिहारः ।)

**प्रतिहारः—**

स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥ १ ॥

---

एवं परार्थं देहत्यागरूपे परमसाध्ये निर्व्यूढेऽपि नाटकान्तनिर्देक्ष्यमाणानां गरुडविनयादीनां साध्यान्तराणां नान्तरीयकतया सिद्धिप्रतिपादनायाङ्कान्तरप्रस्तावः । तत्रापि रौद्रजन्यस्य करुणस्य पित्राद्याश्रयस्य चितारोहणोद्यमं यावत् परिपोषं नीयमानस्य देवीवरेण नायकप्रत्युज्जीवनादिशेषतया प्रस्तुताङ्गस्य घटनाय प्रथमं प्रतिहारप्रवेशः । प्रविष्टः स सामान्ये पदं निधाय विशेषं प्रकाशयितुं तदनुगुणं सामान्यं निर्दिशति—स्वगृहेत्यादिना । स्निग्धे स्नेहालम्बने पुत्रादौ । स्वगृहोद्यानगते उद्यानस्यैव तावत् प्रमदादिविहारस्थलस्य न शङ्कनीयत्वम् । तत्रापि गृहसम्बन्धिनः । ततोऽपि स्वीयस्य । गृहाङ्गणतुल्यस्यान्यदीयस्यापरिचये शङ्काविषयत्वमपि स्यादिति स्वग्रहणं, तद्गतेऽपि । अपिशब्दः शङ्काया असम्भावनाद्योतकः । पापं व्यसनम् । विशङ्क्यते वृक्षमूलाघट्टनेन पतनं वायुना उपरि शाखापतनमित्यादि । पित्रादीनां शङ्काकर्तृत्वमर्थसिद्धम् । हेतावदृष्टे सम्भावनानामपर्यवसानम्, अनुपपत्तिर्वा । अतः सूक्ष्मोऽपि हेतुरपेक्ष्य इति चेत् । तत्र स्निग्ध इत्यनेनैव स्नेहस्यार्थे हेतुत्वे सिद्धेऽप्यन्यव्युदासाय शब्देनाह—स्नेहादिति । उक्तनयेन हेत्वन्तरानुत्थानादन्तःकरणवृत्तिरेवात्र हेतुः कल्प्यते । स्नेहस्यापायदर्शित्वाद् अयमेव हेतुरित्यर्थः । अपिशब्दसम्भावितमाह— किम्विति । दृष्टा बहवोऽपाया अनर्थाः यत्र तस्य । अत एव प्रतिभयस्य कान्तारस्य उक्तोद्यानप्रतियोगिनः मध्यस्थे किमु । तत्र हेत्वन्तरस्यापि सुघटत्वात् शङ्का युक्तैव ॥ १ ॥

---

१. 'क्ष' ग. च. पाठः. २. 'हेतुत्वा' क. पाठः.

तथाहि — जलनिधिवेलावलोकनकुतूहली निष्क्रान्तः कुमारो जीमूतवाहनश्चिरयतीति दुःखमास्ते महाराजो विश्वावसुः। समादिष्टश्चास्मि तेन। यथा — सुनन्द! श्रुतं मया सन्निहितगरुडप्रतिभयमुद्देशं गतो जामाता जीमूतवाहनस्तत्र चिरयतीति शङ्कित इवास्म्यनेन वृत्तान्तेन। त्वरिततरं विदित्वागच्छ किमसौ स्वगृहं गतो वा न वेति। तद् यावत् तत्रैव गच्छामि। (परिक्रामन्नग्रतो दृष्ट्वा) अये अयमसौ जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गणे सहधर्मचारिण्या वध्वा मलयवत्या पर्युपास्यमानस्तिष्ठति।

---

एवमुक्तं सामान्यं विशेषे संक्रामयितुमाह — तथाहीति। उक्तस्यार्थस्य व्याप्तिरस्मदवस्थायां दृश्यत इत्यर्थः। जलनिधीत्यादिना पूर्वसिद्धस्यानुवादः। चिरयतीति विलम्बते इति दुःखमास्ते कृच्छ्रेण स्वैरासिकामपि न करोति। दुःखमिति क्रियाविशेषणं, दुक्खं संवाअज्जइ इतिवत्। महाराज इति स्वामिबहुमतिर्दुःखानर्हता च प्रकाशिता। विश्वावसुरिति स्नेहद्योतकम्। नियोगेनाप्येतदनुमितमित्याह — समादिष्टश्चास्मीति। न केवलमासिकादौस्थ्यं, प्रवृत्तिरप्यस्तीति चशब्देन द्योतितम्। यथेत्यात्मानं प्रति तदादेशोपक्रमः। सुनन्देत्यादि प्रीत्या स्वाम्यादेशप्रकारमनुवदति। सन्निहितेन गरुडेन प्रतिभयं, प्रतिदिनं गरुडसन्निधानेन भयावहमित्यर्थः। उद्देशं गत इति नेदानीमपि प्रतिनिवृत्तः। जामाता इति नूतनेन सम्बन्धेनातिलोभनीयत्वं जीमूनवाहन इति पुरुषरत्नत्वेन रक्षणीयत्वं च प्रकाशितम्। अत एवाह — शङ्कित इवास्मीति। शङ्कितः वितर्कं प्राप्तः, किं गरुडादिभ्योऽस्य भयमस्ति न वेति भीत इव। अनेन श्रुतेन वृत्तान्तेन। इवशब्दो वाक्यालङ्कारे। तत् त्वरिततरं विदित्वागच्छ। अनेन मध्ये क्रियान्तरं निरस्यति। अत उक्तं त्वरिततरमिति।

---

१. 'पाद अ' च. पाठः.

तथाहि—

क्षौमे भङ्गवती तरङ्गितदशे फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सवयसा देव्या महापुण्यया ।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैषान्तिकवर्तिनी मलयवत्याभाति वेला यथा ॥ २ ॥

तदुपसर्पामि ।

---

वेद्यस्वरूपमाह— किमसौ स्वगृहं गतः । ततो देशादिति शेषः । न वेति । अभावपक्षेऽन्वेषणीयत्वात् तन्निर्देशः । इतिशब्दो वेदनप्रकारे । अत आदेशवचनोपसंहारार्थः पुनरितिशब्दो युक्तः । यथाशब्दस्य वा एवमित्यर्थकल्पनेनोपसंहारः । एवं स्वाम्यादेशं निरूप्य तदनुष्ठानायोपक्रमते — तद् यावदित्यादि । अग्रतो दृष्ट्वेति तद्दर्शने बहुमतिः प्रकाशिता । तामेव सम्बन्धपुरस्सरं प्रकाशयति — अये इति । दिदृक्षितस्य सहसा दर्शनेन संभ्रमः । अयं पुरो वर्तमानः । असौ दिदृक्षितत्वेन बुद्धौ साक्षात्कारसमनन्तरमेव दृष्ट इति हर्षः । जीमूतवाहनस्य अस्मत्प्रियसम्बन्धिनः । पिता तत्पितृत्वमस्य युक्तमेवेति भावः । जीमूतकेतुः प्रसिद्धः । उटजाङ्गण इति सेवार्हे स्थाने । सहधर्मेत्यादि तत्रापि बहुमतिः । वध्वा स्नुषया । मलयवत्येति स्नेहगर्भोक्तिः । पर्युपास्यमानः निजौचित्येन सेव्यमानः । ति[1]ष्ठतीत्यादरेणोक्तिः ।

अत एव स्थितिप्रकारं वर्णयितुमुपक्रमते — तथाहीति । अयं जीमूतकेतुः तोयनिधेः सुसदृशीं श्रियं धत्ते । अयमिति साक्षात्क्रियमाणसंस्थानकान्तिमहत्त्वादिगुणद्वारा सादृश्यस्फुरणमिति सूचितम् । तोयनिधिश्रीसदृशीं श्रियं शोभां धत्ते इत्यत्र शोभाहेतूनां गाम्भीर्यादीनां साम्येऽर्थतः सिद्धेऽपि सुसदृशीमिति प्रकर्षस्य विवक्षितत्वात् तदानुगुण्येन सादृश्यहेतून् प्रतिपादयति । क्षौमे धवलस्वभावे पट्टवसने वहन् परिधानीयोत्तरासङ्गरूपेण । भङ्गवती विचित्रविन्याससन्तुरितसंस्थानेन केवल-

---

१. 'र' घ. पाठः.

(ततः प्रविशत्यासनस्थः पत्नीवधूसमेतो जीमूतकेतुः ।)

**जीमूतकेतुः—**

**भुक्तानि यौवनसुखानि यशो विकीर्णं**
**राज्ये स्थितं स्थिरधिया चरितं तपोऽपि।**
**श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं**
**चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥ ३ ॥**

---

मृजूकृते। तरङ्गिता मृदुतया निःश्वासवातादिना विचलिता दशा अञ्चलानि ययोः। अतः फेनाम्बुतुल्ये फेनरूपाकारसहिताम्बुतुल्ये। भङ्गेनान्तरा निम्नोन्नतत्वं मन्दचलनं धावल्यं च फेनसाम्यनिर्वाहकम्। अयमेकः सादृश्यप्रकारः। पुनर्देव्या विराजितः स्वयं द्योतमानया धर्मपत्न्या विशेषेण राजितः। जाह्नव्येव, अस्य समुद्रसाम्ये एतत्सम्बद्धाया देव्याः समुद्रसम्बद्धजाह्नवीसाम्यमुपपन्नम्। सवयसा समानवयसा, उचितवयसेत्यर्थः। महापुण्यया तन्नामविशिष्टया। अन्यत्र वयोभिर्हंसादिभिः सहितया महत् पुण्यं पावनत्वं यस्यास्तयेति। अत्र शाब्दं साधर्म्यम्। यस्येत्यादि विधिगर्भोऽनुवादः। प्रतीतिक्रमेणोक्तिः। एषा अन्तिकवर्तिनी मलयवती। वेला यथा वेलेवाभाति। अन्तिकवर्तिनीत्वं समानधर्मः। एषा वेलेव आभातीति विधिरूपम्। साधर्म्याज्झटिति सादृश्यप्रतीतेरनुवादरूपेणोक्तिः। वेलायाः समुद्रानुवर्तनं समुद्रस्य वेलापालनं च परस्परानुरूप्यम् अत्रायत्तसाध्यमित्यर्थः। एवमात्मश्रिया सम्बन्धिविशेषेण च सादृश्यप्रकर्षः। अतः सुसदृशीमित्युक्तम् ॥ २ ॥

तदुपसर्पामीत्यनेन अशङ्क्यदेशस्थितत्वात् प्रवृत्तिनिवेदने त्वरा सूचिता ॥

अथ जीमूतकेतुः सिद्धसाध्यतया निरतिशयप्रकर्षं सिद्धानां प्रत्येकं परिगणनया सहचरीवधूसमक्षं प्रकाशयति—भुक्तानीत्यादिना। भुक्तानि अनुभूतानि।

"भुजिः पालनकौटिल्याभ्यवहारानुभूतिषु"

इति भोजः। यौवनसुखानि 'यौवने विषयैषिणामि'त्युक्तनीत्या इन्द्रियाणां

तत्तदिन्द्रियार्थग्रहणे शक्तिपौष्कल्येन मनसस्तत्काले भोगोन्मुखतया च वैषयिकसुखस्य समुचितत्वाद् यौवनग्रहणम्। सुखहेतूनां स्रक्चन्दनादीनां बहुत्वात् तद्द्वारकं सुखस्य बहुत्वम्। न कानिचिदप्यलाभेनानवसरेण वा अभुक्तानि पश्चात्तापविषयाणीत्यर्थः। तर्हि सुखलिप्सया यशस्यं कर्म न कृतं चेदकृतार्थता। तत्राह— यशो विकीर्णं, व्याप्येषु लोकेषु सर्वत्र प्रसारितम्। तर्हि यशःसम्पादनतया परपुराक्रमणादिषु भ्रान्तमेव, जनपदे स्वैरासिका न कृता इति च न, राज्ये स्थितम्। रक्ष्यरक्षणादिपरतयेति शेषः। अन्यथा स्थितिमात्रस्याकिञ्चित्करत्वात्। एवं त्रैवर्गिकेषु प्रवृत्तिरविकला। तुरीयं प्रति न किञ्चित् कृतमिति चेद् वञ्चित एव। तथाच न, तपोऽपि चरितं सम्पादितम्। तपःकर्मकश्चरतिः करणे प्रसिद्धः। न केवलमैहिकमेव, पारत्रिकमपि कटाक्षितमित्यपिशब्दार्थः। तत्रापि

"समाधिस्थानकस्थस्य चेतश्चेद् वृत्तिचञ्चलम्।
तत्तस्य तत्समाधानं सममुन्मत्तताण्डवैः॥"

इत्युक्तक्रमेण मनःसमाधानं न चेद् उन्मत्तताण्डवप्रख्यमेव तपः। तथाच न, स्थिरधिया अनुसन्धेयतत्त्वनिर्यत्ननिष्ठितचेतसा। एतदर्थमेव विषयाणां भुक्तोज्झितत्वमादावेवोक्तम्। 'कामं यौवने स्थाविरे धर्ममोक्षौ' इति कामसूत्रकारस्यापि क्रमकथनमेतदर्थमेव। तदनुसारेण सुखरूपस्य कामस्य प्रथमं निर्देशः। पुनरधिकारक्रमेण यशोरूपस्यार्थस्य। 'बाल्ये विद्याग्रहणादीन्' इति वदता अधिकारक्रमेणार्थसाधनं सूचितम्। राज्यस्थित्या धर्मः तपसा चरम इति चतुर्वर्गविषया वृत्तिरुक्ता। एवं सर्वार्थसिद्धावपि

"न मामवति सद्वीपा रत्नसूरपि मेदिनी"

इत्युक्तवद् अपुत्रस्य न कृतार्थता, ऋणबद्धत्वात्। सत्यपि पुत्रे निर्गुणश्चेत् कुपुत्राद् वरमपुत्रतेति दुःखहेतुः स्यात्। तथाच न इति विद्यमानतामनूद्य गुणवत्तां कार्यद्वारा विदधाति— श्लाघ्यः सुत इति। दैवानुग्रहादेकः सुतो विद्यते। स च श्लाघ्यः, सर्वैर्गुणैः सर्वेषां मम च।

"अपि लालाविलमुखं हृदयाह्लादकारकम्।
अपत्यं तुल्यतां केन दर्शनस्पर्शनादिभिः॥
किं पुनस्तद् यशोधर्ममानश्रीकुलवर्धनम्।"

**प्रतिहारः** — (सहसोपसृत्य) जीमूतवाहनस्य ।

**जीमूतकेतुः** — (कर्णौ पिधाय) शान्तं शान्तं पापम् ।

**देवी** —(क) पडिहदं खु अमंगळवअणं ।

(क) प्रतिहतं खल्वमङ्गलवचनम् ।

इत्युक्तन्यायेन परमानन्दकन्दभूत इत्यर्थः । तस्यापि दारक्रिया न चेद् वंशानुबद्धं किञ्चित् कृत्यशेषमस्तीत्यकृतार्थता । तत्राह — स्नुषा इयम् । अत्रापि पूर्ववद् विध्यनुवादौ । तत्र

"समस्याद्याः सहक्रीडा विवाहाः सङ्गतानि च ।
सदृशैरेव कर्तव्या नोत्तमैर्नापि चाधमैः ॥"

इत्यसदृशसम्बन्धो न हृद्यः । तत्प्रत्युत सुसदृशान्वयजा सिद्धेन्द्रकुलसम्बद्धा । तस्मादस्माकं महत्त्वावह इति सुशब्देन प्रकाशितम् । तत्रापि नूतने विवाहे स्वजनवात्सल्येन मातुरन्तिकवर्तिनी चेद् वृद्धानामस्माकं शुश्रूषाप्रीतिर्न घटत इत्यपि न । इयं पुत्रवच्चित्तानुवर्तनप्रार्थिनी अनाहूतोपसर्पणार्थं नयनानन्दकारिणी पुरो वर्तते । एवं प्रीतिगर्भेणानुसन्धानक्रमेणोक्तिः । उक्तप्रकारेण कृतार्थतया अनेन देहेन साध्यान्तराभावाद् मयाद्य परिपूर्णदेहस्य पञ्चमे भावे । मृत्युर्ननु चिन्त्यः प्राप्यतया निरूपणीयः । नन्विति सहचरीमुखप्रेक्षणेन तत्संवादे अनवधारणे वा, अभ्युदयानामस्थिरत्वात् । अनन्तरभाविनीं विपदमनीक्षित्वा क्षीणप्रायास्य देहस्य षष्ठं भावमासादयेयमिति प्राप्यतया चिन्ता ॥ ३ ॥

एवं चिन्त्यो मृत्युरिति वाक्योपसंहारानन्तरं भाविविपत्सूचकत्वेन मृत्युसम्बन्धित्वेन जीमूतवाहनस्येति स्ववाक्यशेषत्वेनापि त्वरितेन प्रतिहारेणोक्ते झटिति दुर्निमित्तबुद्ध्या हर्षपरकाष्ठाया दुःसहे दुःखे पतितोऽमङ्गलप्रायश्चित्तरूपेण कर्णपिधानपूर्वं शान्तिं प्रार्थयते—शान्तमित्यादि । आशंसायां भूतवत् प्रयोगः । पापस्यामङ्गलोत्थापकत्वात् तच्छान्तिं प्रार्थयते ॥

तदनुसारेण प्रतिहतं खलु अमङ्गलवचनमिति ॥

**मलयवती** — (क) इमिणा दुण्णिमित्तेण वेवदी विअ मे हिअअं ।

**जीमूतकेतुः** — भद्र ! किं जीमूतवाहनस्य ।

**प्रतिहारः** — जीमूतवाहनस्य वार्तामन्वेष्टुं महाराजविश्वावसुना युष्मदन्तिकं प्रेषितोऽस्मि । तदाज्ञापयतु महाराजः किं मया स्वामिनो विज्ञापनीयमिति ।

**जीमूतकेतुः** — किमसन्निहितस्तत्रापि मे वत्सः ।

(क) अनेन दुर्निमित्तेन वेपत इव मे हृदयम् ।

जीमूतवाहनस्य मृत्युश्चिन्त्य इति समन्वयस्फुरणाद् दुर्निमित्तबुद्ध्या अनेन दुर्निमित्तेन वेपत इव मे हृदयमिति नायिकोक्तिः । अतिक्रूरं नैमित्तिकं निरूप्य वेपते रणरणकेन भ्रमति ॥

एवं दुःखप्रवाहपतितमात्मविषाददर्शनेन प्रारब्धसंहृतवचनं सम्मुखीनं तं जीमूतवाहनस्येति साकाङ्क्षपदोच्चारणे निजवाक्यसमन्वयेन शङ्कितानिष्टोऽनुनयपूर्वकं तत्त्वबोधार्थं तदाकाङ्क्षितं वाक्यशेषं पृच्छति — भद्रेत्यादिना । जीमूतवाहनस्येत्युक्ते तत्सम्बन्धितया किं त्वया विवक्षितं तदुच्यतामित्यर्थः ॥

तच्छेषतया तस्योक्तिः — जीमूतवाहनस्येत्यादि । एतद्विषाददर्शनेन जीमूतवाहनस्य समुद्रतीरगमनानुक्तिः । अत एव वार्तामन्वेष्टुमिति कथनम् । किं विज्ञापनीयमिति गमने त्वरा सूचिता ॥

अथ क्रमेण करुणस्य परिपोषः प्रतिपाद्यते । तत्राप्यसन्निहित इत्यनेन पूर्वं तत्रस्थ इति मत्वा प्रीतिरिति ध्वनितम् । मे वत्स इति ममत्वस्य गाढत्वम् ॥

**देवी** — (सविषादम्) (क) महाराअ ! जइ तहिं पि णत्थि, ता कहिं दाणिं गओ मे पुत्तओ, जेण एव्वं चिराअदि ।

**जीमूतकेतुः** — नियतमस्मत्प्राणयात्रार्थं दूरं गतो भविष्यति ।

**मलयवती** — (सविषादमात्मगतम्) (ख) अहं पुण मुहुत्तअं पि अय्यउत्तं अपेक्खन्ती अण्णं एव्व किं वि आसंकामि ।

**प्रतिहारः** — आज्ञापयतु किं मया स्वामिनो विज्ञापनीयम् ।

**जीमूतकेतुः** — (वामाक्षिस्पन्दनं सूचयन्) जीमूतवाहनश्चिरयतीति मय्याकुले विचिन्तयति

(क) महाराज ! यदि तत्रापि नास्ति, तत् कदानीं गतो मम पुत्रकः, येनैवं चिरयति ।

(ख) अहं पुनर्मुहूर्तकमप्यार्यपुत्रमपश्यन्त्यन्यदेव किमप्याशङ्के ।

महाराज ! यदि तत्रापि नास्ति, क्वेदानीं गतो मम पुत्र इति शोकपोषको विषादः । येनैवं चिरयतीति कुत्रापि गमनं विलम्बनेन कल्प्यत इत्यर्थः ॥

नियतमिति । अस्यानन्यपरतया हेतुनिश्चयः । अस्माकं प्राणयात्रार्थं प्राणयापनार्थं, प्राणवृत्तिसाधनसम्पादनार्थमित्यर्थः । 'यात्रा स्याद् यापने गतौ' इति यापने यात्राशब्दः । दूरं परिश्रमं सोढ्वा फलादिकमाहर्तुमिति दयोत्कर्षः प्रकाशितः । भविष्यतीति एतदेव निमित्तं सम्भाव्यत इत्यर्थः । अत्र भाविव्यसनानुसारेण अस्मन्मरणार्थमिति कविबुद्ध्या अनभिनेयोऽप्यर्थः सूचितः ॥

अहं पुनरिति । अन्यदेव किमपीत्यनिष्टस्य गोपनेन कथनम्[1] ॥

१. 'कथम' च. पाठः.

स्फुरसि किमदक्षिणेक्षण! मुहुर्मुहुः कथयितुं ममानिष्टम्।
हतचक्षुरपहतं ते स्फुरितं मम पुत्रकः कुशली ॥ ४ ॥

(ऊर्ध्वं पश्यन्) अयमेव मे भुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुरन् जीमूतवाहनस्य श्रेयः करिष्यति। (सविस्मयम्)

आलोक्यमानमतिलोचनदुःखदायि
रक्तच्छटा निजमरीचिरुचो विमुञ्चत्।

---

ततोऽपि दुर्निमित्तान्तरं करुणस्यावतरणमार्गप्रदानायाक्षिस्पन्दनं सूचयन् वक्ति। तदभिमुखमित्यर्थात् सिद्धम्।

स्फुरसीत्यादि। अदक्षिणेक्षण! एवमयुक्तकारिणस्तवादक्षिणत्वं युक्तमेवेत्यधिक्षेपोपक्रमः। तदुपपादयति—जीमूतवाहन इत्यादिना। विचिन्तयति स्फुरसीति। समकालत्वेनानिष्टकथनप्रयोजनत्वं स्फुरणस्य कल्पितम्। तत्रापि मुहुर्मुहुरिति शङ्कातिशये हेतुः। हतचक्षुः! हे कुत्सितचक्षुः! कुत्सितत्वमन्तरङ्गस्यानिष्टकथनेन। अपहतं निरर्थकं, यतो मम पुत्रकः सर्वदानुकम्पनीयः। कुशली नित्यं क्षेमवान्। एतदकुशलं तव स्फुरणेन वक्तव्यम्। तत् सम्पादयितुं न शक्यमित्यर्थः ॥ ४ ॥

दैवादागतमहं सूचयामि। तत् कथं दैवप्रार्थनं विना वाङ्मात्रेण हठान्निरस्यसीति युक्तिमाशङ्क्य दैवप्रार्थनार्थमूर्ध्वावलोकनम्। तत्र दिनेशमवलोक्य तटस्थवृत्त्या शिवं प्रार्थयते—अयमेवेति। चक्षुषा सूचितं सजातीयेन गुणोत्तरेणापनयामीत्येवकारेण द्योतितम्। भुवनैकचक्षुः भुवनस्य एकः केवलः न तु देहमात्रस्य, चराचरस्यैवेति व्यतिरेकः। भगवान् ज्ञानमयः, न त्वन्याविष्कृतचेतनः। सहस्रदीधितिः सूर्यः न खल्वन्यनयनवत् परिमितरश्मिरिति च। स्फुरन् प्रकाशमानः, स्पन्दमान इति च। स्फुरन्निति स्फुरणेन पूर्वमशुभकथनम्। स्फुरणेनैव श्रेयसः सम्पादनं न तु कथनमित्यपि विशेषः।

एवं भङ्ग्या अमङ्गलनिवृत्त्यर्थं दैवप्रार्थनावसरे दर्शनसौकर्यार्थं विस्मयारोहणेन पुनरपि करुणपतनार्थं च चूडामणिपतनसंघटने तदवलोकनेन सविस्मयमाह—आलोक्यमानमित्यादि। एतत् पुरः पतति।

उत्पातकालतरलीकृततारकाभ-
मेतत् पुरः पतति किं सहसा नभस्तः ॥ ५ ॥

**कथं चरणयोरेव पतितम् ।**

(सर्वे निरूपयन्ति ।)

**जीमूतकेतुः —** अये लग्नसरसमांसकेशश्चूडामणिः । **कस्य पुनरयं भविष्यति ।**

**देवी —** (सविषादम्) (क) पुत्तअस्स विअ मे एदं चूडार-अणं ।

(क) पुत्रकस्येव मे एतच्चूडारत्नम् ।

किमिति वस्तुस्वरूपानिश्चयेन । किं वस्तु इति शेषः । आलोक्यमानमिति वस्तुस्वरूपानिर्णयेऽपि नयनगोचरतां गतमित्यर्थः । अतिलोचनदुःखदायि अतिलोचनं लोचनद्वयसम्बन्धेन यावद् दुःखं मनसस्ततोऽप्यधिकं दुःखं दातुं शीलमस्य, अतिदुःखकरमित्यर्थः । अतिशयितवस्त्वन्तरदर्शनातिरिक्तं लोचनदुःखमिति वा । रक्तच्छटाः विमुञ्चदिति अधःपातक्रमेण दृष्टेरवनतिः, तदानुगुण्येन विशेषग्रहणं, तेन इतो रक्तं स्रवतीति ज्ञायते । निजमरीचिरुचः । अथ रुचिमद्वस्तु इति ज्ञातुं शक्यम् । रक्तधारादर्शनेऽस्य रुच एता इति सम्भावयितुं शक्यमित्यर्थः । तेजोविशिष्टत्वबुद्ध्या उत्पातकालतरलीकृततारकाभमिति । प्रलयकाले तरलीकृतायाः स्वस्थानच्युतायाः तारकाया इवाभा यस्य । तरलीभावोपपत्तये उत्पात शब्दः । तेन भयकौतुकनिमित्तत्वम् । एतदिति सन्निधौ दृष्टा । पुरः पतति, सहसा अचिन्तितम् ॥ ५ ॥

कथं चरणयोरेवेति शङ्कागर्भोक्तिः ॥

अये इति विषादे । चूडामणिरिति वस्तुनिश्चयः । लग्नं श्लिष्टं सरसं रुधिरार्द्रं मांसं केशाश्च यत्रेति चूडामणित्वगमकम् । कस्येति वितर्कः ॥

पुत्रकस्येव मे एतच्चूडारत्नम् ॥

**मलयवती** — (क) मा एवं भण ।

**प्रतिहारः** — महाराज! मा अविज्ञायैवं विक्लबो भूः । अत्र हि —

ताक्ष्येंण भक्ष्यमाणानां पन्नगानामनेकशः ।
उल्कारूपाः पतन्त्येते शिरोमणय ईदृशाः ॥ ६ ॥

**जीमूतकेतुः** — देवि! सोपपत्तिकमभिहितमनेन । कदाचिदेवमपि स्यात् ।

(क) मैवं भण ।

मा एवं भण, अमङ्गलमिति शेषः ॥

महाराजेत्यादि तदाश्वासनाय । अविज्ञाय तत्सम्बन्धित्वमनिश्चित्येत्यर्थः ।

अनिश्चये हेतुमुपपादयति — अत्र हीति । हिशब्दो हेतौ । भक्ष्यमाणानां प्रवाहरूपेण ग्रम्यमानानाम् । अनेकशः निरन्तरोत्पन्नत्वात् । उल्कारूपाः उल्काग्रहवद् भयावहाः । पतन्ति भक्षणप्रवाहवत् । एते इति अन्येऽप्येतच्छायाः सूक्ष्मेक्षिकायां द्रष्टुं शक्या इत्यर्थः । शिरोमणय इति भक्षणानुपयोगान्निरासः । तत्तेषां मध्ये एकतमो न वेत्यनिश्चित्य चापलं मा कृथाः । भवति चपले एतयोश्चापलं कथमपनेतव्यमिति मा विक्लबो भूरिति विशेषकथनम् । नखोत्खाता इति केषाञ्चित् पाठः । तत्र भक्ष्यमाणानामित्युक्तत्वाद् (अचर्वणीयत्वेन स्फुरन्तीति विनिष्ठ्यूतफणमणिरितिवत् ?) चञ्चूत्खननं युक्तम् ।

"तच्चञ्चूक्रकचभ्रष्टं रक्तधारापुरस्सरम् ।
अङ्के मलयवत्यास्तच्चूडारत्नमथापतत् ॥"

इत्यादिक्षेमराजकथानुसारेणात्र वस्तुस्थितिः ॥ ६ ॥

सोपपत्तिकमिति । तत्र पन्नगभक्षणस्य नित्यत्वात् तेषां रक्तवत्त्वाच्च । कदाचिदिति । अस्मद्भाग्यशेषादित्यर्थः ॥

**देवी** — (क) सुणन्द ! अविणाम कदाइ एत्तिआए वेळाए सोसुरउळं एव्व गदो मे पुत्तओ भविस्सदि । ता गच्छ, जाणिअ ळहुं[1] एव्व अह्माणं णिवेदेहि ।

**प्रतिहारः** — यदाज्ञापयति देवी । (निष्क्रान्तः ।)

**जीमूतकेतुः** — देवि ! अपिनाम नागचूडामणिरयं भवेत् ।

(ततः प्रविशति रक्तवस्त्रसंवीतः शङ्खचूडः ।)

**शंखचूडः** — (सास्रम्) कष्टं भोः ! कष्टं,

(क) सुनन्द ! अपिनाम कदाचिदेतावत्या वेलया श्वशुरकुलमेव गतो मे पुत्रको भविष्यति । तद् गच्छ, ज्ञात्वा लघ्वेवास्माकं निवेदय ।

सुनन्देति पूर्वमप्यस्य परिचितत्वान्नामकथनम् । अपिनामेति दैव-प्रार्थनायाम् ॥

अथ पूर्वोक्तोपक्षिप्तशङ्खचूडागमनम् ।

"अत्रान्तरे शङ्खचूडस्तूर्णं तं देशमाययौ ।
गोकर्णमर्णवतटे प्रणिपत्य मनोजवः ॥
तत्रापश्यन्नखमुखोत्खातस्खलितशेखरम् ।
विद्याधरेन्द्रमादाय तार्क्ष्यमुत्पतितं दिवम् ॥
तं वीक्ष्य साश्रुनयनो विनाघातं विदारितः ।
आत्मानं तद्वधे मत्वा कारणं विललाप सः ॥
हा सत्त्वविपुलौदार्यधैर्यगाम्भीर्यसागर ! ।
हा पूर्णकरुणाकोश ! हा निष्कारणबान्धव ! ॥
इति शोचन् स पदवीमनुसर्तुं गरुत्मतः ।
जगाम जीवितत्यागदृढीकृतविनिश्चयः ॥".

इति क्षेमराजकथानुसारेण प्रतिपाद्यते — **कष्टमित्यादि** । महापुरुषस्य नाशात् । पुनः कष्टमिति । स्वामिनियोगाननुष्ठानादापतितमिति शेषः । उभयं विमृश्य सन्तापेन भो इति । 'भो इत्यधिकसुखचिन्तासन्तापशेषो-द्वेगभयाह्वानेषु' इत्यव्ययसूत्रम् ।

१. 'हुअं आअच्छ । प्र' घ. पाठः.

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसं च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥ ७ ॥

हा निष्कारणैकबान्धव! हा परमकारुणिक! हा परदुःखदुःखित! क्वनुखलु गतोऽसि । प्रयच्छ मे प्रतिवचनम् । हा शङ्खचूड! हतक! किं त्वया कृतम् ।

कष्टत्वमेव प्रतिपादयति — गोकर्णमित्यादि । पूर्वोक्तस्यानुवादः । क्षेत्रस्य वा तत्स्थानाभिमानिनो देवस्य वा अभेदेन कथनम् । अर्णवतटे, न विदूरे । त्वरितं, न तु विलम्बः कृत इत्यात्मदोषपरिहारः । प्रणम्य, पूर्वं प्रदक्षिणकरणं कल्पितं, विलम्बशङ्कया पुनर्नमस्कार एव कृतः । अत एवोक्तं — त्वरितमिति । तां पूर्वकल्पितां वध्यभूमिं वधस्थानम् । स्वार्थे प्रत्ययः । खल्वित्यवधारणे । प्राप्त एव, गरुत्मान् गगनमुत्पतितश्च । अवधारणस्यापि यौगपद्यमेव फलितोऽर्थः । चार्थे वा खलुशब्दः । आदायेत्यादिना उत्पतनसाक्षात्कारकथनम् । नखानां मुखेन, नखैर्मुखेन इति वा । अत्र क्षतवक्षसमिति जीवनप्रत्याशानिवृत्त्या खेदः । विद्याधरमिति, आत्मार्थं महापुरुषनाशेन लज्जा । गरुत्मानिति अप्रतिक्रियत्वेन दैन्यम् । यौगपद्यकथनेन दैवप्रातिकूल्यनिरूपणाद् वैराग्यम् । सर्वाभिप्रायेण कष्टमिति ॥ ७ ॥

अत एवाप्रतिकार्यत्वात् प्रलापः — हा इत्यादि । कारणं विना एकः प्रधानः देहत्यागाद् बन्ध्वन्तरव्यतिरेकः । सम्बोधनैः लोकव्यतिरेकेण शोच्यत्वं विप्रयोगासहिष्णुत्वं च द्योतितम् । अत एव क्वनुखल्वित्यादि ।

१. 'तामिह भु' इति मूलकोशपाठः. २. 'ध्य' ख. पाठः.

नाहित्राणात् कीर्त्तिरेका मयाप्ता[1]
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।

एवं प्रलप्योन्मत्तवदात्मानं परीकृत्याह—हा शङ्खचूडेत्यादि । हा इति दुःखस्य दुस्सहतयाक्रोशनम् । हतक! स्वदुष्कृतग्रस्तगौरव! । किं त्वया कृतम् । ऐहिकं पारत्रिकं वा न किमपि कृतमिति क्षेपे पर्यवस्यति, हतकेति सम्बोधनात् । अतः युष्मद्विशिष्टस्य वाक्यस्य उत्तरवाक्येन न सम्बन्धः ।

एवमधिक्षेपसौकर्याय परीकृत्योक्त्वापि आक्षेपातिशयेन पुनरपि स्वस्य वञ्चितत्वं समर्थ्य प्रलपति—नाहित्राणादित्यादि । केचिदत्रापि परिकरणशेपतया त्वयेत्यादि पठन्ति । तत्र युक्तमङ्गीक्रियताम् । करुणविप्रलम्भादिव्याक्षिप्तानां व्याक्षेपानुसार एव युक्त इति रसिकाः । अन्यथा 'वैदेही तु कथं भविष्यति' इत्युक्तौ 'ह हा हा देवि!' इति सम्बोधनं कथं घटते । त्वयेति पाठे 'तन्नाहम्' इत्युत्तरवाक्यसङ्गतिरपि विषमा । तदलम् । अहित्राणाद् एकाहमपि स्ववंश्यानां रक्षणात् कीर्त्तिः स्वदेहेन वंश्या रक्षिता इत्याकल्पं स्थिरा एका केवला अन्यस्य यत्नसाध्यत्वात् स्वाधीनदेहत्यागमात्रेण मया नाप्तेति विषादः । कीर्त्तिर्मा भूद्, यदि भृत्यकृत्ये स्थितिः, तत्राह—नापि श्लाघ्या । कीर्त्त्यनासादनमेव न, स्वामिनियोगलङ्घनदोषोऽपि साधित इत्यपिशब्दार्थः । श्लाघ्या स्वतः कुलरक्षणविषयत्वाच्च । तेन अकरणे प्रत्यवायश्च प्रकाशितः । एवमभ्युदयार्थं प्रत्यवायपरिहारार्थं च कर्तव्यं न कृतमित्येव न, अकीर्त्तेरधर्मस्य च एकाश्रयो जात इत्याह—दत्त्वा भक्षकाय आत्मानं स्वदेहम् । रक्षित इति । रक्षकबुद्ध्यनुसारेण अयं भीरुरन्येन केनापि स्वदेहविनिमयेन रक्षित इत्यकीर्त्तिवागनुसारेण च न ममैवं बुद्धिः, यतः शोच्यः । उच्छिन्नलोकद्वयतया शोचनीय एव, न रक्षितः । तत् सर्वं निरूप्य चित्तस्फुटनेन मध्ये हा इति । वैराग्येण धिगिति ।

१. 'त्व' क. ख. ङ. पाठः. २. 'क्येन स' ङ. पाठः.

दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक् कष्टं वञ्चितो वञ्चितोऽस्मि[1] ॥ ८ ॥

तन्नाहमेवंविधः क्षणमपि जीवन्नपहास्यमात्मानं करोमि । यावदेनमनुगन्तुं प्रयतिष्ये । (परिक्रामन् भूमौ दत्तदृष्टिः)

आदावुत्पीडपृथ्वीं प्रविरलपतितां स्थूलबिन्दुं ततोऽग्रे
ग्रावस्वापातशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु ।

दुर्लङ्घतया कृच्छ्रत्वबुद्ध्या कष्टमिति । कृच्छ्रताप्रतिपादनं वञ्चितो वञ्चितोऽस्मीति । कस्यचिदैहिकोत्कर्षापेक्षया पारत्रिकं वञ्चनं भवति । तस्यैहिकानां समग्रतया किञ्चिदाश्वासो भवेत् । कस्यचिद् विवेकिनः पारत्रिकेष्वेव सक्तस्य भोगवञ्चनं भवति । तदपि सह्यमेव । अहं तु कीर्त्यादीनामभावाद् अकीर्त्यादीनामुदयाद् इह परत्र च वञ्चित इत्यावृत्तितात्पर्यम् ॥ ८ ॥

एवं विलप्य कर्तव्यं निरूपयति -तन्नाहमिति । तदिति विफलजन्मत्वात् । एवंविधः उक्तदोषाश्रयः । अपहास्यमिति अपहास्यतैव जीवनस्य फलमिति भावः । यावदित्यध्यवसाये । एनमिति, तमिति गरुत्मानिति चोभयोः प्रस्तुतत्वात् साधारण्येन निर्देशः । आदायोत्पतनस्य दृष्टत्वाद् अन्यथाप्रतीत्या त्यजति चेत् स्वदेहं तस्यार्पयामीति गरुडानुगमनाभिप्रायः । भक्षितवांश्चेद् एनमनुगन्तुं स्वयमपि देहं त्यक्तुम् । उभयथापि जीवनं न घटते । तथापि प्रथमपक्षः साधीयानिति बुद्ध्या प्रयतिष्ये इत्युक्तम् । अन्यथा जीवनत्यागाध्यवसाये अनुगन्तुं प्रयतिष्ये इत्युक्तिर्न घटते गमनोपक्रमश्च । केवलमनुगमने साध्ये जीवन्नपहास्यमात्मानं न करिष्यामीत्युक्तिर्न घटते । अत उभयसाधारण्येनोक्तम् । भूमौ दत्तदृष्टिरिति मार्गानुसरणप्रकारकल्पनोपक्रमः ।

आदावित्यादि । एतां तत्र तत्र भिन्नप्रकारां रक्तधाराम् अनुसरन् मार्गचिह्नत्वेनाङ्गीकुर्वन् व्रजामि । तार्क्ष्यं दिदृक्षुरिति, तद्दर्शनावधीत्यर्थः ।

१. 'स्मि' क. ख. ङ. पाठः,

दुर्लक्षा धातुभित्तौ घनतरुशिखरे गह्वरे स्त्यानरूपा-
मेतां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥ ९ ॥

(परिक्रामति ।)

**देवी** — (ससाध्वसम्) (क) महाराअ ! एसो को वि परु-
ण्णवदणो इदो एव्व तुरिअतुरिअं आअच्छन्तो हिअअं

(क) महाराज ! एष कोऽपि प्ररुण्णवदन इत एव त्वरितत्वरितमागच्छन्

आदौ अनुसरणारम्भे वक्षोभेदसमनन्तरोद्भूतत्वाद् उत्पीडेन सङ्घातेन पृथ्वीम् । सलिलोत्पीडकुसुमोत्पीडादिषु उत्पीडशब्दस्य सञ्चयवाचित्वं दृष्टम् । आदाविति प्रथमोत्पत्तौ वा । देहभेदसमनन्तरं रुधिरस्य बाहुल्याद् उत्पतने धारायाः पृथुत्वम् । ततः पश्चात् किञ्चिदन्तरमतीत्य । प्रविरलपतितां प्रवाहस्य क्रमक्षयाद् विच्छिद्य विच्छिद्य पतिताम् । तथापि स्थूलबिन्दुम् । यत्र पतनं तत्र बिन्दूनां स्थूलत्वम् । धाराविशेषणम् । अग्रे[1] ऊर्ध्वभूमौ । पर्वततटात् शिखरारोहणक्रमेण वचनं, मलयशिखरमारुह्येति पूर्वमुक्तत्वात् । गमनानुसारेण रुधिरदर्शनम् । ग्रावसु शिलासु आपाते पतनकाले शीर्णाः शकलीभूताः शिलापातात्, अत एव प्रसृतास्तनवः सूक्ष्माः कणाः यस्याः । स्थलीषु शिलारहिततृणप्रधानोपत्यकासु । कीटैः कीर्णा स्थलभेदेन झटित्येव कृमिजुष्टाम् । पुनरधित्यकारोहणक्रमेण धातुभित्तौ मनःशिलादिसमानवर्णधातुनिचितायां भित्तौ नितम्बे । दुर्लक्षां धातुसाङ्कर्येण कृच्छ्रोन्नेयाम् । पुनर्नितम्बोपरि ऊर्ध्वासन्नभागे गह्वरे गुहोपान्ते स्त्यानं घनीभूतं रूपं यस्याः । तत्र हेतुः—घनतरुशिखरे इति । घनानि तरुशिखराणि यत्र । घनतरुविशिष्टशिखरवर्तिनि गह्वरे इति वा । वैयधिकरण्येन सप्तमी । वेगवायुना तरुशाखानिरसने पतनम् । पुनरपि निचितानां तासां स्निग्धच्छायत्वेन शैत्याद् झटिति स्त्यानत्वमित्यर्थः । अत्यन्ताविच्छेदेन सर्वत्र धारात्वम् । उत्तरोत्तरं दुर्ज्ञेयत्वम् । अत एव निपुणमित्युक्तम् ॥ ९ ॥

---

१. 'ग्रे भू', २. 'तत् । पु' क. पाठः.

मे आउळीकरेदि । ता जाणीअदु दाव को एसो त्ति ।

**जीमूतकेतुः**— यथाह देवी ।

**शङ्खचूडः**[1]— (साक्रन्दम्) हा त्रिभुवनैकचूडामणे! क्कासि प्रस्थितो मया द्रष्टव्यः । मुषितोऽस्मि भो ! मुषितोऽस्मि ।

**जीमूतकेतुः**— (आकर्ण्य सहर्षम्[2]) मुञ्च देवि! विषादम् । अस्यायं चूडामणिः, नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खाय नीयमानोऽस्मिन् पतितः ।

**देवी**— (सहर्षं मलयवतीमालिङ्ग्य) (क) अविहवे! धीरा होहि । ण खु[3] दे ईदिसी आइदी वेहव्वदुक्खं अणुहोदि ।

हृदयं मे आकुलीकरोति । तज्ज्ञायतां तावत् क एष इति ।

(क) अविधवे! धीरा भव । न खलु ते ईदृशी आकृतिर्वैधव्यदुःखमनुभवति ।

एवम् उक्तक्रमेणानुसरणे त्रिभुवनैकचूडामणे! इति मध्येमार्गं प्रलापः । लोकोत्तरगुणत्वेनालङ्कारभूत इति चूडामणित्वमारोप्य व्यवहारः । प्रस्थितस्त्वं मया क्व द्रष्टव्योऽसि । मुषितोऽस्मि भो! मुषितोऽस्मीति वञ्चितोऽस्मीत्यस्यानुवादः । त्वयेति शेषः ॥

आकर्ण्य सहर्षमिति । पूर्वं चूडामणिदर्शने कस्यायमिति व्याकुलो विषादशङ्काग्रस्तः चूडामणिशब्दश्रवणे पूर्वानुसारेण मुख्यार्थं मन्यमानस्तच्छेषतया मुषितत्वमपि निश्चित्य चूडामणिमोषणेनायं प्रलपति, एतदीयोऽसाविति मत्वा करुणमध्ये तद्विरुद्धं हर्षमवलम्ब्य देवीमपि हर्षयति— मुञ्चेत्यादिना । तस्योपपत्तिकल्पनं नूनमित्यादि ॥

ततस्तयोरपि हर्षसंक्रमेणालिङ्गनादि ॥

१. 'डः—हा' ख. घ. पाठः. २. 'र्षं विहस्य) मु' इति मूलकोशपाठः ३. 'खु ई' क. घ. पाठः.

**मलयवती** — (सहर्षं) (क) अम्ब ! तुह एसा आसी[1] । (पादयोः पतति ।)

**जीमूतकेतुः** — (शङ्खचूडमुपसृत्य) वत्स ! किं तव चूडामणिरपहृतः ।

**शंखचूडः** — आर्य ! न ममैकस्य । त्रिभुवनस्यापि ।

**जीमूतकेतुः**[2] — कथमिव ।

**शंखचूडः** — दुःखातिशयाद् बाष्पोपरुध्य[3]मानकण्ठो न शक्नोमि कथयितुम् ।

**जीमूतकेतुः** — (आत्मगतम्) हन्त हतोऽस्मि । (प्रकाशम्)

---

(क) अम्ब ! तवैषा आशीः ।

---

अम्ब ! तवैषा आशीरिति । न खलु मे प्रशंसा । वैधव्यदुःखं मा भूदिति आशीरेव । त्वदाशिषैव मदनुग्रहो न मद्गुणेनेति विनयप्रकाशनम् । पादपतनं हर्षकार्यत्वेन ॥

वत्स ! किं तवेत्यादि[4] सिद्धवत् प्रश्नः ॥

त्रिभुवनस्यापीत्युक्तेऽन्यार्थशङ्कया प्रश्नः — कथमिवेति । कथं त्रैलोक्यस्यापीत्युक्तम् ॥

दुःखातिशयादिति । बाष्पोपरुध्यमानकण्ठः । अन्तर्गलता बाष्पेणेति केचित् । बाष्पंशोकवेगेन गद्गदादिकमिति केचित् ॥

एवमुक्तौ क्रमेण पुत्रव्यसनशङ्कया पुनरपि द्विगुणम् आरूढपतितवद् हन्त हतोऽस्मीति सविषादं निरूप्य पुनरपि निश्चेतुं पृच्छति —

---

१. 'सीसा एव्व' क. घ. पाठः. २. 'तुः—वत्स ! क' क. घ. ङ. पाठः. ३. 'द्धक' क. घ. पाठः. ४. 'दि विरुद्ध' ङ. पाठः. ५. 'ष्प:' घ. ङ. पाठः.

आवेदय ममात्मीयं पुत्र! दुःखं सुदुस्सहम्।
मयि सङ्क्रान्तमेतत् ते येन सह्यं भविष्यति ॥ १० ॥

**शंखचूडः**—श्रूयताम्। शङ्खचूडो नाम नागः खल्वहमाहारार्थमवसरप्राप्तो वासुकिना वैनतेयस्य प्रेषितः। किं वा विस्तरेण। कदाचिदियं रुधिरधारापद्धतिः पांसुभिरवकीर्यमाणा दुर्लक्षतामुपयाति। तत् संक्षेपतः कथयामि।

विद्याधरेण केनापि करुणाविष्टचेतसा[2]।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥ ११ ॥

**जीमूतकेतुः**—(सविषादम्) कोऽन्य एवं परहितव्यसनी।

आवेदयेत्यादि। पुत्रेति वात्सल्येन सम्बोधनम्। आत्मीयं दुःखं मम आवेदय बोधय। सुदुस्सहं त्वया दुर्भरम्। मयि संक्रान्तं वेदनेन संविभक्तं भारसंविभागवत् सोढव्यं भविष्यतीति येन, तदावेदय इत्युक्ते आत्मीयं मदीयं पुत्रदुःखं पुत्रहेतुकं दुःखनिमित्तं व्यसनमिति भाविवृत्तानु[3]सारेण सामाजिकमनसि स्फुरति ॥ १० ॥

श्रूयतामित्यादि गरुत्मते इत्यन्तं पूर्ववृत्तकथनम्। कथं वासुकिना गोप्त्रा वैनतेयस्य प्रेषित इत्यनुपपत्तिं परिहरति—अवसरप्राप्त इति। अनेन पूर्वसमयः सूचितः। किं वा विस्तरेणेति पूर्वावस्थाकथने व्याप्तिमाशङ्क्याक्षेपः। अतीतकथने किं फलं, दोषोऽप्यस्तीत्याह—कदाचिदित्यादि। रुधिरधारोपलक्षिता पद्धतिः गमनमार्गः। धारायाः पद्धतिर्वा। कालात्यये दोषोऽयम्। तत् संक्षेपत इति। संक्षेपस्य साराव्यभिचारात् सारभूतं चेत्यर्थः।

**विद्याधरेणेत्यादिना तत्कथनम् ॥ ११ ॥**

तच्छ्रुत्वा सामान्यशब्दं विशेषे पर्यवसाययति—**कोऽन्य** इत्यादिना। तत्रोपपत्तिः—कोऽन्य इति। असाधारणं परहितव्यसनित्वं

१. 'पेण क', २. 'धानचे' घ. पाठः. ३. 'त्तान्तानु' क. ख. पाठः.

ननु स्पष्टमेवोच्यतां पुत्रेण जीमूतवाहनेनेति । हा हतोऽस्मि मन्दभाग्यः ।

**देवी** — (क) हा पुत्तअ! किं तुए किदम् ।

**मलयवती** — (ख) हा[1] कहं सच्चीभूदं एव्व[2] मे दुच्चिन्दिदम् ।

(सर्वे[3] मोहं गताः ।)

**शंखचूडः**[4] — (सास्रम्) अये नूनम् एतौ पितरौ तस्य महासत्त्वस्य । अप्रियनिवेदनान्मयैतामवस्थां गमितौ । अथवा विषादृते किमन्यद् विषधरस्य मुखान्निष्क्रामति । अहो प्राणप्रदस्य[5][6] सदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन ।

(क) हा पुत्रक! किं त्वया कृतम् ।

(ख) हा कथं सत्यीभूतमेव मे दुश्चिन्तितम् ।

परोपकारनिर्बन्धः स्वदेहत्यागपर्यन्तः । स्पष्टमेवेति । किं सामान्यशब्देनावृत्य कथ्यत इत्यर्थः । नन्वित्यनुनये । अत्र तस्य पितरावेतौ, जीमूतवाहन इति अस्य नाम इति तस्य बोधः । पूर्वं विद्याधर इति प्रतीतिः । अतः परं वस्तुनिश्चयेन प्रलापादिना पुनरपि करुणस्य परिपोषः ॥

दुश्चिन्तितम् अन्यदेव किमप्याशङ्के इत्यनर्थरूपेण पूर्वं निरूपितं सत्यमेव जातमित्यर्थः ॥

एतौ पितरौ एतामवस्थां गमितौ इत्युभयं विधेयं, पूर्वमबोधात् । अप्रियनिवेदनस्योपपत्तिः — विषादृत इति । अहो प्राणप्रदस्येति विरुद्धलक्षणया अपकारातिशयं प्रकाशयति । लोकोक्त्यनुसारेण परीकृत्य

१. 'हा स' ग. ङ. पाठः. २. 'व्व दु' ख. घ. पाठः. ३. '(मोहमुपगच्छन्ति ।)' ग. घ., 'मोहं ग' ङ. पाठः. ४. 'डः —नू' घ. पाठः. ५. 'दानस्य प्र' ख. पाठः. ६. 'स्य प्र' क. ग. पाठः.

तत् किमधुनैवात्मानं व्यापादयामि । अथवा समाश्वासयामि तावदेतौ । तात! समाश्वसिहि समाश्वसिहि[2] । अम्ब[3]! समाश्वसिहि समाश्वसिहि ।

(उभौ समाश्वसितः[4] ।)

**देवी** — (क) वच्छे! उट्ठेहि उट्ठेहि । मा रोअ[5]। अह्मे[6] वि किं जीमूदवाहणेण विणा जीवह्म । ता समस्सस दाव ।

**मलयवती** — (समाश्वस्य) (ख) हा अय्यउत्त! कहिं तुवं मए पेक्खिदव्वो ।

**जीमूतकेतुः** — हा वत्स! गुरुचरणशुश्रूषाभिज्ञ!

चूडामणिं चरणयोर्मम पातयता त्वया ।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः ॥ १२ ॥

(क) वत्से! उत्तिष्ठोत्तिष्ठ । मा रुदिहि । वयमपि किं जीमूतवाहनेन विना जीवामः । तत् समाश्वसिहि तावत् ।

(ख) हा आर्यपुत्र! कुत्र त्वं मया द्रष्टव्यः ।

कथनम् । तत् किमधुनेति । अपराधाधिक्याद् गरुडदर्शनात् प्रागेवेत्यर्थः । अथवेति । तावत् समाश्वासयामि । मूढयोरनाश्वासनं न युक्तं, पश्चादपि शक्यमन्यदित्यर्थः ॥

विना जीवामः । जीवनापेक्षायामेव प्रलापादिना दुःखमोक्षणम्, अन्यथा मर्तव्यमित्यर्थः ॥

विनयक्रमः गमनागमनयोः वन्दनं कर्तव्यमिति विनयकार्यस्याचारस्य परिपाटी । अतो बुद्धिपूर्वं चूडामणिपातनं शङ्क्यते ॥ १२ ॥

१. 'आर्य! स' ख. पाठः. २. 'हि समाश्वसितवम्बा ।' घ. पाठः. ३. 'म्ब! त्वमपि समाश्वसिहि । (उ' ख. पाठः. ४ 'स्य)' घ. पाठः. ५. 'तुवर । अ' इति मूलकोशपाठः. ६. 'ह्मोहिं । किं' क. पाठः.

(चूडामणिं गृहीत्वा) हा वत्स ! कथमेतावन्मात्रदर्शनोऽसि मे संवृत्तः । (हृदये दत्त्वा) हहह,

भक्त्या विदूरविनताननम्रमौलेः
शश्वत् तव प्रणमतश्चरणौ मदीयौ ।
चूडामणिर्निकषणैर्मसृणोऽप्ययं हि
गाढं बिदारयति मे हृदयं कथं नु ॥ १३ ॥

**देवी**—(क) हा पुत्तअ! जीमूदवाहण! जस्स दे गुरुजणसुस्सूसं वज्जिअ अण्णं सुहं[1] ण रोअदि, सो कहं दाणिं पिदरं उज्झिअ सग्गसोक्खं अणुभविदुं पत्थिदोसि[2] ।

**जीमूतकेतुः**—(सास्रम्) देवि! किं वयं जीमूतवाहनेन विना जीवामः, येनैवं[3] विलपसि ।

(क) हा पुत्रक! जीमूतवाहन! यस्मै ते गुरुजनशुश्रूषां वर्जयित्वान्यत् सुखं न रोचते, स कथमिदानीं पितरमुज्झित्वा स्वर्गसौख्यमनुभवितुं प्रस्थितोऽसि ।

नमनस्मृत्या भिन्नहृदय आह—हहहेति ।

भक्त्येत्यादि । शश्वद् भक्त्या मम चरणौ प्रणमतस्तव अयं चूडामणिः निकषणैः सङ्घर्षैः अर्थाच्चरणयोः, मसृणोऽपि अपरुषोऽपि मम हृदयं गाढं भृशं विदारयति भिनत्ति । कथमेतद् मसृणस्य विदारणं, न घटत इति विरोधः । मसृणत्वमेव विनयस्मरणेन हृदयभेदनस्य धैर्यशैथिल्यस्य निमित्तमिति सङ्गतिः । विदूराद् विनतमाननं यस्य तत एव नम्रमौलेः इति विग्रहः । तत्कालविशेषणं नम्रमौलित्वकथनं निकषणघटनाय । प्रणामक्रिया विनताननेत्यनेनैव सिद्धा ॥ १३ ॥

१. 'सुहं अ', २. 'गदो' घ. पाठः. ३. 'प्र' क. घ. पाठः.

**मलयवती**—(पादयोर्निपत्य कृताञ्जलिः) (क) ताद! देहि मे अय्यउत्तस्स चूडारअणं, जेण इमं हिअए करिअ जोळणप्पवेसेण अत्तणो सन्दावं अवणेमि।

**जीमूतकेतुः**—(सास्रम्) पतिव्रते! किं मामाकुलयसि। ननु सर्वेषामेवास्माकमय निश्चयः।

**देवी**—(ख) महाराअ! ता किं पडिवाळीअदि।

**जीमूतकेतुः**—देवि! न खलु किञ्चित्। किन्त्वाहिताग्नेर्नान्येनाग्निना संस्कारो विहितः। तदग्निहोत्रशरणादग्नीनादायात्मानमादीपयामः।

**शंखचूडः**—(आत्मगतम्) हा कष्टम्। ममैकस्य पापस्यार्थे सकलमेवेदं विद्याधरकुलमुत्सन्नं भविष्यति। तदेवं तावत्। (प्रकाशम्) तात! न खल्वनिश्चित्यैव युक्तमीदृशं साहसमनुष्ठातुम्। विचित्राणि हि विधेर्विलसितानि। कदाचिद् नायं नाग इति ज्ञात्वा जीवन्तमेव जीमूतवाहनं परित्यजेन्नागशत्रुः। तदन्वेष्यैव तावद् रुधिरधारया वैनतेयमनुसरामः।

---

(क) तात! देहि मे आर्यपुत्रस्य चूडारत्नं, येनेदं हृदये कृत्वा ज्वलनप्रवेशेनात्मनः सन्तापमपनयामि।

(ख) महाराज! तत् किं प्रतिपाल्यते।

---

१. 'त्य) अ', २. 'त्तचिह्न च', ३. 'णं हि' घ. पाठः. ४. 'तुः—प' ग. घ. पाठः. ५. 'अ! किं' ख. ग. पाठः. ६. 'य त्वरिततरमात्मा' ग. पाठः. ७. 'न्नम्। त' क. ख. घ. पाठः. ८. 'ध्रुनैव' ख. पाठः.

**देवी** — (क) सव्वहा देवदाणं पसादेण जीवन्तं एव्व[1] मे पुत्तअं पेक्खिस्सं ।

**मलयवती** — (आत्मगतम्) (ख) दुल्लहं खु एदं मम मन्दभाओए[2] ।

**जीमूतकेतुः** — वत्स! अवितथैषा भारती[3] ते भवतु। तथापि साग्नीनामेवास्माकं युक्तमनुसर्तुम् । तदनुसरतु भवान् । वयमप्यग्निहोत्रशरणादग्नीनादाय त्वरिततरमनुग[4]च्छामः । (पत्नीवधूसमेतो निष्कान्तः[5] ।)

**शंखचूडः** — तद् यावद् गरुडमनुसरामि । (चलन्नग्रतो निर्वर्ण्य[6])

कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेस्तटीः
प्लुष्टोपान्तवनान्तरः स्वनयनज्योतिश्शिखासञ्चयैः[7] ।

(क) सर्वथा देवतानां प्रसादेन जीवन्तमेव मे पुत्रकं द्रक्ष्यामि ।

(ख) दुर्लभं खल्वेतन्मम मन्दभाग्यायाः ।

पुनस्तस्य आश्वासवचनेन प्रत्याश्वस्योक्तिः — सर्वथेत्यादि ॥

साग्नीनामेवेति । अमङ्गलपक्षे झटिति देहत्यागार्थमित्यर्थः ॥

तद् यावदिति । पाक्षिकस्याप्येतज्जीवनस्य साध्यत्वादित्यर्थः । यावदित्यध्यवसाये । चलन्निति, दुःखवेगेन चपलं व्रजन् । अग्रतो निर्वर्ण्य, वदतीति शेषः ।

कुर्वाण इत्यादि । अयं पन्नगरिपुः मलयस्य शृङ्गाग्रे दूराल्लक्ष्यते । अयं लक्ष्यत इति दिदृक्षितस्यान्विष्यमाणस्य सहसा दर्शनात् प्रहर्षः ।

१. 'व्व पु' ख. पाठः. २. 'गधेआए', ३. 'ती भ' घ. पाठः. ४. 'मेवाग' क. घ. पाठः. ५. 'न्तो जीमूतकेतुः ।)' ख. घ. पाठः. ६. 'विलोक्य) एष हि— कु' क. पाठः. ७. 'श्रेणिभिः ।' मूलकोशपाठः.

मज्जद्वज्रकठोरघोरनखरप्रान्तावगाढावनिः
शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादयं लक्ष्यते ॥ १४ ॥

---

पन्नगरिपुरिति स्वयं मरणाध्यवसायात् कुलाभिमानराहित्येन तस्य विपक्षतामनङ्गीकृत्योक्तिः, नास्मद्रिपुरिति । पन्नगानामेवायं रिपुर्नान्येषाम् । अतः प्रमादुद्धृतं महापुरुषं वस्तुबोधेन सजीवमेव विसृजेद् वा इति प्रत्याशाबीजत्वेन प्रतीत्यनुसारेण वा । एतच्छङ्कया पूर्वमपि नागशत्रुरित्युक्तम् । मलयस्य नातिविप्रकृष्टस्य पर्वतान्तरस्य । तेन गमनलाघवं ध्वनितम् । शृङ्गाग्रे शृङ्गस्योर्ध्वभूमौ । अत एव दूरादिति दर्शनसौकर्यं प्रतिपादितम् । अवस्थितिप्रकारकथनेन स्फुटदृश्यत्वं तस्य रौद्रतां च समर्थयति — रुधिरार्द्रायाः चञ्च्वाः त्रोटेः कषणैः पैच्छिल्यापनयनाय आवृत्त्या पार्श्वयोर्निघर्षणैः अद्रेस्तटीः द्रोणीः एकत्र कषणं पुनरन्यत्र तत्रैव वा भिदुरतीक्ष्णचञ्चुपुटभेदने प्रान्तयोरनुत्खातत्वेन मध्यस्योत्खातत्वेन च द्रोणीः नौसंस्थानाः कुर्वन्निव । अनेन लीलया पार्श्वकषणावस्था एषा, सम्मुखं विपक्षाघाते कीदृशी इति चञ्चुप्रहारस्य तीक्ष्णता प्रकाश्यते । तेन रौद्रालम्बनपौष्कल्यम् । एवमुपर्यपि । प्लुष्टं दग्धम् उपान्ते नयनगोचरे वनान्तरं वनमध्यं येन । स्वनयनयोर्ज्योतिःशिखानां सञ्चयैः करणैः । अनेन अतृप्तता प्रकाश्यते । तृप्तौ नयनयोः प्राचण्ड्योपरमात् । मज्जताम् अर्थाद् नायकोरसि, वज्रकठोराणां नखराणां प्रान्तैः अग्रैः अवगाढा अवनिर्येन । नायकदेहं निर्भिद्य भूमौ नखाग्रपतनमुक्तम् । मज्जनस्य केवलमवनिविषयत्वे अवगाढपदं पुनरुक्तम् । अत्र भक्षणस्यानिर्व्यूढत्वबुद्ध्या नयनज्योतिस्तीक्ष्णतया तृप्त्यनुदयानुमानाच्च पन्नगरिपुत्वेन विमर्शनादेतद्विसर्जनयोग्यतया तत एव आत्मनः समयसिद्धत्वबोधेन निश्शङ्कं भक्षणशङ्कया च संभ्रमेण समीपगमनापेक्षया इयमुक्तिः । अयमभिप्रायः पश्चात् सन्निधिप्राप्त्यवस्थया च ज्ञायते ॥ १४ ॥

---

१ 'त्य' घ. पाठः. २. 'व भि' ङ. पाठः.

(ततः प्रविशत्यासनस्थः पुरःपातितनायको गरुडः ।)

**गरुडः** — (आत्मगतम्) आ, जन्मनः प्रभृति भुजङ्गपतीनश्नता मया न चेदृशमाश्चर्यं दृष्टपूर्वं, यदयं महासत्त्वो न केवलं व्यथते, प्रहृष्ट एव दृश्यते । तथाहि —

अथ गरुडस्य प्रवेशः । आसनस्थ इत्यनेन यथेष्टमाहारयामीति पूर्वोक्तानुसारेण स्वैरासिका कथिता । वक्षोभेदपूर्वमुत्कृत्य मौलिखण्डनेन चूडामणिं निरस्य गौरवातिशयेन आहारभूयस्त्वमाशङ्क्य यथेष्टभोजनाय मलयशिखरमध्यासीनो भोज्यमग्रतो निधाय स्वैरमश्नन् तस्य भोगिष्वदृष्टपूर्वं स्वभावमवलोक्य विस्मयेन स्वयं निरूपयति — आ इत्यादि । आ इति स्मरणे । 'स्याच्चिन्ता स्मृतिराध्यानमि'त्युक्तत्वात् । चिन्तनं स्मरणम् । आ, जन्मनः प्रभृति, न त्विदानीम् । अण्डोद्भेदानन्तरमेव मातुर्दास्यं श्रुत्वा जातमप्यजातमात्मानं मन्यमानः स्ववीर्येण दास्यापनयनानन्तरम् अद्याहं जातः । तद् जातेन विपक्षोच्छेदः कर्तव्यः ।

"म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम्"

इति न्यायेन तदुच्छेदनाय निरर्गलमहिभक्षणमारब्धवानहमिति जन्मनः प्रभृतीत्यनेनोक्तम् । भुजङ्गपतीन् वीर्यकोपादिप्रधानान्, न तु निस्सारान् । अश्नता सङ्घशः सङ्केतात् परमेकशश्च प्रतिदिनं भुञ्जानेन । नित्यप्रवृत्तिरूपेण वर्तमानत्वम् । अनेन एतावन्तं कालं न गृहीतमुक्तत्वम्, अपितु वर्तमानतैव तत्र । ईदृशं वक्ष्यमाणरूपम् आश्चर्यम् अद्भुतं न दृष्टपूर्वमिति चिन्ताप्रकर्षः प्रकाशितः । यदिति वाक्यार्थपरामर्शः । अयं भक्ष्यमाण इत्यर्थात् । स्वतः प्राप्ता व्यथा हेत्वन्तरेणापोद्यत इति व्यथाभावेनातीव कौतुकम् । अतोऽप्यधिकं दृश्यते — केवलं न व्यथते महासत्त्वतया इत्येव न, निर्णिक्ते केवलशब्दः, प्रहृष्टः व्यथाविरुद्धहर्षाक्रान्तहृदयः । तर्हि व्यथा निरतिशयो हर्षश्च इत्यपि न, हर्ष एव समुल्लसतीत्येवकारेण द्योतितम् । दृश्यत इति । अनुभावव्याजेन हर्ष एव स्फुटं प्रकाशत इत्यर्थः । व्यथाभावस्य महासत्त्वता निमित्तत्वेन कल्प्यत

१. 'प' ख. ग. घ. पाठः.

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदधे-
मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।
गात्रं यच्च विलुप्तमेष पुलकस्तत्र स्फुटो लक्ष्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥ १५ ॥

---

इति हेतुगर्भं विशेषणम् । 'महासत्त्वोऽतिगम्भीर' इत्यस्य व्याख्याने धनिकेनोक्तं — महासत्त्वः शोकक्रोधाद्यनभिभूतान्तःसत्त्व इति । 'आहूतस्ये'त्याद्युदाहरणं च ।

"चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति"

इति भावप्रकाशेऽप्युक्तम् । अत एवंभूतेन चित्तस्थैर्येण दैहिके उपप्लवे व्यथाभावो निस्सामान्यगुणस्यास्तु । तद्विरुद्धो हर्षः, तस्यापि प्रकर्षः, ततोऽपि भावान्तरामिश्रत्वमित्याश्चर्यस्यादृष्टपूर्वत्वमित्यर्थः ।

तथाहीति । अनुभाववर्णनेन हर्षप्रकर्षं भावान्तरामिश्रत्वं च लोकोत्तरहेतुगर्भं प्रतिपादयितुमुपक्रमः —

"आस्वाद्यास्वाद्य तार्क्ष्योऽपि व्योम्नि जीमूतवाहनम् ।
क्षिप्रं स्थगितसंरम्भः प्रदध्यौ विस्मयाकुलः ॥
अहो नु सत्त्ववानेष कोऽपि धैर्यमहोदधिः ।
भक्ष्यमाणस्य यस्याङ्गे जायन्ते पुलकाङ्कुराः ॥
प्रसन्नवदनः क्षिप्रं शेषजीवोऽपि वर्तते ।
चिन्तयित्वेत्यपृच्छत् तं कोऽसीति विनतात्मजः ॥
स तं प्राह किमेतेन तव भक्षय मामिति ।"

एवं क्षेमराजकथानुसारेण । ग्लानिरित्यादि । ग्लानिर्निष्प्राणता चित्तस्य जाड्यं, न, ज्ञायत इति शेषः । अधिकपीयमानरुधिरस्यापीति, हेतौ सत्यपीत्यर्थः । अधिकमतिमात्रम् अङ्गादङ्गात् सिरामुखेन आकृष्य पीयमानरुधिरस्येति ग्लानिविभावः ।

"ग्लानिर्विरेकवमनजागरातिरताध्वभिः ।
उपवासमनस्तापक्षुत्पिपासादिभिर्भवेत् ॥"

इति,

"वाङ्मनःकायकर्माणि ग्लानिर्ग्लपयतीति हि"

इति च भावप्रकाशः । विरेकप्रकार एव रक्तस्रावः । एवं हेतौ सत्यपि ग्लानिर्न ज्ञायते, अनुभावादर्शनात् ।

"रत्याद्यायासतृट्क्षुद्भिर्ग्लानिर्निष्प्राणतेह च ।
वैवर्ण्यकम्पानुत्साहक्षामाङ्गवचनक्रियाः ॥"

इति धनञ्जयेन विभावस्वरूपानुभावा ग्लानेरुक्ताः । तत्र वैवर्ण्यादि-कार्याभावाद् ग्लानिर्न ज्ञायत इत्यर्थः । किञ्च मांसानामुत्कर्तनं चञ्च्वा ततस्ततो मर्मादिभ्यश्छेदनं ततो जाताः रुजो वहतोऽपीति लोकबु-द्ध्यनुसारेण वहनं कल्प्यते । यस्य मांसकर्तनं तस्य रुजो दृष्टत्वात् । तद्वह-नमनूद्य विरोधः । तथापि प्रसन्नं प्रसादसुभगं मुखं लक्ष्यत इति सम्ब-न्धः । रुजो वैवर्ण्यं कार्यम् । तद्विरुद्धप्रसाददर्शनात् तत्कारणत्वेन हर्षा-परपर्याया प्रीतिरेव जागर्ति, कार्याभावान्न रुग् इति कल्प्यते । वहत इति योग्यतामात्रेणानूदितम् । प्रहृष्ट एवेत्यन्ययोगायोगव्यवच्छेदेन स्थिरीकृ-तस्य पुनः प्रीत्येति हेतुत्वेन निर्दिष्टस्य न्यक्कृतभावान्तरस्य हर्षस्य मु-खप्रसादमात्रेण कार्येण परिपोषो न परिस्फुट इति चेत् पुनरपि हर्षकार्यं कथ्यते — यद् गात्रं न विलुप्तं, तत्र पुलको लक्ष्यते । भक्षितशिष्टे अव-यवे पुलक एष इति स्फुटातिशयः । ननु

"रोमाञ्चः क्रोधरुग्भीतिहर्षशीतादिभिर्भवेत्"

इति रुजा भीत्या वा भवेत् पुलकः, कथं हर्षकार्यमेव । अस्तु । मुख-प्रसादादिसाहचर्यादयमपि हर्षकार्यमेव । किञ्च दृष्टिर्मयि अपकारिणि भृशमपकर्तरि उपकारिणीव परमोपकारिणि यथा तथा निपतति। स्निग्धाया दृष्टेरविच्छेदपातश्च हर्षकार्यमित्यर्थः । अस्येति सर्वशेषः । नान्यस्यैवं दृष्टमिति व्यतिरेको विस्मयपोषकः । एवं व्यथादीनाम् अनुभावनिश्चितस्य

**तत् कौतूहलमेव मे जनितमस्यानया धैर्यवृत्त्या । भवतु, न भक्षयाम्येनम् । जानामि तावत् कोऽयमिति ।** (अपसर्पति ।)

---

हर्षस्य च भरसहं लोकोत्तरं गुणं विशेषणद्वारा हेतुत्वेन **समर्थयति** — धैर्योदधेरिति । धैर्यस्य उदधिः, धैर्येण उदधिरिति वा तस्य । अपारमपरिच्छेद्यं धैर्यमस्य । तद्विलसितमेवैतत् ।

"चापलेनानुपहता सर्वार्थेष्वविकत्थना ।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते ॥"

स्वाभाविकीति । स्वच्छा प्रसन्ना रागादिकृतचापलहीना देहादिभावाभावानपेक्षिणी बोधरूपा अन्तःकरणवृत्तिः धैर्यम् । तत्स्वभाव एवेदं विलसितम् । स्वभावे कः पर्यनुयोगः ॥ १५ ॥

एवं धैर्यस्य हेतुत्वे निश्चितेऽपि कौतुकं वर्धत एवेत्याह — **तत्** तस्मात् । यत एतत् सर्वं धैर्यविलसितं, तस्मात् । अनया लोकोत्तरं वृत्तं प्रकाशयन्त्या । धैर्यवृत्त्या धैर्यस्य वर्तनेन नानाव्यापाररूपेण प्रसरेण । धैर्ये वृत्तिः धैर्यवृत्तिः तदनुग्रह इति वा, तया कौतूहलमेव । विस्मयविशिष्टा एतज्जिज्ञासा कौतूहलं, तदेव, न जिघत्सा, नापि निर्भयोऽयमित्यमर्षः । जनितमुत्पादितम् । धैर्यातिशयेन आश्चर्यस्य उपरितनपर्वाक्रमणमेव इत्येवकारेण स्थिरीकृतम् । तस्मादेतत्स्वरूपज्ञाने क उपायः । प्रवृत्तभक्षणस्य कस्त्वमिति मध्ये विचारो न युक्तः । ईदृशस्य भक्षणं च न युक्तम् । एतदुक्तिं विना ज्ञातुं चाशक्यमिति विचार्य निश्चिनोति — **भवतु**, एवं करोमीति निर्णये । 'भवत्वान्तरनिर्णये' इत्यव्ययम् । निर्णीतमाह — **न भक्षयाम्येनम् । जानामि तावत् कोऽयमिति** । तावत् प्रथमं, पुनः तदनुरूपमिति शेषः । कोऽयं धैर्यसागर इति । अस्यात्मनो भक्षणमिष्टमिव दृष्टिपातेन । अतस्तस्मिन् निवृत्ते स्वयमेव पृच्छेत् । ततस्तद्द्वारा विचार्य ज्ञातुं शक्यमिति भावः । एवं कल्पितताया भक्षणनिवृत्तेः प्रकाशनायापसर्पणम् ॥

**नायकः**— (मांसोत्कर्तनविमुखमुपलक्ष्य)

सिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवेह तावत्
किं भक्षणात् त्वं विरतो गरुत्मन्!॥ १६॥

**गरुडः**— (आत्मगतम्) अहो आश्चर्यम्। कथमयमस्यामप्यवस्थायामेवमत्यूर्जितमभिधत्ते। (प्रकाशम्)

---

विमुखमिति। अपसर्पणेन वैमुख्यं दृष्ट्वा प्रियोक्त्या प्रेरयति—सिरेत्यादि। सिरामुखैः स्यन्दत एव बहुमार्गं स्रवत्येव, न विच्छिन्नम्। अद्यापि इदानीमपि अन्तरान्तरा भक्षितेऽपि। मम देहे त्वद्भक्षणीयस्य देहे एतदर्थमुपचिते पिण्डे। मांसमस्ति, न निरवशेषं भक्षितम्। विरलमपि तत्र तत्र हस्तपादादिषु अन्वेषणे सिध्यत्येव। किमनेन तृप्तस्य मे इति चेद्, इह तावत् सद्य उपक्रम एव। तव महाशनस्य। तृप्तिं पूर्तिम्। न पश्यामि, कुक्षिबृंहणाद्यदर्शनात्। तत् पेयभक्ष्ययोः शिष्टयोः क्षुधि च किञ्चिद्भक्षणेन जाग्रत्याम्। भक्षणादित्युपलक्षणं, पानाच्च। किं त्वम् एतदर्थं दूरादागतः। विरतः विश्रान्तः। नात्र निरूप्यमाणं किमपि कारणम्। वृथा स्यन्दमानं रुधिरं मांसं चोत्कृत्य भक्षयेति किंशब्दः क्षेपे। गरुत्मन्निति। सन्ततोड्डयनरसिकप्रशस्तपक्षवतस्तव तन्द्रालुता च न घटते। तत् तृप्तिं विधाय स्वैरं विहरेति स्वसाध्यानुगुणेन मधुरवचनेनौदार्यं प्रकाशितम्॥ १६॥

एवं तद्वचनमाकर्ण्य द्विगुणं विस्मयमाश्रित्याह—अहो इति अद्भुतानुवेधपारवश्यद्योतकम्। आश्चर्यं, पूर्वस्मादिति शेषः। तत् प्रतिपादयति—अस्यामप्यवस्थायां देहस्य क्षतप्रायत्वेनासन्नपातित्वाद्अतिदौर्बल्येऽपि। एवम् अनुभवैकगम्यचातुर्यम्। अत्यूर्जितं लोकोत्तरौदार्यबलमाधुर्यधैर्योत्कर्षमभिधत्ते। पूर्वं ग्लान्याद्यभावहर्षनिर्वाहकधैर्योत्कर्षश्चित्तस्यानन्यदु-

आवर्जितं मया चञ्च्वा हृदयात् तव शोणितम् ।
अनेन धैर्येण पुनस्त्वया हृदयमेव नः ॥ १७ ॥

अतः कस्त्वमिति श्रोतुमिच्छामि ।

**नायकः** — एवं क्षुदुपतप्तो न श्रवणयोग्यः [1]तत् कुरुष्व तावदस्मन्मांसशोणितेन तृप्तिम् ।

---

र्देहो दृष्टः । तदा नैवं वक्तुं शक्तिः, तथापि अभक्षणात् किञ्चित् प्रश्नोत्थानाय व्याहरेदिति निरूपितम् । उक्तौ पुनश्चित्तवृत्तिरस्य दास्यमवलम्बत इति विस्मयातिशयः ।

एवं निरूप्य प्रशंसां पुरस्कृत्य पृच्छति — आवर्जितमित्यादि । मया अपटुना प्रयोगातिशयमजानता । तव प्रतिप्रयोगपण्डितस्य । हृदयात् हृदयस्थानात् । चञ्च्वा निस्सारया कर्तुर्ममापाटवमनुसरन्त्या । शोणितं रुधिरमात्रम् आवर्जितं किञ्चित् स्वीकृतम् । त्वया पुनः पटुतरेण । पुनरित्यावयोरतीव विशेषः । वक्रभणित्या प्रशंसा । अनेन वाङ्मनसोत्कर्षप्रकाशकनिजकार्यपरिस्फुटेन करणभूतेन (धैर्येण) नः हृदयमेव अन्तःकरणतत्त्वमेवावर्जितम् । त्वद्धैर्येण ममात्मा परवशीकृत इत्यर्थः । त्वया मम हृदयगतं किञ्चिदपहृतम्, (अहं?मया) तव हृदयमेवेति प्रयोगातिशयः । हृदयप्रदेशान्तःकरणयोरभेदोपचारः ॥ १७ ॥

अत इति । अस्माद्धृदयावर्जनसाधनस्य लोकोत्तरस्य धैर्यस्यास्पदत्वाद् अतर्क्यमहिमा त्वं क इति श्रोतुमिच्छामि । इच्छामीति । अतिलोकचरितस्य तव कथयेति नियोज्यत्वं न शोभनम् । देहभक्षणेन विप्रियकारिणः प्रार्थनापि लज्जावहा । अत इच्छामीति वाञ्छामात्रप्रकाशनमेवोचितमिति विनयपूर्वं प्रश्नः ॥

तत्प्रश्नं साध्यविरुद्धमवधार्य वदामि न वदामीत्युभयमनुक्त्वा, अनधिकारित्वप्रतिपादनेन कथनं निरस्य अधिकारित्वसम्पादनायैव पुनरपि स्वसाध्ये प्रौढतया नियुनक्ति — एवमिति । युक्तेयमिच्छेत्यर्धाङ्गीकारः । तर्हि कथयेत्यत्राह — क्षुदुपतप्तः क्षुत्पीडितः । एवंक्षुदुपतप्त इत्यैक्येन वा ।

---

१, 'स्या' च. पाठः. २, 'र्थं नि' ङ. च. पाठः.

**शंखचूडः** — (सहसोपसृत्य[1]) नखलु नखलु साहसमनुष्ठे-यम्[2]। नायं नागः। परित्यजैनम्। मां भक्षय। अहमसौ तवाहारार्थं वासुकिना प्रेषितः। (उरो ददाति।)

**नायकः** — (शङ्खचूडं पश्यन्[3] सविषादमात्मगतम्[4]) कष्टं विफली-भूतो मे मनोरथः शंखचूडेनागच्छता।

**गरुडः** — ([6]उभौ निरूपयन्) उभयोरपि भवतोर्वध्यचिह्नम-स्त्येव। कः खलु नाग इति नावगच्छामि।

---

न श्रवणयोग्यः। त्वदधिकाराभावस्यैवापराधः। तस्मादस्मन्मांसशोणितेनै-कीकृतेन तृप्तिं क्षुदुपतापशमनीं सम्पादय। तावत् प्रथमम्। आत्मनः श्रवणा-धिकारे सम्पादिते पुनः श्रवणयोग्यत्वमिति तस्य शङ्कामवगम्यापि प्रौढो-क्त्या तदिच्छां निरस्यति। भक्षयतस्तव किमनया इच्छया, प्रारब्धमेव समापयेत्यभिप्रायः॥

अस्मिन्नवसरे शङ्खचूडः पूर्वदर्शनानुसारेण यदृच्छयोपेत्यान्यनिषेध-पूर्वमात्मानमर्पयति — नखल्वित्यादि। निषेधनिर्बन्धेन पुनरुक्तिः। साहसं सहसा असमीक्ष्य प्रारब्धम्। उचिताहारे किं साहसमित्यत्राह — नायं नाग इति। तर्हि किं कर्तव्यमत्राह — परित्यजैनमिति। किं मम भक्ष्यम् अत्राह — मां भक्षयेति। किं तव योग्यत्वं तत् समर्थयति — अहमसाविति। सङ्केतितत्वेन दिनप्राप्त्या तवापि बुद्धौ स्फुटं पूर्वसिद्ध इत्यर्थः। तदेव स्फुटयति — तवाहारार्थमित्यादिना। उरोदानेन निस्सं-शयत्वं प्रकाशितम्॥

शङ्खचूडेनेति हेतौ तृतीया। विफलीभूत इति। स्वदेहेन तस्य रक्षणं मनोरथः। देहस्य सावशेषत्वाद् अस्य देहार्पणाच्च वैफल्यम्॥

उभौ निरूपयन्निति तदानीमेव विमर्शो जात इति स्फुरति। तत्रापि स्थूलदृष्टित्वमेव। अत आह — उभयोरिति। वध्यचिह्नं रक्तांशुक-

---

१. 'संभ्रममुप' क. घ., 'संभ्रमं सहसो, २. 'त्य तार्क्ष्य! तार्क्ष्य! न' घ., 'त्य) तार्क्ष्य! न' ङ. पाठः. ३. 'न् आत्म' ग., 'न्) क' घ. पाठः. ४. 'दम्) क' क पाठः. ५. 'कृ' क. ख. पाठः. ६. 'विलोकय' ख. पाठः.

शंखचूडः — अस्थान एव ते भ्रान्तिः।

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुकं
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि।
तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुस्सहशोकशूत्कृतमरुत्स्फीताः फणाः पश्यसि ॥१८॥

रूपम्। तस्यास्मिन् भवति च दृश्यमानत्वाद् 'नायं नाग' इति निषेधेऽपि कः खलु नाग इति विकल्पे चिह्नसाम्यकृतेन संशयेन नावगच्छामि। अयमिति विकल्पमपोह्य न निश्चिनोमीत्यर्थः। अथवा चिह्नसाम्यात् कः खलु अयं वा त्वं वा इति नैकविषये निश्चिनोमीत्यर्थः ॥

एवं तद्वचनमाकर्ण्य अवसरलाभात् स्वतो वैरिणमविमृश्यकारितया कृतमहापुरुषनिग्रहं भेदकचिह्नोद्बोधनद्वारा अपहासादिरूपरूक्षकाकुगर्भं निरस्यति। तदमर्षेणात्मानं ग्रसति चेत् समीहितसिद्धिरिति च बुद्धिः। अस्थाने अविषये नागभ्रमाविषये। रजतभ्रमः शुक्तिकायामेव घटते, न घटे। मालायामेव फणिबुद्धिः, न कमण्डलौ। त इति। मन्दधियामेव भ्रान्तिर्दृष्टा, न भवादृशाम्। तत्रापि भ्रान्त्यविषये प्रवृत्तिरिति मौढ्यातिशयः।

एवं क्षेपः, तमेव प्रकाशयति — आस्तामित्यादि।

"अस्मिन्नवसरे शङ्खचूडोऽभ्येत्य तमब्रवीत्।
हा हा मा मा कृथास्तार्क्ष्य! साहसं किं न पश्यसि ॥
अस्य विद्याधरेन्द्रस्य स्वस्तिकाङ्कमुरस्तटम्।
अहं स नागस्ते तार्क्ष्य! पश्य जिह्वालताद्वयम् ॥
विष्फूर्जद्विषफूत्काररत्नस्फीताः फणाश्च मे।
इत्युक्त्वा विपुलं वक्षः प्रसार्योन्नतविग्रहः ॥
तूर्णं मां भक्षयेत्याह स सुपर्णं पुनः पुनः ॥"

इति क्षेमराजकथानुसारेणोक्तिः। स्वस्तिकलक्ष्म स्वस्तिकाकारचिह्नमस्य

---

१. 'व भवतो भ्रा' ख. पाठः.

**गरुडः**— (शङ्खचूडस्य फणा[1]: पश्यन् नायकं च वीक्षमाणः) कः खल्वयं मया व्यापादितः ।

---

महापुरुषस्य वक्षसि प्रकाशमानमास्ताम् । तत्रावृतत्वेन न दृष्टमिति वक्तुं शक्यम् । तनौ सर्वत्र कञ्चुकं निर्मोको न आलक्ष्यते निर्मोकाख्यं नागचिह्नमस्य न लक्ष्यते । अथवा तिष्ठत्वयम् । कः खलु नाग इति नावगच्छामीति वदता मम तनौ कञ्चुकं सर्वाङ्गीणं नालक्ष्यत इति परुषकाकुगर्भम् । लक्ष्यमेवेत्यर्थः । पुनश्च जिह्वे द्वे अपीति पुनर्वचनं नान्यत्र द्विजिह्वत्वमित्यसाधारणत्वप्रकाशनाय । जल्पतः, न तु संवृतमुखस्यैवेति दुःखेन प्रलपतो न कदाचिदपि मुखसंवृतिरिति खेदः प्रकाश्यते । न गणिते न द्वितया परिसंख्याते निरूपिते वा, निश्चयायेति शेषः । नामेति, कुत्सितमिदं तव मौढ्यं व्यसनेऽपि हासावहमित्यर्थः । अपीति बहुषु चिह्नेषु सत्सु एकत्रापि न बुद्धिरिति क्षेपः । पुनश्चैताः, इदानीमपि पश्येत्यर्थः । तिस्रः फणाः । यद्येका, अनवधानेन न दृष्टमिति वक्तुं शक्यम् । तत्रापि तीव्रेण तीव्रस्य वा विषाग्नेर्धूमपटलेन व्याजिह्मा रत्नत्विषो यासाम् । एतद्विकारविशिष्टत्वं सुलक्षत्वप्रयोजकम् । दुस्सहेन शोकेन यत् शूत्कृतं जात्युचितः शूत्कारः तदनुबन्धेन श्वासमरुता स्फीताः विवृतप्रान्तभागाः अवस्थयातीव सुलक्षाः न पश्यसीति प्रश्नगर्भकाकुविशेषेणामर्षदुःखविशिष्टस्य क्षेपोक्तौ अहो पश्यतोऽप्यान्ध्यमिति क्षेपातिशयः प्रकाश्यते ॥ १८ ॥

एवं[2] तद्वचनमनुसृत्य शङ्खचूडस्य फणाः पश्यन्नित्यनेन तदनीमेवास्य विमर्शो जात इति प्रकाशितम् । अन्यथा महापुरुषवधस्यानुपपत्तिः । अयमेव नागो नान्य इति वध्यचिह्नातिरिक्तेन लक्षणेन निश्चित्य विषण्णः स्वयं विमृशति —कः खल्वि[ति] । खलुशब्दो विचारे । व्यापादित इति जीवनप्रत्याशानिवृत्त्या खेदगर्भोक्तिः ॥

---

१. 'णान् वीक्ष्य नायकं पश्यन्)' घ. पाठः. २. 'तद्व' च. पाठः.

शङ्खचूडः — भो विद्याधर[1]राजवंशतिलक! कथं कारुणिकेनापि त्व[2]यैतदतिनिष्ठुरमनुष्ठितम् ।

गरुड — अये अयमसौ विद्याधरकुमारो जीमूतवाह[3]नः,

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारदेशेष्वपि ।

---

अथ गरुडमधिक्षिप्य साहसिकत्वप्रतिपादनेन नायकमधिक्षिपति— भो विद्याधरे[4]त्यादि । वंशतिलकेत्यनेन कुलालङ्कारस्य विनाशे कुलस्यैव हानिः, न देहमात्रस्येति अविमृश्यकारिता प्रकाशिता । कारुणिकेनापि । कारुणिकत्वं युक्तं सतां, तथाप्येतदतिनिष्ठुरं देहत्यागरूपं कथमनुष्ठितम् । निर्व्याजा दयालुता मयि दर्शिता । तदलमित्युक्तमनादृत्य कृतमिदं न शोभनमिति शोकगर्भमधिक्षेपः ॥

एवमस्य वचने तटस्थवृत्त्या विद्याधरकुलजो जीमूतवाहनोऽयमिति जिज्ञासितं निश्चित्य सचमत्कारमाह — अये इति । श्रुतपूर्वस्य दर्शनजनितकौतुकेनापाततः सश्लाघमाह—अयमसाविति । अयमिति पुरोवर्तिनं कौतुकखेदशोकव्रीलागर्भमवलोक्य असाविति विचारदृष्ट्यातिलोकचरितश्रवणेन अन्तः सदा प्रत्यक्षवदवभासमानं निरीक्ष्यैकीकारेणोक्तिः ।

असाविति बुद्ध्युपारूढत्वं यद्वृत्तवाक्येनानुवदति — मेरावित्यादिना । यशोव्याप्तेः परकाष्ठां प्रकाशयितुं प्रथमं व्याप्यदेशेषु मुख्यतमं मेरुं निर्दिशति । अखिलगीर्वाणनिर्वाणप्रदे स्वर्णाचलसीम्नि । प्रकर्षार्थमिदमेवालं, व्याप्त्यर्थमन्यदिति भावः । कन्दरासु सानौ शिलातलेषु प्राग्भारदेशेष्विति स्वैरासिकाप्रदेशानाम् उद्देशे[5]ष्विति सामान्यनिर्दिष्टानां विवरणम् । अथवा किं प्रत्येकमुच्यते । अन्येष्वपि ते[6]षु तेषु प्रदेशेष्वित्यनुक्तकथनम् । बहुशः, न त्वेकवारम् । अनेन यशस्यानां कर्मणां पौनः-

---

१ 'रत्नं' क. घ. पाठः. २. 'येदमति' क. ग. ङ., 'येदृशमति' ख. पाठः. 'येदमनुष्ठितमतिनिष्ठुरं कर्म ।' घ. पाठः. ३ 'नो नाम । मे' क. ग. घ. ङः., 'नः । नूनमस्यैव महासत्त्वस्य मे' ख. पाठः. ४. 'दि । विद्याधरवंश', ५. 'त्तान्तवा' च. पाठः. ६. 'ष्वित्य' ख पाठः.

उद्देशेष्वपि तेषु तेषु बहुशो यस्य श्रुतं तन्मया
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥ १९ ॥

सर्वथाहमयशःपङ्के निमग्नोऽस्मि ।

**नायकः** — भोः फणिपते! किमेवमाविग्नोऽसि ।

**शङ्खचूडः** — किमिदमस्थानमावेगस्य[1][2] । पश्य —

---

पुन्येन नवनवा स्तुतिरिति प्रकाश्यते । तदिति पूर्वमेव भुवनप्रसिद्धम् । न तैरिदानीं गानेन प्रसिद्धिं प्रापितम्, अपितु प्रसिद्धमेव गानेनाम्रेड्यत इत्युक्तम् । लोकालोकविचारिभिः चक्रवालपर्वतान्तरालसञ्चरणशीलैः । अथवा लोकानामालोकनार्थं विचारिभिरिति कार्यपरैरप्येतदङ्गीक्रियत इति हृद्यता प्रकाश्यते । चारणा देवानामाज्ञाकरा लोकतन्त्रनिरीक्षकाः । उद्गीयमानं तारध्वनिनोच्चैर्गीयमानम् । यश इति । तत्प्रकाशकस्य प्रबन्धादेरभेदोपचारः । कर्तृविशेषकथनं विदितभुवनत्रयवृत्तान्तानां तेषामपि चमत्कारकारि कथमन्येन न गीयत इति कैमुतिकन्यायेन प्रकाशयितुम् । श्रुतमिति श्रवणस्यैव भूतत्वं, गानस्याद्यापि वर्तमानता इत्युद्गीयमानमित्यनेन प्रकाश्यते ॥ १९ ॥

एवं वर्णितमस्योत्कर्षमात्मनो निकर्षहेतुत्वेन योजयति — सर्वथेत्यादिना । महापुरुषनिग्रहादसमीक्ष्यकारित्वाच्चायशोरूपपङ्के निमग्नः । पङ्करूपणेनोन्मज्जनस्याशक्यत्वं द्योतितम् । एवं विषादगर्भोक्तिः ॥

भोः फणिपते! इति । तस्य संभ्रममालक्ष्य साध्यविरोधकृतेन खेदेन शमयति — किमेवमाविग्नोऽसीति । आवेगं त्यजेत्यर्थः ॥

किमिदमस्थानमिति आत्मनो वञ्चनेनामर्षशोकगर्भमधिक्षिपति । अस्थानमविषयः । स्थान एवावेग इति समर्थयति —

---

१. 'मस्थानिकमिदमा', २. 'स्य । स्व' ख. पाठः.

स्वशरीरेण शरीरं तार्क्ष्यात् परिरक्षता मदीयमिदम् ।
युक्तं नेतुं भवता पाताल[1]तलादपि तलं माम् ॥ २० ॥

गरुडः[2] — अये करुणार्द्रचेतसानेन महात्मना [3]ममास्य-गोचरं प्राप्तस्या[4]स्य फणिनः प्राणान् परिरक्षितुं स्वयमेवात्मा ममाहारार्थमुपनीतः । तन्महद[5]कृत्यमिदं[6] मया कृतम् । किं बहुना, बोधिसत्त्व एवायं मया व्यापादितः । तदस्य महतः

स्वशरीरेत्यादि । स्वशरीरेण न तु वस्त्वन्तरेण सर्वलोकानुग्रहदीक्षितेन । मदीयमिदं निर्गुणं निस्सारं (शरीरं) । तार्क्ष्याद् अस्मत्कुलोन्मूलनप्रवृत्तात् । परिरक्षता मणिना काचमिव विनिमयेन रक्षता । मां शरीरिणम् । भवद्विनाशस्वामिनिरसनजनितपापभाजनतया रक्षितस्यास्य पिण्डस्य पाते पातालतलात् । अधोभुवनसामान्यवाची पातालशब्दः । 'अधोभुवनपातालबलिसद्मरसातलमि'ति[7] वचनात् । तस्मान्निवासभूतात् पूर्वस्थानादपि । तलमधस्तनं नरकाख्यं, नरकस्य सर्वस्याधोवर्तमानत्वात् । नेतुं युक्तमिति काकुगर्भोक्तिः । नैव युक्तमिति प्रकाश्यते । यदि मामूर्ध्वलोकं नयसि, तर्हि रक्षितोऽस्मि । नश्वरस्यास्य पिण्डस्य रक्षणेन ममाधःपतनमेव सम्पादितम् । तदतः परमावेगस्य किं स्थानम् ॥ २० ॥

एवं तस्याधिक्षेपवचने पूर्ववत् तटस्थवृत्त्या देहत्यागवृत्तान्ते श्रोतृत्वमवलम्ब्य शिष्टाचारप्रमाणेनात्मनो निषिद्धाचरणं निश्चिनोति — करुणार्द्रेत्यादिना । करुणार्द्रचेतसेति, कारुण्यप्रेरितेन । तत्र कारुण्यमेव मुख्यमिति सिद्धम् । महात्मनेति बहुमानः । आस्यगोचरमिति रक्षानिर्बन्धः । स्वयमेव न तु प्रार्थनया । अनेन पुण्यस्य लोभनीयत्वं सिद्धम् । प्राणान् परिरक्षितुमिति प्राणरक्षणं मुख्यं, न हिंसा इति । आत्मेति देहः । देहः परार्थस्त्याज्यो, न तु देहार्थं परहिंसेति । ममाहारार्थमुपनीतः । अमुं मा भक्षयेति निषेधो न कृतः । अस्य पीडा मा भूत् । तत्र देहत्यागः

१. 'लादपि च पातालम् ॥', २. 'डः — क', ३. 'अस्मद्ग्रासगो' घ. पाठः. ४. 'स्य फ' ख ग. पाठः. ५. 'दपकृ' घ. पाठः. ६. 'मेतन्मया' इति मूलकोशपाठः. ७. 'स्युक्तत्वात्' ङ. पाठः.

पापस्याग्निप्रवेशादृते नान्यत् प्रायश्चित्तं पश्यामि । क्वनुखलु वह्निमासादयामि । (दिशः पश्यन्) अये अमी केचिद् गृहीताभय इत एवागच्छन्ति । यावदेतान् प्रतिपालयामि ।

शङ्खचूडः — कुमार ! पितरौ ते प्राप्तौ ।

नायकः — (ससम्भ्रमम्) शङ्खचूड[1] ! एहि । समुपविश्यानेनोत्तरीयेणाच्छादितशरीरं कृत्वा समु[2]पस्थितो धारय माम् ।

---

सह्य इति सिद्धम् । तदिति । एवमस्य महापुरुषस्य प्रवृत्तौ प्रवृत्तिनिवृत्तिविषया बहव उपदेशाः प्रादुर्भूताः । तस्माच्छिष्टाचारप्रमाणेन सिद्धमिदमित्यर्थः । महदकृत्यम्, इतःपरमकृत्यं नास्तीत्यर्थः । इदं प्राणिहिंसारूपमिदानीन्तनं विशेषतः कृतं न क्रियमाणमिति वैराग्यगर्भोऽनुतापः । अकृत्यस्य प्रकर्षं समापयति — किं बहुनेति । चिन्तितेनोक्तेन वा इति शेषः । बोधिसत्त्व एव जीमूतवाहनशब्दवाच्यो भगवान् बुद्धमुनिरेव पर्यायेण जगन्नाथः । तेन मम दुराहारः परिसमाप्तः । एवं विचारक्रमेण झटिति तत्त्वं निरूप्य प्राप्तविरागः प्रायश्चित्तं निरूपयति—तदिति । स्वामिन्यपि दुर्विनयस्य प्रकाशकत्वान्महतो निरतिशयस्य । अग्निप्रवेशादृते । देहार्थमयं दोषः । तस्य भस्मीकरणमेव युक्तं नान्यत् पश्यामि । एतदेव मम स्फुरति । तत् करोमीत्यर्थः । क्वनुखल्विति संभ्रमः । अमी केचिदित्यनेन गुरुजनागमः सूचितः ॥

अत एव कुमार ! पितरौ ते प्राप्ताविति । किं क्रियत इति शेषः ॥

गरुडेनाश्रुतमेतद्वचनमाकर्ण्य सम्भ्रमेण कर्तव्यं बोधयति — समुपविश्येत्यादिना । समुपविश्य समीपे उपविश्य शरीराच्छादनं कृत्वा । समु-

---

१. 'ड ! स' ख. ग. पाठः. २. 'मी' क. घ. ङ. पाठः.

अन्यथा कदाचिदीदृगवस्थं[1] मां सहसैवालोक्य[2] अम्बा जीवितं जह्यात् ।

(शङ्खचूडः पार्श्वपतितमुत्तरीयं गृहीत्वा तथा करोति ।)

(ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः ।)

**जीमूतकेतुः**— (सास्रम्) हा पुत्र[3]! जीमूतवाहन!

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायाः क्रमः
किं रक्षामि बहून् किमेकमिति ते चिन्ता न जाता कथम् ।

---

पस्थितः सम्यक् पृष्ठतः स्थित्वा देहावष्टम्भतामवलम्बमान इत्यर्थः । अकरणे दोषमाह— अन्यथेति । वात्सल्यातिशयं निरूप्य विशेषकथनम् ॥

अथ शङ्खचूडवचनानुसारेण पत्नीवधूसमेतस्तं देशमागच्छन् पिता शोकार्द्रीकृतस्य चित्तस्य परिवाहमिवाश्रुप्रवाहं मुञ्चन् चिन्तासन्तानसा[4]क्षात्कृतं पुत्रं सम्बोध्य प्रलपति— हा इति । आकाशमात्रे अस्माकं सम्बोधनं, न मुग्धमुखावलोकनेनेति मुक्तकण्ठमाक्रन्दः । पुत्रेति नरकत्राणनायोत्पादितः । अदृश्योऽपि त्वमेवाहूयसे । त्वददर्शने पुत्रान्तराह्वानमनभ्यस्तं, यतस्त्वमेक एव जातः । सर्वथा मन्दभाग्योऽहं सम्बोधयामि । जीमूतवाहनेत्युच्चारणे श्रवणे चानन्दावहोऽन्यः शब्दो न सिद्धः । आह्वानसमनन्तरमेव विनयनम्रस्य संज्ञिनोऽपि नयनानन्ददायित्वं नित्यसिद्धम् । तदपि विधिरपहृतवान् । तथाप्याकाशभाषितवत् सङ्कल्पितमपि त्वामात्मव्यसनं प्रलपामीति सम्बोधनाभिप्रायः ॥

आत्मीय इत्यादि । दयालुतया त्वयेदं कृतम् । तद्युक्तम् । तत्र कृपायाः आत्मीयः पर इत्ययं क्रमः कुतः खलु भरणादिवदात्मीये युक्ता परे तथा न इत्ययं क्रमः कुतः, नैवेत्यर्थः । जन्तुमात्रस्य दयनीयत्वाद् इति खलु तव बुद्धिः । तत् सत्यम् । नात्र विवदामि । पूर्वं कदाचिदपि

---

१. 'दृशं मां' ख. ग. पाठः. २. 'सा विलो' ख., 'सावलो' क. पाठः. ३. 'वत्स! जी' ग. पाठः. ४. 'न्तानुस' ख. पाठः.

ताक्ष्यीत् त्रातुमहिं[1] स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निश्शेषमेतत्कुलम्॥ २१ ॥

अविक्षेप्यत्वं तव न जातम्। इदानीमप्यविक्षेपबुद्धिं मा कृथाः। अवस्थैव निरूप्यत इति सत्यमित्यस्याभिप्रायः। तत्र दयनीयान् बहून् किं रक्षामि उत एकम्। एकस्य रक्षणे बहूनां नाशः, तेषां रक्षणे एकस्य। तत्र किमेकं रक्षामि किं बहूनिति चिन्ता विकल्प[2]रूपिणी न जाता। यदि चिन्ता जाता, निर्दोष एव पक्षे निश्चयो भवेदिति चिन्तेत्युक्तम्। सर्वज्ञस्योचितकारिणः कथं न जाता। अस्मासु ममत्वबुद्धिर्न जातेति न खेदः। वयं वान्यो वास्तु। तत्र न विशेषः। गुरुलाघवं चिन्तयितुं युक्तम्। तत् कथं न जातमिति प्रश्नः। न जातेति कथं ज्ञायत इति कार्येण प्रतिपादयति—ताक्ष्यीदहिम्। दयनीयेषु बहुषु सत्सु अयं विषमरूपोऽर्थो विधिवशात् सिद्धः। वैरस्य वंशानुबद्धत्वात्। स्वजीवितपरित्यागम्। अन्यस्य स्वकीयस्य कल्पवृक्षादेर्दाने नेयमनुपपत्तिः। जीवितपरित्यागेऽनन्यशरणानामस्माकं खेदः। त्वया इति। ते इत्युक्त्यैव विपरिणामेन सिद्धे त्वयेति कथनं सर्वानुग्रहहेतुस्त्वमेव वंशोच्छेदस्यापि निमित्तं जात इति खेदद्योतकम्। आत्मा स्वयम्। अद्य श्वो वा पतनोन्मुखयोरावयोर्विनाशे न खेदः। तत्र पुरस्सरणयोग्ययोस्त्वदनुसरणं जातमिति विषादः। पितराविति, न त्वावामित्ययोग्यतास्फुटप्रतीतये। वधूः अचिरोढा इयं मुग्धा इति तावत् परिसमाप्तम्। न खलु पुत्रपौत्रादिप्रसरणबहुलम्। निश्शेषं एतच्चक्रवर्तिकुलं हतम्। कुर्वता हतमिति। यदि पूर्वं चिन्तामकरिष्यः, इदं कुलं नष्टं नाभविष्यत्। अस्मद्भाग्यदोषेण कुलाङ्कुरत्वेन चिन्तितस्त्वमेव कुलोच्छेदहेतुर्जातो येन, अतश्चिन्ताभावः कल्पित इत्यर्थः॥ २१ ॥

१. 'हीन् स्व' घ. पाठः. २. 'ल्पनिरू' ङ. पाठः.

देवी — (मलयवतीमुद्दिश्य) (क) जादे! मुहुत्तअं पि दाव विरम। इमेहिं अविरदपडन्तेहिं अस्सुबिन्दूहिं[1] दे णिव्वापीअदि अअं अग्गी।

(सर्वे परिक्रामन्ति।)

गरुडः[2] — हा पुत्र जीमूतवाहनेति[3] ब्रवीति। व्यक्तमयमस्य पिता। अतः कृतमेतदीयेनाग्निना। अपिच न शक्नोम्यस्य पुत्रघाति[4] लज्जया मुखं दर्शयितुम्। अथवा किमग्निहेतोः पर्याकुलोऽहम्। तटस्थ एवास्मि जलनिधेः। तद् यावदिदानीं,

(क) जाते! मुहूर्तकमपि तावद् विरम। एभिरविरतपतद्भिरश्रुबिन्दुभिस्ते निर्वाप्यतेऽयमग्निः।

जाते! वत्से मुहूर्तमपि तावद् विरम, न चिरकालमस्माकं जीवनम्। एभिरविरतपतद्भिरश्रुबिन्दुभिस्ते निर्वाप्यतेऽयमग्निः। हस्तस्थस्य धाराश्रुपतनसम्भवात्। अयमिति यावत्कार्यमनिर्वापणीयत्वेन यत्नरक्ष्यत्वं बोधितम्॥

अथैतान् प्रतिपालयामीत्युक्त्वा तदेकपरत्वेन दत्तावधानः प्रलापमवधार्याह — हा पुत्रेति। इति ब्रवीतीति तदुक्त्यनुकारः। व्यक्तमिति। अत इति पूर्वोक्तस्य हेतुत्वं सिद्धम्। अयमागच्छन्। अस्य शयानस्य पिता। प्रलापवचनमेतस्य गमकम्। तदेतदीयेनाग्निना कृतम्, अलमित्यर्थः। तव पुत्रो मया हतोऽग्निं देहीति वक्तुं न युक्तम्। अतस्तदर्थं प्रतिपालनं न घटते। अपिचेति। अग्नियाचन एव न, अस्य पुत्रघाति मुखं दर्शयितुम् अहं तव पुत्रं हतवान् मां पश्येति लज्जया न शक्नोमि। शीघ्रं गन्तव्यमित्यर्थः। अथवेति पूर्वमनिरूपितत्वं द्योतयति। अग्निहेतोः किमहं पर्याकुलस्तटस्थ एव जलनिधेर्न दूरस्थः। तत्फलमाह — तद्

१. 'धारेहिं' क. ग. घ., 'जलेहिं' ग. ङ. पाठः. २. 'जीमूतकेतुः — हा', ३. 'न। । गरुडः—व्य' घ. पाठः. ४. 'ती' ख. ग. घ. ङ. पाठः. ५. 'हं' क. पाठः.

ज्वालाभङ्गैस्त्रिलोकीग्रसनरसचलत्कालजिह्वाग्रकल्पैः
सर्पद्भिः सप्त सर्पिष्कणमिव कबलीकर्तुमीशे समुद्रान् ।
स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पक्षवातै-
रस्मिन् कल्पावसानज्वलनभयकरे बाडवाग्नौ पतामि ॥ २२ ॥

यावदिदानीमिति श्लोकस्थेन पतामीत्यनेन सम्बन्धः । तदिति, अग्नेरया-च्यत्वाद् एतद्दर्शनस्य परिहार्यत्वाद् जलनिधितटस्थत्वाद् अग्नेरन्यथासिद्धत्वाच्चेत्यर्थः । यावदित्यध्यवसाये । गन्तुमध्यवस्यन्निदानीं बाडवाग्नौ पतामीति सम्बन्धः ।

अग्निप्रवेशेऽग्निसन्धुक्षणाय मित्रमपेक्षितम् । तदपि अयत्नसाध्यमित्याह — **स्वैरेव** अनन्यापेक्षैः । पक्षवातैः पक्षपुटपर्याययुगपद्वीजनक्रमप्रसृमरैर्वातैः उत्तरोत्तरप्रचण्डावयवैः । धुक्षिते विवर्धिते । तदानीं कल्पावसानज्वलनभयकरे महाकल्पावसाने भुवनसंहारोद्यतकालरुद्रानलवद् भयकरे भयोत्पत्तिहेतौ । कथं तादृशं प्राचण्ड्यं पक्षवायुसन्धुक्षणे, तत्राह— उत्पातवातप्रसरपटुतरैः सन्धुक्षणनिपुणैः । द्वयोर्नैपुणे निरूप्यमाणे पक्षवातस्याधिक्यम् । उत्पाते प्रलये वातस्कन्धसप्तकस्यैकीभावेन ब्रह्माण्डमध्यमभिव्याप्य प्रसरतो वातादधिकैः । कल्पान्तज्वलनस्योत्पातवातेन सन्धुक्ष्यमाणत्वात् तत्समानस्य बाडवाग्नेस्तत्तुल्यपक्षवातचलनं युक्तम् । एवं तात्कालिकं कल्पावसानज्वलनसाम्यं यदि स्वाभाविकं, तादृशस्य कथं सन्धुक्षणापेक्षा कथं वा नित्यं वर्तमानस्य प्रलयाग्नितुल्यत्वम् । उच्यमानविशेषणयोजनं च तथासत्येव घटत इत्याकाङ्क्षाक्रमेण समन्वयः । एवंभूतत्वाद् ज्वालाभङ्गैः कचकचायमानैर्नतोन्नतसंवर्धितैरवयवैः । त्रिलोकीग्रसने रसः आग्रहस्तेन चलतां कालमूर्तेर्जिह्वाग्राणां साम्ये ईषदसमाप्तैः, प्रलयाभावात् । सर्पद्भिः सप्त समुद्रानेकीकृत्य सर्पिष्कणमिव कबलीकर्तुमीशे समर्थे । कदाचिदग्निना संहारः कदाचित् कालग्रसनेनेति पूर्वोक्तस्य न विरोधः । उपमानेन ग्रसनस्येषत्करत्वं ध्वनितम् । एवं बाडवस्योत्कर्षातिशयकथनेन पतनसमय एव भस्मीभावात् प्रायश्चित्ते कृतार्थता प्रकाश्यते ॥ २२ ॥

(उत्थातुमिच्छति ।)

**नायकः**—भोः पतगाधिराज! अलमनेन व्यवसायेन । नायं प्रतीकारोऽस्य पाप्मनः ।

**गरुडः**—(जानुभ्यां स्थित्वा कृताञ्जलिः) महात्मन्! कस्तर्हि कथ्यताम् ।

**नायकः**—प्रतिपालय क्षणम् । पितरौ मे प्राप्तौ । यावदेतौ प्रणमामि ।

**गरुडः**—एवम् ।

---

अतश्चोत्थातुमिच्छा । तन्निरोधार्थम् इच्छतीति कथनम् ॥

तं प्रतिपादयति—भो इत्यादि । अस्य विनाशो मा भूदिति दयाप्रसरेणाह—पतगाधिराजेति । अनेकाश्रयत्वेन जीवनौचित्यं सूचितम् । अनेनाग्निप्रवेशविषयेण । तेन पापप्रतीकारार्थं व्यवसायान्तरं सूचितम् । निषेधहेतुमाह—नायमिति ॥

अयमित्यनुक्त्वा निषेधमुखेनान्यत् सूचितं प्ररोचनार्थम् । तदेव विदित्वाह—जानुभ्यामित्यादि । उपसत्तिप्रकारपूर्वं महात्मन्निति । अपकारिण्यपि उपकारकस्ते आत्मा । अतः प्रार्थये कस्तर्हि कथ्यताम् । भवानेवास्माकमुपदेष्टा ॥

प्रतिपालय क्षणमिति । अस्य प्रायश्चित्तोपदेशेन पापशुद्धिः अहिकुलस्य रक्षणं च भवेदिति चिन्ताधिकं फलं निरूप्य उपदेष्टुं तं वशीकरोति—प्रतिपालयेति । प्राप्ताविति तत्प्रणामस्य प्राप्तकालत्वम् । यावदिति एतत्प्रणामपर्यन्तं प्रतिपालयेत्यर्थः ॥

एवमिति, करोमीति शेषः । अनुवादानुरूपं कृताञ्जलिरेव स्थितः ॥

---

१. 'प्रस्थातु' क. ख. ग. ङ. पाठः. २. 'गरा' ख., 'ज्ञा' घ. पाठः. ३. 'वमस्तु ।' क. ख. ङ. पाठः. ४. 'ज्ञा' ङ. पाठः.

**जीमूतकेतुः**—(दृष्ट्वा सहर्षम्) देवि! दिष्ट्या वर्धसे। अयमसौ वत्सो जीमूतवाहनो न केवलं ध्रियते, प्रत्युत पुरः कृताञ्जलिना शिष्येणेव गरुडेन पर्युपास्यमानस्तिष्ठति।

**देवी**—(क) महाराअ! किदत्थह्मि। अक्खदसरीरस्स एव्व पुत्तअस्स मुहं दिट्ठं।

**मलयवती**—(ख) जं सच्चं एव्व अय्यउत्तं पेक्खन्ती वि[२] असंभावणीअं त्ति करिअ ण पत्तिआमि।

**जीमूतकेतुः**—(उपसृत्य) वत्स! एह्येहि। परिष्वजस्व माम्।

(नायकः उत्थातुमिच्छन् पतितो[३]त्तरीयो मूर्छितः।)

**शंखचूडः**—कुमार! समाश्वसिहि समाश्वसिहि।

**जीमूतकेतुः**—हा वत्स! कथं दृष्ट्वा[४]पि मां परित्यज्य गतोऽसि।

(क) महाराज! कृतार्थास्मि। अक्षतशरीरस्यैव पुत्रकस्य मुखं दृष्टम्।
(ख) यत्सत्यमेवार्यपुत्रं पश्यन्त्यप्यसंभावनीयमिति कृत्वा न प्रत्येमि।

एवं तदासिकादर्शनेन भ्रमकृतस्तेषां हर्षः आरूढपतितानामिव दुःखपरिपोषाय प्रकाश्यते। दिष्ट्या दैवसम्पत्त्या वर्धसे। अयमसौ अस्मद्बुद्धावन्यथाप्रतीतः। केवलं ध्रियते अवतिष्ठते इत्येव न। 'धृङ् अवस्थाने' इति धातुः। प्रत्युतेति। गरुडेन भक्षित इत्यस्माकं प्रतीतिः, असौ तेन सेव्यत इति विपर्ययः॥

१. 'जीवदि त्ति' क., 'अदिप्पिअं' ग. ङ. पाठः. २. 'चि' ख. पाठः. ३ 'तो मू' क. पाठः. ४. 'दृष्टैव मां' ग. पाठः.

**देवी** — (क) हा पुत्तअ! कहं वाआमत्तएण वि[1] तुए ण संभाविदह्मि ।

**मलयवती** — (ख) हा अय्यउत्त! कहं गुरुजणो वि तुए[2] उवेक्खिदव्वो ।

(मोहं गच्छन्ति[3] ।)

**शंखचूडः** — हा शङ्खचूडहतक! गर्भ[4] एव किं न विपन्नोऽसि, येनैवं क्षणे क्षणे मरणाधिकं दुःखमनुभवसि ।

**गरुडः** — सर्वमेतद्[5] [6] मम नृशंसस्यासमीक्ष्यकारिताया विजृम्भितम् । तदेतदपि तावत् करोमि । (पक्षाभ्यां वीजयन्) समाश्वसिहि[7] महात्मन्! समाश्वसिहि ।

**नायकः** — (समाश्वस्य) शङ्खचूड! समाश्वासय गुरून् ।

**शंखचूडः**[8] — (उपसृत्य) तात! समाश्वसिहि[9] । अम्ब! समाश्वसिहि । समाश्वसितो[10] जीमूतवाहनः । किं न पश्यथ[11], प्रत्युत युष्मानेव समाश्वासयितुमुपविष्ट[12]स्तिष्ठति[13] ।

(क) हा पुत्रक! कथं वाङ्मात्रेणापि त्वया न सम्भावितास्मि ।

(ख) हा आर्यपुत्र! कथं गुरुजनोऽपि त्वयोपेक्षितव्यः ।

अथ करुणस्य रौद्रजन्यस्य परिपोषाय तेषां प्रलापादयः तद्दर्शनेन गरुडस्योपदेशानुगुणपरिपाकजननाय च ॥

अत एव सर्वमेतदिति वैराग्यगर्भोक्तिः । एतत्सर्वं महात्मनो भक्षणम्, अस्य मोहः, एतेषां प्रलापः, पुनर्मोह इत्यादि । असमीक्ष्यकारि-

१. 'वि ण' क. पाठः. २. 'ए ण पेक्खि' ख. ग. पाठः. ३. 'गताः ।)' ख. पाठः. ४. 'र्ति' घ. पाठः. ५ 'भस्थ ए' क ग. घ पाठः. ६ 'मिदं म' क. ख. घ. ङ. पाठः. ७. 'हि समाश्वसिहि म' ङ. पाठः. ८. 'डः—तां' क. ग. घ. ङ. पाठः ९ 'हि समाश्वसिहि । अ' ख. ग., 'हि । समाश्वसित्वम्बा । समाश्वासितो जीमूतवाहनः । शङ्ख—किं' घ. पाठः. १०. 'स्तस्ते पुत्रो जी' ण., 'स्तो जी' ग. पाठः. ११. 'त' घ. पाठः. १२. 'तुं प्रत्यागतोस्ति' क. पाठः. १३. 'त्तिष्ठ' घ. ङ. पाठः.

(उभौ समाश्वसितः ।)

**देवी** — (क) हा पुत्तअ! पेक्खन्ताणं एव्व अह्माणं कदन्तहदएण अवहारीअसि[1]।

**जीमूतकेतुः** — देवि! मैवममङ्गलं वादीः । ध्रियत एवायुष्मान् । तद् वधूस्तावदाश्वास्यताम्[2]।

**देवी** — (वस्त्रेण मुखमावृण्वती रुदत्येव) (ख) पडिहदं खु अमङ्गळं । ण रोदिस्सं । जादे! समस्ससे[3] दाव । वरं एत्तिअं वेळं भत्तुणो दे मुहं दिट्ठं ।

**मलयवती** — (समाश्वस्य) (ग) हा अय्यउत्त! किं करोमि मन्दभाइणी ।

(क) हा पुत्रक! पश्यतामेवास्माकं कृतान्तहतकेनापह्रियसे ।

(ख) प्रतिहतं खल्वमङ्गलम् । न रोदिष्यामि । जाते! समाश्वसिहि तावत् । वरमियतीं वेलां भर्तुस्ते मुखं दृष्टम् ।

(ग) हा आर्यपुत्र! किं करोमि मन्दभाग्या ।

ताया अविवेकित्वस्य । विजृम्भितं निर्यन्त्रणं[4] विलसितं तत्फलमित्यर्थः । एतदपीति, सर्वोपकारस्याशक्यत्वेन आश्वासनमात्रमपि करोमीत्यर्थः ॥

उपविष्टस्तिष्ठति, आश्वासननिर्बन्धेन सावष्टम्भमास्त इत्यर्थः ॥

जाते समाश्वसिहीति । वरमियतीं वेलां भर्तुस्ते मुखं दृष्टम् । वरमिति अनाश्वासादीषत् प्रियमाश्वासनं, भर्तृमुखदर्शनस्य सिद्धेः । 'वरं क्लीबे मनाक्प्रिये' इति । वरमिति मुखविशेषणं वा ॥

१. 'त्त! पक्खिराअरूवेण अह्माअं पाणाइं अवहरन्तेण क' घ. पाठः. २. 'समाश्वास्यतां वधूः' क. पाठः. ३. 'सिहि । उट्ठेहि । ए' क. घ., 'स । ए' ङ. पाठः. ४. 'त्वे आ' ङ. च. पाठः.

**देवी** — (मलयवत्या मुखं[1] पाणिना परामृज्य) (क) वच्छे! मा एव्वं[2] करेहि। पडिहदं खु एदं।

**जीमूतकेतुः**[3] — (सास्रम्[4])

विलुप्तशेषाङ्गतया प्रयातान् निराश्रयत्वादिव कण्ठदेशम्।
प्राणान् वहन्तं तनयं निरीक्ष्य कथं न पापः शतधा व्रजामि[5]॥

**मलयवती** — (ख) अदिदुक्खरकारिणी खु अहं। जा ईदिसं पि अय्यउत्तं पेक्खन्ती अज्ज वि जीविअं ण परिच्चआमि।

**देवी** — (नायकस्याङ्गानि परामृशन्ती गरुडमुद्दिश्य) (ग) णिसंस! कहं दाणि तुए एदं आपूरिअमाणणवरूवजोव्वणसोहं[6] एव्वं[7] एददवत्थं पुत्तअस्स मे सरीरं[8] किदं।

---

(क) वत्से! मैवं कुरु। प्रतिहतं खल्वेतत्।

(ख) अतिदुष्करकारिणी खल्वहम्। येदृशमप्यार्यपुत्रं पश्यन्ती अद्यापि जीवितं न परित्यजामि।

(ग) नृशंस! कथमिदानीं त्वयैतदापूर्यमाणनवरूपयौवनशोभमेवैतदवस्थं पुत्रकस्य मे शरीरं कृतम्।

---

विलुप्तेत्यादि। कण्ठदेशप्राप्तौ हेतुरुत्प्रेक्ष्यते — विलुप्तशेषाङ्गतया निराश्रयत्वादिवेति। एवं प्रयाणोन्मुखान् प्राणान् वहन्तं तनयं निरीक्ष्य कथं शतधा शतप्रकारं न व्रजामि विशरणं न गच्छामि। एवं निरीक्षणं जातम्। उत्तरकालक्रियायां किं विलम्बेनेमिति जीवनविरागः। पापः अतिपापसम्पन्नः॥ २३॥

नायकस्याङ्गानि परामृशन्तीति अधिक्षेपोपक्रमः। नृशंसेत्याद्यधिक्षेपः॥

---

१. 'खं प' ग. पाठः. २. 'व्वं। प' क. पाठः. ३. 'तुः — (आत्मगतं सा)' ग. पाठः. ४. 'स्रम् आत्मगतम्)' क. ख. ङ. पाठः. ५. 'त्तजामि' क. ग. घ. ङ. पाठः. ६. 'हस्स ए' क., 'हग्गं ए' ख. ग. पाठः. ७. 'व्व पु', ८. 'रं एव्वं कि' ग. ङ. पाठः.

**नायकः**— अम्ब ! मा मैवम् । किमनेन कृतम् । ननु पूर्वमप्येतदीदृशमेव परमार्थतः । पश्य,

मेदोस्थिमज्जामांसासृक्सङ्घातेऽस्मिन् त्वगावृते ।
शरीरनाम्नि का शोभा सदा बीभत्सदर्शने ॥ २४ ॥

**गरुडः**— भो महात्मन् ! नरकानलज्वालावलीढमात्मानं मन्यमानो दुःखं तिष्ठामि । तदुपदिश्यतां येन मुच्येऽहमस्मादेनसः ।

---

अम्ब ! मा मैवमिति । वादीरिति शेषः । किमनेन कृतमिति तदधिक्षेपानिच्छया निवारणम् । नन्विति, त्वयापि ज्ञातुं शक्यमित्यर्थः । पूर्वमपि, एतत्प्रवृत्तेः । परमार्थत इति, आपूर्यमाणेत्यादिगुणवर्णनं भ्रमकृतमित्यर्थः । पश्येति इदानीं देहबीभत्सतादर्शनसौकर्याद् भ्रमं विहाय विमृशेति वा ।

मेद इत्यादि । मेदःप्रभृतीनां संघाते सञ्चये । असृक्छब्देन शुक्रमप्युक्तम् । 'शुक्रशोणितयोरसृग्' इत्युक्तत्वात् । त्वचा आवृते, इदमेव ग्राह्यतानिमित्तम् । अन्यथा

"यदिनामास्य कायस्य यदन्तस्तद् बहिर्भवेत् ।
दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥"

इत्युक्तत्वात् सदा पीडावहम् । शरीरनाम्नि नश्वरत्वद्योतकनामयुक्ते अस्मिन् पिण्डे का शोभा । निरूपणे न काचिदपि । सदा बीभत्सदर्शने रोमनखदन्तविण्मूत्रद्वारादिभिर्जन्मप्रभृतिजुगुप्सितदर्शने ।

"मांसं मेदो रुधिरं रोम नखं देहतो विनैकैकम् ।
बीभत्सं संघाते रमणीयमहो विमोहमाहात्म्यम् ॥"

इति च विवेकिनः । तद् एतद्भेदनेन खेदं मा कृथाः । इमं च मा परुषं वादीरित्यर्थः ॥ २४ ॥

भो महात्मन्निति, प्रतिपालनेऽस्योर्जितं वचनं श्रुत्वा अवसरमालक्ष्य आत्मव्यसनप्रकाशनपुरस्सरं प्रार्थयते । महात्मन्, भवन्माहात्म्य

---

१. 'वि' ङ. च. पाठः.

**नायकः**— अनुजानातु मां तातः। यावदस्य पापस्य प्रतिपक्षमुपदिशामि ।

**जीमूतकेतुः**— वत्स! एवं क्रियताम्।

**नायकः**— वैनतेय! श्रूयताम् ।

**गरुडः**[2]— (जानुभ्यां स्थित्वा कृताञ्जलिः) आज्ञापय ।

**नायकः**—

नित्यं प्राणातिपातात् प्रतिविरम कुरु प्राक्कृते चानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम् ।

---

मेव प्रार्थने निमित्तं, न मम पात्रता इत्यनुवर्तनम् । नरकानलज्वालावलीढमिति । पापगौरवेण अद्य श्वो वा देहपातेन नरकाग्निमध्य एव पतनम् । तच्चिन्तया इदानीमेवात्मानं नरकाग्निज्वालाकबलीकृतं मन्यमानो दुःखं तिष्ठामि कृच्छ्रेण स्थितिमपि करोमि । चिन्तायामेवावस्थैषा । पतने किं पुनः तदुपदिश्यतां प्रार्थये । येन मुच्ये, भवतेति शेषः । सुकृतबलात् स्वयमेव वा । तदिति यत्प्रतियोगितया हेतौ वा । एतत्फलस्य नरकस्य चिन्तया मे भीतिः, किं पुनर्लाभे । तद् येन प्रायश्चित्तेन नरकपातो न भवेत् तदुपदिश्यतामित्यर्थः ॥

अनुजानात्विति गुरुसन्निधावुपदेष्टुमयुक्तत्वादनुज्ञाप्रार्थनम् । अनुज्ञायां सिद्धायामस्य पापस्य प्रतिपक्षं पुण्यम् एतदकिञ्चित्करत्वसाधकमित्यर्थः ॥[3]

वैनतेय! श्रूयतामिति तस्यावधानदानशिक्षा । सावधानमुपदेशः परिगृह्यतामित्यर्थः ॥

तदवधानेन सोपचारम् आज्ञापयेति प्रार्थना ॥

नित्यमित्यादि । नित्यमनुष्ठीयमानात् प्राणातिपातात् परप्राणानामतिक्रम्यान्यायेन पातनात् । अथवा नित्यमत्यन्तम् । विरम निवर्त-

---

१. 'यद' घ. पाठः. २. 'ङ:—कृताञ्जलिर्जानुभ्यां स्थित्वा), ३. 'ञ्चित्प्रार्थनाकर' घ. पाठः.

मग्नं येनात्र नैनः फलति परिमितप्राणिहिंसात्तमेतद्
दुर्गाधापारवारेर्लवणपलमिव क्षिप्तमन्तर्ह्रदस्य ॥ २५ ॥

स्व । आन्तरालिके निवर्तने न साध्यशेषत्वम् । प्रतिविरमं प्रतीपं विरम । अनुष्ठानक्रमाद् व्युत्क्रमेण विरमणक्रमः । प्रथमं हनिष्यामीति बुद्धिः, पश्चादुपक्रमः, पश्चाज्जीवितापनयनमिति क्रमः । विरमणे प्रथमं हिंसाभावः, ततः शस्त्रग्रहाद्यभावः, ततोऽवध्यताबुद्धौ विश्रान्तिरिति प्रक्रियाक्रमेण विरमणम् । यथा निरन्तरस्य जलप्रवाहस्यापनयने साध्ये सेतुप्रभृतिभिरागमनमार्गनिरोधेन प्रवाहविच्छेदात् पूर्वं निचितस्य शोषणे लाघवं, तथा आगामिनो निरोधादेकोंऽशः सिद्ध इति प्रथमं विरमणकथनम् । पुनरंशान्तरमाह—प्राक्कृते इतः पूर्वं वाङ्मनःकायैः सम्पादिते । अनुतापं पश्चात्तापं च कुरु । नित्यमिति अत्रापि । यथा निग्रहचिन्तया पूर्वं[1] दोषः । अत्र प्रामादिकस्यैव प्रायश्चित्तविषयत्वं, न बुद्धिपूर्वं कृतस्य । अन्यथा स्वेच्छया निषिद्धाचरणं, पुनः प्रायश्चित्तकरणमिति निषिद्धस्यापि करणमिच्छाधीनम् । अतश्चिरकालं[2] कृत्यबुद्ध्या कृतस्य कथं प्रतीकारेण नाश इति वैषम्यपरिहाराय एकैकांशेन एकैकांशदौर्बल्यापादनं कर्तव्यमिति समुच्चयद्योतकेन चशब्देन प्रकाशितम् । अतो[3] मया नश्वरस्य देहस्यार्थे चिरकालं प्राणिनो हिंसिताः कष्टमित्यनुतापेन चिरकालकृतेन पूर्वं हिंसाध्यानेनापादितस्य दोषस्य क्रमगलनं ततः प्रामादिकत्वं कर्मणः सेत्स्यतीत्यनुतापफलम् । एवं विरमणेन अनुबन्धविच्छेदाद् अनुतापेन प्रतीकारविषयत्वाच्च क्षयोन्मुखत्वे सिद्धे प्रतिपक्षसंवर्धनेन एनसो दौर्बल्यमापादयेदित्युपदिशति । यत्नाद् एतदेकपरतया, न तु लीलया । अनेन पापस्य गुरुतमत्वाद् यत्नापनेयत्वं शिष्यप्रवृत्तये कारुणिकत्वेनोपदिशति । अत एव देहदाहमात्रस्याकिञ्चित्करत्वाद् नायं प्रतीकार इत्युक्तम् । पुण्यप्रवाहं पुनः पुनरनुष्ठानेनाविच्छिन्नं सुकृतसञ्चयम् । सम्यग् उपचिनु परिपोषं नय । सर्वसत्त्वेषु जन्तुमात्रे अभीतिं दिशन् 'सहस्रशः स्रवती'त्युक्तवत् हिंसां विना भयोत्पादनेन यो दोषः, अभयदानेन तस्य निष्कृतिरिति पुण्यप्रवाहस्य दिक्प्रकाशनम् । एवं कृते प्रतियोगिप्राबल्येन दुष्कृतस्य

१ 'वेक्तु' घ. ङ. पाठः. २. 'रक्तु', ३. 'प्रचुर' ङ. पाठः.

गरुडः—

अज्ञाननिद्राशयितो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेष विरतोऽद्यप्रभृत्यहम् ॥ २६ ॥

किमापतेद् इति तत्फलप्रकाशनेन प्रोत्साहयति—मग्नमित्यादि । मग्नं यत्र क्वचन लीनम् । येनेति हेतुत्वेन वा पुण्यप्रवाहपरामर्शित्वेन वा । अत्र पुण्यप्रवाहे । एनो न फलति प्रतियोगिप्राबल्येन कार्यकरं न भवति, यतः परिमितानां प्राणिनां हिंसया सम्पादितमिति । पुण्यस्यातिमहत्तया परिमितत्वबोधविषयमित्यर्थः, न स्वतस्तुच्छतया । पुण्यप्रवाहे एनसि च निरूप्यमाणे महतोऽपि 'पृथ्वीरेणुरणुरि'त्युक्तवद् अतिमहान्तमपेक्ष्य तुच्छता प्रतीयत इति परिमितेत्युक्तम् । पुण्यस्य तादृशं महत्त्वं बोधयितुमेतदिति । दुरुच्छेदत्वबुद्धिं मा कृथा इति बोधयति । कथं मग्नस्य फलासम्पादकत्वमित्यत्र दृष्टान्तमाह—दुर्गाधापारवारे[1]र्ह्रदस्यान्तः क्षिप्तं लवणपलमिव । ह्रदविशेषणेन तस्य महत्त्वं, पलशब्देन लवणस्य तुच्छत्वं चोक्तम् । पलं परिमितं शकलम् । तद् यथा न फलति ह्रदजलस्य लवणरसत्वमापादयितुं न शक्नोति स्वयमतीवाकार्यकरं विलीयते, तथेदमपीत्युक्तप्रकारेण पुण्यपूरेणैनः लघुतां नयेत्यर्थः ॥ २५ ॥

एवं बोधित उक्तक्रमेणोपदेशपरिग्रहं प्रतिज्ञारूपेण प्रकाशयति—अज्ञानेत्यादिना । इतः पूर्वम् अज्ञानरूपया निद्रया शयितः । अज्ञानं तत्त्वाग्रहणरूपं, तस्य निद्रात्वं प्रवृत्तिनिवृत्तिविषयेषु विवेकरूपजागरराहित्येनोत्स्वप्नायितवद् यत्किञ्चनकारित्वं, तया शयितः कदाचिदपि कर्तव्येष्वनुद्यतत्वेन उपलब्धकारी विवेकराहित्याद् जीवन्मृतप्रायः । निद्रायां शयनं युक्तमिति तत्राप्यौ[2]रोपपरिणतिः । भवता सदा जागरूकेण कारुणिकेन । प्रतिबोधितः यथा पुनर्निद्रा न भवेत् तथा बोधितः ज्ञानाख्यं जागरं प्रापितः । एतत्फलं प्रतिपादयति—एषोऽहं भवदुपदेशेन क्षालितमलः इदानीमेवोत्तप्तसुवर्णवद् अन्यरूपतां नीतः । अद्यप्रभृति सर्वप्राणिवधाद्,

१. 'रै' घ. ङ. पाठः. २. 'दमित्यु' ङ. पाठः. ३. 'ध्या' ङ. पाठः.

सम्प्रति हि —

क्वचिद् द्वीपाकारः पुलिनविपुलैर्भोगनिवहैः
कृतावर्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।
व्रजन् कूलात् कूलं क्वचिदपिच सेतुप्रतिसमः
समाजो नागानां विहरतु महोदन्वति सुखम् ॥ २७ ॥

---

न केवलं प्रारब्धादहिवधात् । विरतः, न विरमिष्यामीति । यदा प्रतिविरमेति भवद्वदनचन्द्रबिम्बाद् वचनामृतं गलितं, तदानीमेव श्रोत्रपात्रेण तत् पीत्वा विरतः । अन्तःकरणविरमणमेव विरमणमिति भावः । अत्राज्ञाननिद्राशयित इत्यनेन प्राकृतानुतापप्रकारः विरत इत्यनेन प्रतिविरमणं चाङ्गीकृतम् ॥ २६ ॥

'अभीतिं दिशन्' इत्युक्तं प्रकारान्तरेणानुवदति — सम्प्रति हीति । सम्प्रत्येव, न कालान्तरे । नागानां समाजः समूहः । महोदन्वति व्याप्ते उदन्वति । जातावेकवचनम् । सकलसमुद्रेष्वित्यर्थः । तदर्थमेव महच्छब्दः । भयेन पाताले चिरं निलीना नागास्ततस्तत उन्मज्ज्य स्वेच्छया विहरन्तु । येषां भयं, तेषामभयदानमिति प्रथमं नागकथनम् । अन्यद् वधनिवृत्तिप्रतिज्ञयैव सिद्धम् । तत्र विहारप्रकारमाह — क्वचिदित्यादि । क्वचित् प्रदेशे पुलिनवद् विपुलैः । भोगानां शरीराणाम् । 'भोगस्तु फणकाययोरि'ति फणिशरीरे नियमात् । तेषां निवहैः निरन्तरोन्मग्नैर्द्वीपाकारः द्वीपसंस्थानः । नैश्चल्येन चिरमेकत्र स्थितत्वाद् द्वीपानां मध्ये मध्ये सम्भवात् तद्भ्रान्तिकर इत्यर्थः । क्वचित् प्रदेशे चिरेण विहारावसरलाभाद् निरर्गलत्वेन वलयितशरीरः जातिस्वभावेन मण्डलितभोगसञ्चयः । कृतावर्तभ्रान्तिर्नभश्चराणां तद्भ्रमजनकः । क्वचिदपिचेति समुच्चये निपातसमुदायः । कूलात् कूलं व्रजन्, उभयकूलनिरन्तरसम्बद्धत्वात् सेतुप्रतिसमः सेतुतुल्यः । तद्भ्रमकर इति यावद्, भ्रमस्य सादृश्यमूलत्वात् । समाज इति । सर्वत्र संघीभूय विहरणाद् भ्रमस्योपपत्तिः । एवं सुखं भयप्रतियोगिहर्षजनितविश्वासं स्वैरं विहरतु । अतिसर्गे लोट् । नात्रास्माकं विधिनिषेधाविति तात्पर्यम् ॥ २७ ॥

अपिच—

स्रस्तान् पातालग्नांस्तिमिरचयनिभान् केशहस्तान् वहन्त्यः
सिन्दूरेणेव[1] दिग्धैः[2] प्रथमरविकरस्पर्शताम्रैः कपोलैः।

अपिचेति। न केवलमुदन्वति, न केवलं विहारः, न केवलं नागसञ्चय इत्युक्तेषु सर्वेषु विशेषकथनोपक्रमः।

स्रस्तानित्यादि। बलवतां महाकायानां नागानामेव उक्तप्रकारेण विहरणशक्तिः। दुर्बलाः सुकुमार्यो लीलोद्यानादिपरिचङ्क्रमणयोग्याः उरगयुवतयः प्राप्तयौवना नागवध्वः। अस्मिन् चन्दनानां कानने। तवैव एतां कीर्त्तिमेव गायन्तु। चन्दनानां कानन इति निरन्तरचन्दनतरुमिलितशाखासहस्रशीतलीकृते विषोपशमनशौण्डे युवतिजनविहारयोग्ये अस्मिन् निजकुलक्षेमदक्षभवदपदानविषयभूते। तवैतां कीर्त्तिमेव। एतां करुणया देहत्यागनिजकुलरक्षणास्मद्विनयनादिजनितां नवां कदाचिदप्यपर्युषितामेवेति। एवमन्यस्य कीर्त्यभावात् तवैव कीर्त्यन्तरस्य दानादिजनितस्य पूर्वमेव चारणादिभिः सर्वत्र गीयमानत्वाद् एतामेवेत्युभयत्र एवशब्दः। गायन्तु, इदमत्र प्राप्तकालं, न तु क्रीडाबुध्या। निजकुलरक्षणं प्रति निष्क्रयबुद्ध्या प्रीत्या चेदमेवासामिदानीं युक्तरूपमित्यर्थः। एतदानुगुण्येन रागकथनम्। प्राप्तकाले लोट्। तासां प्रमोदातिशयेनागमनसम्भ्रममाह—स्रस्तान् चिरं मद्भयेन शिथिलबन्धान् संस्कारादिहीनान्। पातालग्नान् अतिदीर्घतया बन्धशैथिल्येन च पातालतलप्रलुठितान्। शयनादिष्वनास्थया विक्षिप्तान् केशहस्तान् प्रशस्तान् केशान्। प्रशंसायां हस्तशब्दः। तान् वहन्त्यः अभयश्रवणेन भवत्कीर्तिवर्णनाबद्धहर्षा रम्यप्रदेशाभिजिगमिषया असंयतानेव करकमलेन धारयन्त्यः। तिमिरचयनिभान् संस्काराभावेऽपि निजसौभाग्यमजहतोऽन्धकारपुञ्जतुल्यान्। पाताले चिरपरि-

१. 'गै' ख. ग. घ. पाठः. २. 'रक्तैः प्र' घ. पाठः. ३. 'क्रमि', ४. 'ब्दः व', ५. 'ले भा' ङ. पाठः.

आयासोदालसाङ्ग्योऽप्यविगणितरुजः कानने चन्दनाना-
मस्मिन् गायन्तु रागादुरगयुवतयः कीर्त्तिमेतां[2] तवैव ॥ २८ ॥

**नायकः**—साधु महासत्त्व! साधु । अनुमोदामहे । सर्वथा दृढसमाधानो भव । (शङ्खचूडमुद्दिश्य[3]) स्वभ[4]वनमेव गम्यतां[5]म् ।

---

चयेन सौहार्दात् तिमिरचयानाकृष्य नयन्त्य इव । नागीनां केशचातुर्यप्रसिद्धेः । केशग्रहणमन्याङ्गसौन्दर्योपलक्षणम् । प्रथमरविकरस्पर्शेन, भयादितः पूर्वमनिर्गमनेनेदानीं रविकरस्पर्शः । प्रथमरविरुदयोन्मुख इति वा । सर्वथा सौकुमार्येण रविकरसम्पर्कारुणितैः कपोलैरुपलक्षिताः । सौकुमार्योपलक्षणमेतत् । सिन्दूरेण दिग्धैरिव । तथा ताम्रत्वमपि विशिष्टालङ्कारसम्भावनाविषयत्वात् 'किमिव हि मधुराणामि'त्युक्तवत् सौभाग्यनिमित्तमेव । आयासाद् आगमनगानसम्भ्रमात् । आलसाङ्ग्यः परिग्लानतनुलता अपि । रागाद् भवद्गुणकीर्तनानुरागाद् अविगणितरुजः अनिरूपितपरिश्रमाः । कीर्त्तिपीयूषपानसौहित्येन निहृतश्रमाः पुनः पुनरित्यर्थः[6] । अनेन अभयदानप्रकारो महापुरुषप्रशंसनं च कृतम् ॥ २८ ॥

एवमस्योपदेशपरिग्रहं श्लाघमानो व्यवसायं स्थिरयति—साध्विति । गृहीतमुक्तं चेति शेषः । महासत्त्व! एवं महासत्त्वेन भवितव्यमित्यभिप्रायः । सर्वथा उक्तेषु सर्वेषु प्रकारेषु सर्वप्रकारेण वा । दृढसमाधानः दृढमतिनिश्चयो भव । क्वचिदपीतः परं मतिविपर्यासं मा कृथा इत्यर्थः । एवं तस्य विनयनम् अहिकुलरक्षणं च विधायात्मनिर्याणात् प्राक् शङ्खचूडं विसर्जयितुमाह—स्वभवनमेव गम्यतामिति ॥

---

१. 'सेनाल' ख. पाठः. २. 'कां ख. ङ. पाठः. ३ 'श्य) शंखचूड ! स्व' क. ख. पाठः. ४. 'गृहमे' क. घ. पाठः. ५. 'तामिदानीम्' क. ख. घ. पाठः. ६. 'शेष' ङ. पाठः.

(शङ्खचूडो निःश्वस्याधोमुखस्तिष्ठति ।)

**नायकः**—(निःश्वस्य मातरं पश्यन्)

उत्प्रेक्षमाणा त्वां तार्क्ष्यचञ्चुकोटिविपाटितम् ।
त्वद्दुःखदुःखिता दुःखमास्ते सा जननी तव ॥ २९ ॥

**देवी**—(क) धण्णा खु सा, जा गरुडमुहपडिदं पि अक्खदसरीरं एव्व पुत्तअं पेक्खिस्सदि ।

**शङ्खचूडः**—अम्ब! सत्यमेवैतद् यदि कुमारः स्वस्थो भविष्यति ।

**नायकः**—(वेदनां नाटयन्) हहह परार्थसम्पादनामृतरसास्वादाक्षिप्तत्वादेतावतीं वेलां न विदिता सम्प्रति मां बाधितुमारब्धा वेदना । (मरणावस्थां नाटयति ।)

(क) धन्या खलु सा, या गरुडमुखपतितमप्यक्षतशरीरमेव पुत्रकं द्रक्ष्यति ।

तस्याधोमुखस्थितिरेवं स्थिते किं करिष्यामीति ॥

मातरं पश्यन्निति । आत्मव्यसनं दृष्ट्वा तादृशं तन्मातुर्दुःखमाशङ्क्य तं नियुङ्क्ते—उत्प्रेक्षमाणा सम्भावयन्ती । त्वां तार्क्ष्येत्युत्प्रेक्षाप्रकारः । इदानीं मम पुत्रं तार्क्ष्यश्चञ्च्वग्रेण भिनत्ति भक्षयति हा कष्टमित्यादि सङ्कल्पयन्ती । त्वद्दुःखेन सम्भाव्यमानेन वक्षोभेदनादिदुःखेन स्वयमपि दुःखिता । दुःखं कृच्छ्रेणास्ते । सा पूर्वं दृष्टचापला तव जननी । त्वया सर्वथा तद्दुःखमपोह्यम् । तद् गम्यतामित्यर्थः ॥ २९ ॥

एवं समीहितसिद्ध्यनन्तरं महासत्त्वतया देहपीडामनिरूपयतो दुर्निवारया देहावस्थया पीडां प्रतिपादयति—हहह इति पीडाया असह्य-

१. 'णाइद' ख. घ. पाठः. २. 'रस्य स्वस्ति भ' ख. ग. ङ. पाठः. ३. 'दनाक्षि' ख. पाठः.

**जीमूतकेतुः** — (ससम्भ्रमम्) हा वत्स ! किमेवं करोषि ।

**देवी** — (क) हा किण्णुहु एदं वत्तदि । (सोरस्ताडनम्) परित्ताअह परित्ताअह । एसो मे पुत्तओ विवज्जदि ।

**मलयवती** — (ख) हा अय्यउत्त ! परिच्चइदुकामो विअ लक्खीअसि ।

**नायकः** — (अञ्जलिं कर्तुमिच्छन्) शङ्खचूड ! समानय मे हस्तौ ।

**शंखचूडः** — (तथा कुर्वन् सास्रम्) कष्टम् अनाथीभूतं जगत् ।

**नायकः** — (अर्धोन्मीलिताक्षः पितरौ पश्यन्) अयं पश्चिमः प्रणामः ।

---

(क) हा किन्नुखल्वेतद् वर्तते । परित्रायध्वं परित्रायध्वम् । एष मे पुत्रको विपद्यते ।

(ख) हा आर्यपुत्र ! परित्यक्तुकाम इव लक्ष्यसे ।

---

तया निर्देशः । परार्थेति । परार्थसम्पादनमेवामृतरसस्तदास्वादेऽनिरूपितदेहधर्मत्वादिदानीं प्राप्तावसरतया बाधितुमारब्धा वेदना व्रणपीडा ॥

अथ महापुरुषस्य साध्यान्तरोत्थानशेषतया प्राणापायप्रकारवर्णने सर्वेषां प्रलापरोदनोरस्ताडनादिना चितारोहणपर्यन्तं करुणस्योत्तरोत्तरं प्रकर्षः पश्चाद् वीरजन्यस्याद्भुतस्य प्रत्युज्जीवनादिरूपस्य निर्वहणनिर्वाहयोग्यस्येतिवृत्तनायकमहाभाग्यताप्रकाशकस्यावसरलब्धत्वेन आस्वादातिशयप्रकाशनाय प्रतिपाद्यते । अर्धोन्मीलितेत्यादि करुणोद्दीपकम् ।

---

१. 'ज्जिस्सदि' ख. पाठः. २. 'आ' क. घ., 'वत्तका' ग. पाठः. ३. 'दि' ग. ङ. पाठः.

गात्राण्यमूनि न वहन्ति विचेतनानि
श्रोत्रं स्फुटाक्षरपदा न गिरः शृणोति ।
कष्टं निमीलितमिदं सहसैव चक्षु-
र्हा तात! यान्ति विवशस्य ममासवोऽपि ॥ ३० ॥

अथवा किमनेन । ('संरक्षता पन्नगमद्य पुण्यम्' इति पूर्वश्लोकमेवं पठित्वा पतति ।)

देवी — (क) हा वच्छ! हा गुरुजणवच्छळ! हा जीमूदवाहण! कहिं सि मए पुणो पेक्खिदव्वो ।

जीमूतकेतुः — (सास्रम्) हा पुत्र जीमूतवाहन! हा प्रणयिजनवत्सल! हा सर्वगुणनिधे! क्वासि । प्रयच्छ मे प्रतिवचनम् । (हस्तावुत्क्षिप्य) कष्टं भोः कष्टम् ।

---

(क) हा वत्स! हा गुरुजनवत्सल! हा जीमूतवाहन! कुत्रासि मया पुनर्द्रष्टव्यः ।

---

गात्राणि न वहन्ति स्वं स्वं रूपम् । प्राणानां यात्रोन्मुखतया अवयवानां जाड्यमनेन प्रकाशितम् । अत उक्तं विचेतनानीति । श्रोत्रमित्यादिना इन्द्रियशक्तिप्रमोषः । एवं मरणोद्यतस्याव्यक्तालापचेष्टादिसाक्षात्कारे पित्रोर्गृहिण्याश्च करुणपरिपोषः किं वर्ण्यते ॥ ३० ॥

अथवा किमनेनेति देहभावनापरित्यागेनोक्तिः ॥

हस्तावुत्क्षिप्येति प्रलपनस्वभावः ।

---

१. 'ति श्लो' ग पाठः. २. 'कं प' घ. पाठः. ३. 'व चोक्त्वा पत' ख. पाठः. ४. 'हं' क घ. पाठः. ५. 'सि पु' ङ., 'सि पे' ग. पाठः. ६. 'तुः — हा' क. ख. ग. घ. पाठः.

निराधारं धैर्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता ।
हतं सत्यं सत्यं व्रजतु कृपणा क्वाद्य करुणा
जगत् कृत्स्नं शून्यं त्वयि तनय ! लोकान्तरगते ॥३१॥

मलयवती[1] — (सास्रम्) (क) हा अय्यउत्त! कहिं मं परिच्चइअ गदोसि । णिग्घिणे ! मळअवदि ! किं एदं पेक्खिदव्वं त्ति एत्तिअं वेळं जीविदासि ।

शङ्खचूडः — कुमार[2] ! क्व प्राणेभ्योऽपि वल्लभतरं परिजनं परित्यज्य[3] गतो[4]ऽसि[5] । तदवश्यमन्वेति त्वां शङ्खचूडः ।

(क) हा आर्यपुत्र! कुत्र मां परित्यज्य गतोऽसि । निर्घृणे ! मलयवति ! किमेतद् द्रष्टव्यमित्येतावतीं वेलां जीवितासि ।

निराधारमित्यादि । विरुद्धानामविरुद्धानां परस्परानुबद्धानां च महापुरुषगुणानामेकायतने त्वयि अस्मान् परित्यज्य लोकान्तरं गते अशरणा गुणाः किं कुर्युरिति प्रलापः । समुदितानां तिष्ठतु । एकैकस्यापि गुणस्येदृश आश्रयो न लभ्यते । निराधारं धैर्यं निराश्रयम् । कं शरणं यातु मां गृहाणेति । एतेषां नान्या गतिरिति शब्दभेदेन प्रतिपाद्यते । सत्यं नात्र स्तुतिः । किं बहुना, जगत् सर्वं सूर्यास्तमय इव त्वयि लोकान्तरं गते शून्यं जातं, सदप्यसत्कल्पमित्यर्थः ॥ ३१ ॥

१. 'ती — हा' ख. ग. घ. पाठः. २. 'र ! प्रा', ३. 'ज्य क ग' ग. पाठः ४. 'भ्यते । त' क. घ. पाठः. ५. 'सि । अव' ख. पाठः.

**गरुडः**—(सोद्वेगम्) हा कष्टम्, उपरतोऽयं महात्मा।[1] किमिदानीं[2] मया कर्तव्यम्[3]।

**देवी**—(सास्रमूर्ध्वं दृष्ट्वा[4]) (क) भअवन्तो ळोअपाळा[5]! अमिदेण सिञ्चिअ पुत्तअं मे[6] जीवावेह।

**गरुडः**—(सहर्षमात्मगतम्) अमृतसङ्कीर्तनात् साधु स्मृतम्। मन्ये प्रमृष्टमयशः। तद् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनम्, एतानपि पूर्वभक्षितानस्थिशेषानाशीविषान् प्रत्युज्जीवयामि। अथवा न ददात्यसौ, ततोऽहं

(क) भगवन्तो लोकपालाः! अमृतेन सिक्त्वा पुत्रकं मे जीवयत।

हा कष्टमिति। महात्मा करुणानिधिरिति खेदः। किमिदानीमिति। मन्निमित्तं हितोपदेष्टा अयं मदग्रे लोकान्तरं गतः। तत् किमिदानीं मया कर्तव्यम्॥

भअवन्तो इति। कथमिति पाठे न जीवयतेति। अन्यत्र जीवयतेति॥

एवं विधिवशादमृतशब्दश्रवणेन प्रहृष्टो निरूपयति—अमृतसङ्कीर्तनादिति। अमृतशब्दोच्चारणेन कर्तव्यबुद्धिः स्फुरिता। तदन्तर्निधायाह—मन्ये प्रमृष्टमयश इति। कर्तव्यस्यैपल्करत्वनिश्चयेनं सिद्धवत्कथनम्। तदेव प्रतिपादयति—तद् यावदिति। त्रिदशपतिमभ्यर्थ्येति। साम्नैव फलसिद्धिश्चेत् तदेव शोभनम्। तद्विसृष्टेन प्रार्थितलब्धेन। न केवलमिति। जीमूतवाहनस्य जीवनार्थमुद्यमः, तेनान्यदपि सेत्स्यति। एतान् अस्थिरूपेण दृश्यमानान् अत्यन्तोच्छेदाभावादमृतजीवनीयान्।

१. 'डः क' घ. ङ. पाठः. २. 'नीं क' इति मूलकोशपाठः. ३. 'रिष्ये।' क. ख. ग. घ., 'रोमि।', ४. 'ष्ट्वा) हा भ' ङ. पाठः. ५. 'ळा! कहं अ', ६. 'मे ण जा' क. ख. पाठः.

पक्षोत्क्षिप्ताम्बुनाथः पटुजवपवनप्रेर्यमाणे समीरे
नेत्रार्चिःप्लोषमूर्छाविधुरविनिपतत्सानलद्वादशार्कः ।
चञ्च्वा सञ्चूर्ण्य शक्राशनिधनदगदाप्रेतलोकेशदण्डा-
*नन्तः संमग्नपक्षः क्षणममृतमयीं वृष्टिमभ्युत्सृजामि ॥ ३२ ॥

पूर्वभक्षितान् मयैव जीवयितुं योग्यान् प्रत्युज्जीवयामि । अत एव प्रमृष्ट मिति प्रकर्षकथनम् । अथवेति विकल्पितं स्फुटयति । अभ्यर्थ्येत्यनेन दानं सिद्धम् । अत्र पक्षान्तरमदानम् । अतो न ददातीत्युक्तम् । विकल्पद्योतकेन वाशब्देन यद्यर्थः सिद्धः । असाविति । पूर्वमपि दृष्टमत्प्रभावः । ततस्तर्हि, इत्यमृतमयीं वृष्टिमभ्युत्सृजामीति सम्बन्धः ।

इतिशब्देन संगृहीतं प्रकारमाह — पक्षेत्यादि । निग्रहं देहव्यतिरिक्तं शस्त्रं च विना साधयिष्यामीत्यभिप्रायः । पक्षवातेन निराकृतमहोदधिः । लोकपालजयस्योपत्करत्वाद् देवसैन्यं न सम्मुखे भवतीति तज्जयः प्रथमं प्रतिपाद्यते । पटुना जवपवनेन सजातीयेन वेगवायुना प्रतीपमीर्यमाणे यथागतं पलायनं कारितेऽनिले । पुनः नेत्रार्चिःप्लोषेण दृष्टिपातेन मूर्छया विधुरा विनिपतन्तः सानला द्वादशार्का येन । हेतुरूपेण अन्यपदार्थसम्बन्धः । तेजस्विनां तेजसा शमनमिति नेत्रार्चिःशब्दः । तेषामेकीकृत्य संहाराय सानलत्वकथनम् । चञ्च्वा, न तु करणान्तरेण । सञ्चूर्ण्य पुनरन्यत्र प्रयोगाक्षमत्वं यथा तथा चूर्णीकृत्य । शक्राशनिः तस्य प्रधानशस्त्रम् । गदा धनदस्य । दण्डः प्रेतलोकेशस्य । परमशस्त्रेषु लोकपालानां निरस्तेषु किमन्यत् । अन्तरमृतभाजने क्षणं मग्नपक्षः । अमृतसंग्रहणाय न भाजनेनोद्धरामि । पक्षेण ग्रहणे वृष्टिसौकर्यम् । एवं परनिग्रहं शस्त्रग्रहं च विना अमृतवृष्टिमभ्युत्सृजामि । अतः 'प्रमृष्टमयश' इत्युक्तम् ॥ ३२ ॥

१. 'निच्छातो म' क. ग. घ. ङ. पाठः. २. 'त्यर्थः । प' घ. पाठः. ३. 'पटलेन' घ. च. पाठः. ४. 'ष' ङ. पाठः. ५. ते मू' घ. च. पाठः.

* 'नित्यन्तर्मग्नपक्षः' इति पाठं व्याख्याता मन्यत इव ।

तदयं गतोऽस्मि । (निष्क्रान्तः ।)

**जीमूतकेतुः**—शङ्खचूड! किमेद्यापि स्थीयते । समाहृत्य दारूणि पुत्रस्य मे विरचय चिताम् । येन वयमप्यनेन सह गच्छामः ।

**देवी**—(क) पुत्तअ! संखचूड! लहुं सज्जेहि । दुक्खं खु अह्मेहि विणा भादुओ दे वट्टइ ।

**शंखचूडः**—(साम्रम्) यदाज्ञापयन्ति गुरवः । ननु पुरस्सर एवाहमत्र युष्माकम् । (उत्थाय चितारचनां नाटयित्वा) तात! सज्जीकृतेयं चिता ।

**जीमूतकेतुः**—कष्टं भोः! कष्टम्,

उष्णीषः स्फुट एव मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवो-

श्चक्षुस्तामरसानुकारि हरिणा वक्षस्थलं स्पर्धते ।

(क) पुत्रक! शङ्खचूड! लघु सज्जय । दुःखं खल्वस्माभिर्विना भ्राता ते वर्तते ।

एवमुपायलाघवेन कृतार्थः तदयं गतोऽस्मीति गमनवेगेन साध्यनिश्चयं प्रकाशयन् निष्क्रान्तः ॥

अथ मलयवतीविवाहस्यैतज्जीवनशेषतामभृतवृष्टेः पूर्वं प्रतिपादयितुं चितारोहणोपक्रमपर्यन्तं करुणं परिपोषयति—किमद्यापीति । अद्यापीति। मन्दभाग्यतया विपर्ययेण पुत्रमरणं दृष्टम् । किमतः परं वृथासिकया । किं क्रियतामित्याह—पुत्रस्य मे । न तु पुत्रे सति मम चितां विरचय । किं त्वरया इत्याह—वयमपीति । सहगमने त्वरा । ततो विधिकल्पितं पुत्रसंस्कारमपि कृत्वानन्यशरणत्वादात्मनैवात्मानं संस्कृत्य तमनुगच्छामः ॥

तदनुवादेन लघु सज्जयेति ॥

१. 'मिदानीमिह स्थी' क. ङ. पाठः. २. 'यं तेनैव स' क. घ. पाठः. ३. 'अ। ल' क. ख. ग. घ. पाठः. ४. 'हु एव्व स' ङ पाठः. ५. 'क्खरं खु' ख. पाठः. ६. 'हि' ङ. पाठः. ७. 'त्तदि' ग. पाठः. ८. 'ङः—च', ९. 'तुः—ङ' घ. पाठः. १०. 'ति । म' ङ. च. पाठः.

चक्राङ्कौ चरणौ तथापि हि कथं हा वत्स! मद्दुष्कृतै-
स्त्वं विद्याधरचक्रवर्तिपदवीमप्राप्य विश्राम्यसि ॥ ३३ ॥

देवि किमिव[1] रुद्यते । तदुत्तिष्ठ । चितामारोहामः ।

(सर्वे परिक्रामन्ति ।)

**मलयवती** — (बद्धाञ्जलिरूर्ध्वं पश्यन्ती) (क) भअवदि! गौरि! तुए[2] आणत्तं 'विज्जाहरचक्कवट्टी दे भत्ता भविस्सिदि'त्ति । ता कहं मम मन्दभाओए[3] तुमं पि अलिअवाँदिणी संवुत्ता ।

(ततः प्रविशति ससंभ्रमा गौरी ।)

(क) भगवति! गौरि! त्वयाज्ञप्तं 'विद्याधरचक्रवर्ती ते भर्ता भविष्यती'ति । तत् कथं मम मन्दभाग्यायास्त्वमप्यलीकवादिनी संवृत्ता ।

उत्तिष्ठ चितामारोहाम इत्युक्त्वा चितारोहणार्थं युगपत् परिक्रमणेनानन्यशरणत्वे प्रकाशिते मरणस्यावर्णनीयत्वेऽप्यचिरप्रत्यापत्तौ दोषाभावकथनाय तदर्थं देवीप्रादुर्भावनिमित्तत्वेन मलयवत्या देवीं प्रति प्रणामपुरस्सरमनुशोचनं — भगवति! गौरीत्यादि । निरन्तरसेवया हृदयसन्निधापितामनुसन्दधाति । त्वया आज्ञप्तं विद्याधरचक्रवर्ती ते भर्ता भविष्यतीति । मन्दभाग्याया इति । मद्भाग्यवैपरीत्येन सत्यवादिनी त्वमप्यलीकवादिनी संवृत्ता । विद्याधरत्वमेव भर्तुः सिद्धं, न चक्रवर्तित्वम् । चक्रवर्तित्वकथनेनाधिकसिद्धौ ममावैधव्यमवश्यसिद्धमिति निरूपितम् । तदपि न जातमिति खेदः, न केवलं चक्रवर्तित्वालाभेन ॥

एवं प्रलापच्छलेनाधिक्षिप्ता भगवती भक्तवत्सला तदनुग्रहायोक्त्यनन्तरमेव ससम्भ्रमं प्रादुर्भूय तदध्यवसायं निरुणद्धि । सर्वत्र परिपूर्णाया-

१. 'मपरं रु' घ., 'मिति निरूप्यते' ङ. पाठः. २. 'ए पुव्वं आ' क. ख. पाठः. ३. 'भधेअदाए' क. घ. पाठः. ४. वअणा सं' घ. पाठः. ५. 'तः ससंम्भ्रमं प्रविश्य) गौरी म' ग. पाठः

**गौरी** — महाराज! जीमूतकेतो! नखलु नखलु साहसमनुष्ठेयम् ।

**जीमूतकेतुः** — कथममोघदर्शना भगवती गौरी[1] ।

**गौरी** — (मलयवतीमुद्दिश्य) वत्से! मलयवति! कथमहमलीकवादिनी । दृश्यताम् । (नायकमुपसृत्य कमण्डलुवारिणाभ्युक्षन्ती)

---

श्रिदेवताया जलधितरङ्गवदाविर्भावतिरोभावौ । नाटकप्रक्रियया प्रवेशादिकथनम् । महाराजेत्यादि । नखल्विति । अयोग्यतया सम्भ्रमेण द्विरुक्तिः । साहसं चितारोहणरूपम् । महाराजेत्यनधिकारः प्रकाशितः । प्राकृतवत् सहसा देहत्यागस्य न योग्यः ॥

कथमिति । अचिन्तितमेतत् । कथमेवं जातमिति विस्मयः । अमोघदर्शनेति कमप्यनुग्रहं करोतीति प्रहर्षः । भगवतीति भक्तिः । गौरीति कुलदेवतात्वेन स्वत्वभावना ॥

मलयवतीमुद्दिश्येति । तदाभिमुख्यमवलम्ब्य वदतीति शेषः । वत्से! इति भक्तजनवात्सल्येन भक्तां तां करुणामृतेन नेत्रपात्रपूर्णेनाभिषिच्य स्मितपूर्वं पुत्रीमिव सम्बोधयति । मलयवतीति स्वाजन्यद्योतकम् । कथमिति तदुक्तमङ्गीकृत्य । अहमलीकवादिनीति तव प्रतीतिः । दृश्यतामिति । नाहं त्वया सह विवदामि, क्रियया बोधयाम्येव । इति तदधिक्षेपे प्रीतिगर्भमभिधाय नायकसमीपमुपगम्य स्वहस्तगतेन कमण्डलुवारिणाभ्युक्षन्ती सञ्जीवनमन्त्रवत् सत्यां वाणीमभिदधाति । जलाभ्युक्षणादिकम् अनेनैतदिति प्रत्यक्षदर्शनेन तेषां भक्तिवर्धनार्थम् । अन्यथानुसन्धानमात्रेणान्तर्यामितया वर्तमानाया ईषत्करं जीवनम् ।

---

१. 'री । भगवति! नमस्ते ।' क. पाठः.

निजेन जीवितेनापि जगतामुपकारिणः।
परितुष्टास्मि ते वत्स! जीव जीमूतवाहन!॥ ३४॥

(नायक उत्तिष्ठति ।)

**जीमूतकेतुः—** (सहर्षम्) देवि! दिष्ट्या वर्धसे । यदयमक्षतशरीरो जीमूतवाहनः समुत्थितः ।

**देवी—** (सहर्षम्) (क) भअवदीए पसादेण ।

(उभौ गौर्याः पादयोः पतित्वा नायकमालिङ्गतः ।)

---

(क) भगवत्याः प्रसादेन ।

---

निजेनेत्यादि । अन्यैर्निजजीवितार्थं सर्वं क्रियत इति लोकतो व्यतिरेकः । जीवितेनापि, किं पुनर्वस्त्वन्तरेण । जगतां जगद्वासिनां सर्वेषां, न तु सम्बन्धाद्यपेक्षया । उपकारिणः बाहुल्येन परोपकारदीक्षितस्य । मुख्यस्य परोपकर्तृत्वस्य गुणान्तरोपलक्षणत्वेन सकलगुणसम्पन्नस्येत्युक्तम् । अत एव परितो[2]षहेतुगर्भत्वेन विशेषणं—परितुष्टा । न तु[3] परितोष इदानीमङ्कुरितः । अस्मीति इदानीं परितोषस्य प्रकर्षमवलम्ब इति सूचितम् । त इति चैतन्यस्य तद्देहोपाधिमुक्तस्य स्वतेजःस्फुलिङ्गायमानस्य देहोपाधिविनियोजनपूर्वं निर्देशः । जीवेति निर्यन्त्रणया सर्गशक्त्या जीवशक्तिसंयोजनपूर्वं निर्देशः । जीमूतवाहनेति जातस्य नामकरणमपि युक्तमितीव सौहार्देन सम्बोधनम् ॥ ३४ ॥

अत एव सुप्तोत्थितवज्झटित्युत्थानम् ॥

दिष्ट्या वर्धस इति । इतः परं किं हर्षकारणं, यन्मृतोऽपि जीवित इत्यात्महर्षं तस्यां सङ्क्रमयति । दिष्ट्या दैवानुगुण्येन, न पुनरस्मत्पौरुषेण । वर्धसे, अतः परं का तव वृद्धिः । यदयमिति । अक्षतशरीर इति, पश्येति शेषः । यथा पूर्वं करुणस्य प्रकर्षस्तथा तदानीं हर्षस्य ॥

भगवत्याः प्रसादेनेति । कथमन्यथा एवं संभवेदिति भावः ॥

तन्निश्चयेन पादपतनम् ॥

---

१. 'पुनरयम' इति मूलकोशपाठः. २ 'पो' च. पाठः. ३. 'खलु प' च. पाठः. ४. 'णतया' च. पाठः.

**मलयवती** — (सहर्षम्) (क) **दिट्ठिआ पच्चुज्जीविदो अय्यउत्तो।** (गौर्याः पादयोः पतति।)

**नायकः** — (गौरीं दृष्ट्वा बद्धाञ्जलिः)[2] **भगवति!**

**अभिलषिताधिकवरदे! प्रणिपतितजनार्तिहारिणि! शरण्ये!।**
**चरणौ नमाम्यहं ते विद्याधरदेवते! गौरि! ॥ ३५ ॥**

(पादयोः पतति।)

(सर्वे ऊर्ध्वं पश्यन्ति।)

---

(क) दिष्ट्या प्रत्युज्जीवित आर्यपुत्रः।

---

**दिष्ट्या** प्रत्युज्जीवित आर्यपुत्रः। दिष्ट्येत्यनेनान्तरमालिङ्गनं प्रकाशितं, बाह्यस्य तदानीमनौचित्यात्। उचितं निर्दिशति — गौर्या इति ॥

उत्थितो नायकोऽग्रतो भगवतीं दृष्ट्वा बद्धाञ्जलिः प्रणमति — **अभिलषिते**त्यादि। अभिलषिताद् वाञ्छिताद् अधिकम्। असौ बालः स्वहितं न जानाति। यत्किञ्चित् प्रार्थयते। अस्य हितं पूरयामीति सेवकस्य निःश्रेयसपर्यन्तमनुग्रहं ददातीत्यर्थः। न केवलं वरदानं, प्रणिपतितजनस्यार्तिहारिणि! सकलानर्थपीडापहरणशीले! अभयवरदानप्रवृत्ते! इत्यर्थः। अत एव शरण्ये! भोगमोक्षार्थिनामाश्रयभूते!। चरणौ प्रत्यग्ज्योतिर्ज्वालायमानौ श्रीमत्पादपद्मौ। नमामि अहं प्रह्वो भवामि। अहमंशं[3] तत्र विलापये इत्यर्थः। तत्र हेतुः — विद्याधरदेवते! इति। विद्याधराणां कुलदेवताभूते! गौरि! भक्तानुग्रहार्थं परिगृहीतमूर्तिभेदानुगुणनामधारिणि!। अथ च विद्याधराणां विमर्शनेन निरस्ताविद्यानामात्मविद्याद्योतमानानां देवते उपास्ये इति भक्तिपूर्वं प्रणामस्तोत्रम् ॥ ३५ ॥

एवं वाचिकं तदविनाभूतं मानसं च विधाय कायिकं प्रणामं कर्तुं पादयोः पततीत्युक्तम् ॥

---

१. 'कः — (दृष्ट्वा सादरम्) कथं भगवती गौरी। (ब' क., 'कः — कथं भगवती गौरी। (ब' ङ. पाठः. २. 'लिः प्रणमन्) भ' क., 'लिः) अ' घ. ङ. पाठः. ३. 'मङ्गं त' च. पाठः.

**जीमूतकेतुः**—कथमनभ्रा वृष्टिः। भगवति! किमेतत्।

**गौरी**—महाराज! जीमूतवाहनमुज्जीवयितुमेतांश्च पूर्वभक्षितानस्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना देवलोकादियममृतवृष्टिर्निपातिता। (अङ्गुल्यग्रेण निर्दिशन्ती) किञ्च न पश्यति महाराजः,

सम्प्राप्ताखण्डदेहाः स्फुटफणमणिभिर्भासुरैरुत्तमाङ्गै-
र्जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः।

---

अथ वेगेन गतस्य गरुडस्य पूर्वोक्तप्रकारेणामृतवर्षे सति तत्स्वरूपमविज्ञाय भगवतीं पृच्छति—कथमित्यादि। कारणं विना कार्यदर्शनाद् वृष्टिबुद्ध्या भगवति! किमेतदिति प्रश्नः॥

अथ भगवतीवचनरूपेण नागजीवनं प्रतिपादयति—महाराजेति। जीमूतवाहनमित्यादिना गरुडस्याभिसन्धिः प्रकाशितः। समुपजातपश्चात्तापेन मन्निमित्तोऽयं महात्मनः सर्पाणां च विनाश इत्युपदेशबलात् सम्यग् अविपर्यस्तमुपजातः पश्चात्तापोऽनुशयो यस्य। देवलोकादियममृतवृष्टिर्निपातिता। इयममृतवृष्टिः, नानभ्रवृष्टिः। एवञ्चास्य प्रकार इत्यर्थः। अङ्गुल्या निर्दिश्य तत्कार्यं सप्रमोदं बोधयति—किञ्चेत्यादिना। महाराजः किञ्च न पश्यति। मदुक्त्या एकदेशस्य बुद्धिः। अतः परं दर्शनेनापि ज्ञातुं शक्यम्। तत् पश्यत्वित्यर्थः।

सम्प्राप्तेत्यादि। एते विषधरपतयः, न कश्चिदपि क्षुद्रनागः। सम्प्रति अमृतवृष्टिसमनन्तरमेव प्राप्तजीवाः सम्प्राप्ताखण्डदेहास्तोयराशिं विशन्ति। संप्राप्तः सम्यक् प्राप्तः वर्णप्रमाणकान्त्यादिविपर्यासरहितं सिद्धः अखण्डो देहो येषां, यथापूर्वमित्यर्थः। स्फुटाः शाणोलीढवन्निर्मलाः शिरोविकासेन प्रकाशाः फणमणयो येषु। अत एव भासुरैरुज्ज्वलैः उत्तमाङ्गैः

१. 'ष्टिः। ए' च. पाठः.

सम्प्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवामी
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति ॥ ३६ ॥

(नायकमुद्दिश्य) वत्स! जीमूतवाहन! त्वं जीवितमात्रदानकस्यैव न योग्यः। तदयमपरस्ते प्रसादः—

शिरोभिः, भासा उत्तमाङ्गत्वं युक्तं कुर्वाणैरिव उपलक्षिताः। विषधरपतित्वे उपलक्षणमसाधारणं चिह्नम्। एवम्भूतान्युत्तमाङ्गानीत्यर्थः। जिह्वाकोटिद्वयेन जात्युचितेन। द्वयशब्देन लेहने औत्सुक्यं प्रकाशितम्। क्षितिम् अमृतकणसम्बन्धमात्रेण वसुधां, न तत्सम्बद्धं रसम्। अत्र हेतुः—अमृतरसास्वादलोभादिति। सम्प्रतीदानीमेव आबद्धो वेगो गमने तत्कार्यत्वेन पुत्रकलत्रादिदर्शने च यैश्चिरकालसमुत्थिता इव। तत्र सुलभं दृष्टान्तं प्रकाशयति—मलयगिरीति। अत्रैवानुभवगोचरोऽयं दृष्टान्त इति मलयग्रहणम्। अमी सरिद्वारिपूरा इव। दार्ष्टान्तिकेऽपि मलयसम्बन्धित्वम्। अतः इतो निस्सरन्तः इतो निस्सरद्भिर्वारिपूरैस्तुल्या इति सिद्धम्। वक्रैः प्रस्थानमार्गैः गमनप्रकारैः, जात्युचितत्वात्। वारिपूरा अपि निम्नानुसारेण तटेषु वक्रगमनमार्गाः। विषधरपतय इति, प्रतिदिनमेकैकार्पणे तादृशामेव सम्भवात्। तोयराशिं विशन्तीति। तेषां पातालवासित्वात् तस्य समुद्रेण गन्तव्यत्वात् तेषां समुद्रविहरणप्रीत्या च समुद्रप्रवेशः। अमीति दृष्टान्तेऽपि योज्यम्। एवं पूर्वमस्थिशेषा इदानीमेवं वर्तन्त इति किमत्रास्माभिर्बोधनीयं, दर्शनीयमद्भुतं स्वयं पश्येत्यङ्गुलिदर्शनपूर्वं सादरं वचनमद्भुतोद्बोधकं च ॥ ३६ ॥

नायकमुद्दिश्येति। अलीकवादिनीत्वं परिहर्तुं नायकाभिमुखं च व्यवहारः। वत्सेति कारुण्यपूर्णया दृष्ट्या स्मितपूर्वमालक्ष्य पुत्रवत् सम्बोधनम्। जीमूतवाहनेति सौहार्दसूचकम्। जीवितमात्रदानकस्य। त्वं स्वतो दानशौण्डः स्वदेहमपि त्यक्तुं धैर्यवान्। तस्येदं जीवितमात्रदान-

१. 'गं' क. घ. ङ. पाठः. २. 'वैते व' क. घ. पाठः. ३. 'दः। पश्य, हं' क. ख. ग. ङ. पाठः. ४. 'ङ्गशब्दं यु' क. च. पाठः. ५. 'त्वेन उ' च. पाठः. ६ 'ह्लाद्व' ङ., 'ह्लादिद्व' च. पाठः ७. 'क्तुमौदार्ये' ङ. च. पाठः.

हंसांसाहतहेमपङ्कजरजःसम्पर्कपङ्कोज्झितै-
रुत्पन्नैर्मम मानसादपि परं तोयैर्महापावनैः ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषाभिषिच्य स्वयं
त्वां विद्याधरचक्रवर्तिनमहं प्रीत्या करोमि क्षणात् ॥ ३७॥

मत्यल्पम् । अत एव दानकस्येत्यल्पार्थे कन् । एवेति । इदमप्यपेक्षितमिति प्रथमं कृतम् । तव पात्रतायां चिन्त्यमानायां जीवितमात्रदाने नालम्भाव इत्यर्थः । किमन्यत् क्रियत इत्यत्राह — तदयम् । दानान्तरस्य योग्यत्वाद् अयं वक्ष्यमाणः । अपरः पूर्वसिद्धात् । प्रसादः परितुष्टास्मीत्यनोक्तहेतुजनितहर्षोत्कर्षः । प्रसादशब्देन तत्कार्यं चक्रवर्तित्वदानं लक्ष्यते प्रसादैकहेतुत्वं द्योतयितुम् । प्रसादस्य सद्योग्राह्यत्वाद् धनराज्यादिषु निस्सारत्वबुद्ध्या नेदमुपेक्षणीयं दानमित्यभिप्रायः ।

तं प्रसादं प्रतिपादयति — हंसेत्यादि । एषा अहं प्रीत्या क्षणाद् मम तोयैरभिषिच्य त्वां विद्याधरचक्रवर्तिनं करोमि । एषेति सन्नाहं द्योतयति । अहं, न त्वत्प्रार्थनया, नान्यमुखेन, स्वातन्त्र्येण स्वयमेवेत्यर्थः । प्रीत्येति, नात्र हेत्वन्तरमन्वेषणीयम् । मत्प्रीतिरेव हेतुः । प्रीतिदानस्य च सद्योग्राह्यत्वम् । अत उक्तं — क्षणादिति । एतदकृत्वा प्रीतिवेगो न शाम्यति । अतो न प्रतिवक्तव्यम् । स्वीक्रियतामेवेति निःस्पृहं तं प्रेरयति । कथं परिकरसाध्ये क्षणनिर्वहणम्, अत्राह — मम तोयैः मत्सम्बन्धिभिः, न सरित्समुद्रादिसम्बन्धिभिः । मन्निर्मितैरित्यर्थः । त्वां पात्रभूतम् । अभिषिच्येति, यथाविधि विद्याधरकुलसम्राजं करोमि । नात्र कालान्तरमपेक्ष्यते । ममेति सम्बन्धेनोक्तं तोयानामसाधारणत्वं विशेषणेन प्रतिपादयति — मानसादुत्पन्नैरिति । बोध्यत्वेन निर्दिश्य पश्चाद् विरोधोत्थापनं मानसादुत्पत्तिस्तथापीति । अत्र मानसशब्दस्य अन्तःकरणवाचित्वेन निर्देशः । सरोविशेषवाचित्वं च स्फुरति । अतः शब्दश्रुतावनेकार्थत्वादर्थान्तरप्रतीत्यनुसारेणापाते विरोधः । तद्धर्मव्यावर्तनद्वारा तं प्रकाशयति — हंसानां मानसकुलगृहाणां कमलवनचारिणाम् असैः कण्ठकण्डू-

अपिच —

अग्रेसरीभवतु काञ्चनचक्रमेत-
देष द्विपश्च धवलो दशनैश्चतुर्भिः ।
श्यामो हरिर्मलयवत्यपि चेत्यमूनि
रत्नानि ते समवलोकय चक्रवर्तिन्! ॥ ३८ ॥

तिशमनाद्यपेक्षया, 'मृणालकाण्डकण्डूयनकुण्डलितकन्धरे' इत्युक्तवद् आहतानां ताडितदण्डानां हेमपङ्कजानां चलनगलितं यद् रजस्तत्सम्पर्के यः पङ्क आर्द्रीभावजनितस्तेनोज्झितैः । मानसोत्पन्नत्वे कथमेवमित्यापाततो विरोधः । इदमेव विरोधस्य जीवितम् । विरुद्धाभासत्वं विरोध' इति । एवमापाततो विरोधेनालङ्कृते वाक्ये पश्चादर्थान्तरस्थित्या विरोधशमनम् । पङ्कोज्झितैरिति हीनधर्मनिषेधद्वारा गुणाधिक्यरूपो व्यतिरेकश्चानुप्रविशति । मम मानसादिति समन्वये मानसार्थस्य नियतत्वात् शेषाभावे विरोधस्तन्मूलं धर्मवैकल्यं चास्तमियाद्, वाक्यस्याघटमानत्वं च भवेत् । तां प्रतीतिमनुसृत्यैव साधर्म्यं प्रतिपादयति[2] — परं केवलम् । महापावनैः अतिपवित्रैः । परमिति पयसां मुख्ये पावनत्वे सिद्धे धर्मान्तरभावाभावविमर्शनक्लेशेन किं फलमिति भावः । एवं तोये सिद्धे कलशादिसम्पादनेन किञ्चिद् विलम्बो भवेत्, तत्राह — स्वेच्छेति । स्वेच्छया निर्मितेषु रत्नकुम्भेषु निहितैः । अतोऽनतीतदेशकालं प्रीतिकार्यं करोमीत्यर्थः ॥ ३७ ॥

अपिचेति । न केवलमभिषेचनमात्रम्, अङ्गान्यपि सम्पादयामीत्यर्थः ।

तानि निर्दिशति — अग्रेसरीभवत्वित्यादि । अमूनि रत्नानि ते दीयन्त इति शेषः । एवं सामान्येन निर्दिश्य किञ्च किञ्चेत्याकाङ्क्षायां विवरणम् — अग्रेसरीभवतु दीयमानेषु प्रथमं भवतु । प्रथमं गृह्यतामित्यर्थः । काञ्चनचक्रं काञ्चनालङ्कृतं चक्रम् । परिपन्थिनिराकरणसाधनत्वात् प्राथम्यम् । च्व्यर्थो न विवक्षितः । द्विपो धवलश्चतुर्दशनैरुपल-

१. 'न् ॥ अपिच (विलोक्य) ए' क., 'न् ॥ अथच ए' ख., 'न् ॥ अपिच (आलोक्य नायकमुद्दिश्य) ए' ग., 'न् ॥ आलोकयतां (नायकमुद्दिश्य) ए' घ, 'न् ॥ अपिच (आलोक्य ए' ङ. पाठः. २. 'काशय' च. पाठः.

एते च मत्प्रचोदिताश्चटुलचूडामणिमरीचिरचितेन्द्रचाप-पङ्क्तयो भक्त्यावनतपूर्वकायाः प्रणमन्ति त्वां मतङ्गदेवादयो विद्याधरपतयः । वत्स ! किं ते भूयः प्रियमुपहरामि ।

---

क्षितः । रत्नत्वोपलक्षकमेतत् । श्यामो हरिः, अश्वानां श्यामस्य गजानां श्वेतस्य मुख्यत्वाद् वर्णनिर्देशः । एवं त्रीणीदानीं सिद्धानि । अपरं रत्नं पूर्वसिद्धमपि रत्नान्तरमध्ये परिपठनीयं चक्रवर्तिभोग्यत्वसामान्या-दिति मत्वाह — मलयवत्यपि चेति । इतीति सर्वेषां समुचितानां निर्दे-शोपसंहारः । जात्युत्कृष्टत्वात् सर्वेषां रत्नत्वम् । समवलोकयेति । दृष्ट्वा गृहाण अथच सम्यगवलोकय सावधानं स्वत्वेनाभिमन्यस्व । सर्वत्या-गेऽपि चक्रवर्तिचिह्नत्वादेतानि न त्याज्यानीत्यर्थः । चक्रवर्तिन्निति । तदानीमेवाभिषिच्य रत्नानि च समर्प्य तदुचितं नाम स्वोक्त्या स्थिरीक-रोति । अतः परमेवं वाच्य इत्यर्थः । समवलोकयेति परशेषत्वेनापि योज्यम् । समवलोकय, अग्र इति शेषः ॥ ३८ ॥

अवलोकनविषयं प्रतिपादयति — एते चेति । एत इति नभसि सर्वान् साक्षात्कृत्योक्तिः । चकारेण चक्रवर्तिसमुचितमन्यदपीदानीमेव सिद्धमिति । विद्याधरपतयः, न केवलं तद्वंश्याः । कथमेभिरेतज्ज्ञातमि-त्याह — मत्प्रचोदिताः, बुद्धिमाविश्येति शेषः । प्रणमन्ति त्वां प्रणामो-चितम् । चटुलानां प्रणामत्वरया चञ्चलानां चूडामणीनां मरीचिभिर्मा-णिक्यादिरत्नप्रभाभिः रचिताः इन्द्रचापपङ्क्तयः, रत्नप्रभासाङ्कर्येण तथा स्फुरणात्, यैः । अनेन नमनस्य शोभाकरत्वं प्रकाश्यते । तर्हि भगवत्या आज्ञामात्रेण, न संश्लेषेण बहुमत्या वा, तत्राह — भक्त्या अवनतः पूर्व-कायो येषां, न त्वाचारमात्रेणाञ्जलिमात्रं प्रणमनं, भक्तिप्रवणशिरसः । अनेन विधेयत्वं सूचितम् । मतङ्गदेवादयः पूर्वं राज्यापहारादिप्रवृत्तो मतङ्ग आदौ प्रणमति । अनेन प्रधानवैरिणः शमने किमन्येषां विधेयत्वं कथ्यत इति भावः । एवं चक्रवर्तित्वं प्रदाय पुनरपि पृच्छति — वत्से-ति । किं ते भूयोऽतःपरं प्रियमुपहरामि चक्रवर्तिनस्तव प्राभृतीकरोमि । इयता प्रीतेर्नालंभावस्तदपरमुच्यतामित्यर्थः ॥

**नायकः — (जानुभ्यां स्थित्वा[1]) प्रियकारिणि[2]! किमतःपरं[3]-मपि प्रियमस्ति ।**

**त्रातोऽयं शंखचूडः पतगपतिमुखाद् वैनतेयो विनीत-स्तेन प्राग् भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे ।**

---

एवं देवीप्रसादसिद्धं चक्रवर्तित्वं तदङ्गानि रत्नानि च स्वीकृत्य पुनरपि प्रसादातिशयमालक्ष्य भक्तिप्रवणः कृतानां प्रत्येकं परिगणनया कृतार्थतां प्रकाशयति — प्रियकारिणीति । जगन्मातुः स्वभाव एवायं, यद् भक्तानुग्रहपरत्वमनुग्राह्यस्य कतिपयार्थसिद्धावलंभावात् पुनरप्यनु-ग्रहोन्मुखत्वमेव शिष्यत इत्याह — किमतःपरमिति । सिद्धात् परमन्यद-धिकं वा न किञ्चिदपि जानामीत्यर्थः ।

तन्निश्चयार्थं पृथक् परिगणनं — त्रात इत्यादि । शङ्खचूड इति । तद्रक्षणार्थं प्रथममुपक्रम इत्यादौ तन्निर्देशः । पतगपतिमुखाद् निसर्ग-शत्रोश्चञ्चुपुटादाकृष्य रक्षितः । अनेन दुष्करत्वं सूचितम् । इदं प्रियं भवत्या कृतमेव । सर्वत्र मम कर्तृत्वं हनने खड्गादीनामिवोपचारतः । वैनतेयः मातृवत्सलः, तत एवाहिहिंसाप्रवृत्तः । स्वतः शुद्धो विनीतो विनयं प्रापितः । अनेन महात्मनस्तस्य दुर्विनयशमनमपि प्रियमित्यावेदितम् । अनेन भविष्यदनुग्रहः प्रकाशितः । तेन प्राग्भक्षिता इत्यनेन प्राङ्नष्टसिद्ध्या भूतानुग्रहः । सर्वे, न त्वेकोऽप्यजीवितः । मत्प्राणाप्त्या गुरुभिरसवो न विमुक्ताः । अन्यथा गुरुमरणं प्रति मम कारणत्वं भवेत् । तदपि भव-त्यान्यथा कृतम् । पुनः चक्रवर्तित्वमाप्तं, प्रयत्नं विना । सर्वं त्वत्तः । एवं त्रिकालानुग्रहः सिद्धः । अतः परं सर्वातिशायि प्रियं वक्ष्यामि । त्वं यो-गिभिरप्यदृश्या । यतो देवि! पञ्चकृत्यरूपक्रीडापरा अविद्याविजयजाग-रूका सकलवस्तुजातजननादिव्यवहारबीजभूता सूर्यादीनतिक्रम्य शोभ-माना उपनिषद्भिरपि स्तूयमाना केवलसंविन्मयी व्याप्तेति क्रीडादि-

१. 'त्वा) कि' घ. ङ. पाठः. २. 'णीमगच्छम् । कि' क., णीमवगच्छा-मि । प्रियतरं कि' ख., 'णी कि' ग. पाठः. ३. 'रं प्रि' क, 'रमस्ति' ख. पाठः.

मत्प्राणाप्त्या विमुक्ता न गुरुभिरसवश्चक्रवर्तित्वमाप्तं
त्वत्तस्त्वं देवि! दृष्टा प्रियमपरमतः प्रार्थ्यते किं मया यत् ॥
तथाप्येतावदस्तु —

(भरतवाक्यम्)

वृष्टिं हृष्टशिखण्डिताण्डवभृतः काले किरन्त्वम्बुदाः
कुर्वन्तः प्रतिरूढसन्ततहरित्सस्योत्तरीयां क्षितिम् ।
चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसै-
र्मोदन्तां घनबद्धबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥ ४० ॥

धात्वर्थविषयभूता । दृष्टा, अन्यानि तिष्ठन्तु । निखिलनिःश्रेयसप्रदात् त्वद्दर्शनात् किमन्यत् प्रियम् । अतः परं प्रियं यन्मया प्रार्थ्यते, तत् किं, न किमपि ज्ञायते ॥ ३९ ॥

तथाप्येतावदस्त्विति । शुभशंसनरूपस्य निर्वहणाङ्गस्य प्रस्तावाय इयन्मात्रं प्रियं प्रार्थ्यत इत्युक्तिः । एवं प्रकृतनाटकप्रयोगावसाने लोकानुग्रहहेतुत्वमस्य समर्थयितुमनुकार्यरूपस्य नटस्योक्तिः । अङ्के प्रविष्टपात्राणां सर्वेषामन्ते निष्क्रान्तिः । पुनर्नटस्य नाटकावसाने प्रवेशो न घटते । न च कथानायकस्य प्रकृतं विना जगदनुग्रहादिप्रार्थनम् । अतः प्रस्तुताविरोधेनानुकार्यनटयोरभेदेन जगदनुग्रहाशासनम् । अत एव भरतवाक्यमिति सर्वत्र निर्दिश्यते । अनुकार्याभिन्नभरतवाक्यमित्यर्थः । केवलस्याङ्कसमाप्तेः प्रागभावात् ।

वृष्टिमित्यादि । काले अपेक्षितकाले । हृष्टानां वर्षप्रियाणां शिखण्डिनां ताण्डवनिर्वाहकाः । अनेन वर्षस्य परिपूर्णता प्रकाशिता । अत एव कुर्वन्तः । प्रतिरूढानि सेकसम्बन्धेन विरूढानि सन्ततान्यविरलानि सस्यानि व्रीह्यादीन्येवोत्तरीयमलङ्कारो यस्या एवंभूतां क्षितिं कुर्वन्तः । सस्यसम्पदा सकलकर्मणां सिद्धिरिति सस्योत्पत्तेः प्राधान्यम् । पुनः प्रजाः सुकृतानि इष्टापूर्तादीनि । चिन्वानाः पुनः पुनः सम्पादयन्त्यः । वीत-

अपिच—

**शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।**
**दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥ ४१ ॥**

(निष्क्रान्ताः सर्वे ।)

**पञ्चमोऽङ्कः ।**

नागानन्दं समाप्तम् ।

---

विपदः अकालमरणादिव्यसनहीनाः । निर्मत्सरैः, परवृद्ध्यसहत्वं मत्सरः, तद्राहितैर्मानसैः सहिताः । मोदन्तां सत्त्वकार्यं मोदं लभन्ताम् । घनं निबिडं बद्धः स्थिरीकृतो बान्धवानां मातृपितृगोत्रजानां सुहृदामुपकर्तृणां गोष्ठीप्रमोदो नृत्तगीतादिक्रीडाकृतः प्रमोदो याभिः । बान्धवसुहृदां प्रमोदानुगुणं वर्तमाना, न केवलं स्वयं मुदिता इत्यर्थः ॥ ४० ॥

एवं प्रार्थ्य पुनरपि तत्रैव विशेषं प्रार्थयते—अपिचेति । उक्तेऽर्थे किञ्चिद् विशेषं प्रार्थयामि । उक्तस्यार्थस्य संकोचं मत्वा जगदीश्वरीं किमिति तुच्छं प्रार्थ्यत इति पुनरपि प्रार्थय इत्यर्थः ।

शिवमित्यादि । सर्वजगतां चराचरात्मकस्य त्रैलोक्यस्य शिवमस्तु । प्रपञ्चस्य मङ्गलसम्पादने भवत्या एव शक्तिः । वर्षादिकं भवद्भिर्भीपिक्रया प्रायः शक्रादिभिरपि क्रियते । प्रपञ्चस्य तु सुम्भादिपीडितस्य भवत्येव शरणमिति जगतां शिवप्रार्थनम् । तर्हि पूर्वमत्र कथं सङ्कोचः कृत इति चेद्, अतिप्रसङ्गशङ्कया पादप्रसारिकाक्रमेण प्रार्थितम् । पुनरधिकश्रद्धया प्रार्थनमिति न विरोधः । परहितनिरताः एतदेकपराः । एतत् प्रबन्धनिर्व्यूढस्य मुख्यस्य प्रयोजनस्य स्थिरीकरणाय । भूतगणाः सकलभूतानि । सर्वभूतानां परोपकारे बुद्धिरस्तु । दोषाः,

"कामः क्रोधो मदो मानः पैशुन्यं परिवादिता ।
लोभाहंकारनैष्ठुर्यदम्भा दोषा दश स्मृताः ॥"

इत्युक्ताश्चित्तविकारहेतवः । नाशं प्रयान्तु, अत्यन्तमिति शेषः । सर्वत्र चतुर्दशभुवनेषु, न केवलं भूमौ । सुखी सकलार्थसिद्ध्या समस्तफलभूतं सुखं नित्यमवलम्बमानो भवतु । लोकः अविशेषेण सर्वजनः ॥ ४१ ॥

एवं प्रयोगप्रकारेणोपसंहृतस्य नाटकस्य 'देवानामिदमामनन्ति मुनय' इत्युक्तन्यायेन अधिकारिभेदेनैकैकांशेन सर्वलोकप्रीतिकरस्य,

"न तच्छिल्पं न तज्ज्ञानं न सा विद्या न ताः कलाः ।
नासौ योगो न वा धर्मो नाटके यन्न दृश्यते ॥"

इति मुनिवचनप्रामाण्येन सकलविद्यातत्त्वसाक्षात्कारमणिमुकुरस्य, त्रैवर्गिकाणां निरतिशयानन्दानुभूतिपर्यन्तकक्ष्यायां पुरुषार्थव्युत्पत्तिदायिनो, निवृत्तानामपि रत्युत्साहक्रोधजुगुप्सादिसमावेशे चित्तस्य पारवश्योन्मत्तचेष्टितादिवैराग्यद्वारा संसारनिस्सारतानिदानभूतस्य, अत एव पञ्चमवेदत्वेन परमोपादेयस्य अनुकार्याभिन्नभरतमुखेन जगदनुग्रहाय स्वप्रवृत्तेरुचितविषयतां च द्योतयितुं फलप्रतिपादनेन एतत्प्रवृत्तप्ररोचनां च नाटकन्यायानुसारेण श्रेयस्करत्वं महाकविः प्रतिपादितवान् । अतश्चास्माभिरत्रदेशिकदयादीपदर्शितवस्तुतत्त्वैर्विषयसौन्दर्यप्रेरितैर्यथामति विमर्शः कृत इति सर्वं शिवम् ॥

इति शिवरामस्य कृतौ नागानन्दविमर्शिन्यां
पञ्चमाङ्कार्थविमर्शनं

समाप्तम् ।

---

श्रीशङ्करोरुकरुणाजननीभूतेन
रामेण दाशरथिवृत्तसुजीवनेन ।
साहित्यमार्गपरिचङ्क्रमणप्रयासं
शिष्यान् विबोधयितुमेष कृतो विचारः ॥

द्विषतां न गुणः कोऽपि न दोषः सुहृदामपि ।
प्रकाशेत तटस्थोऽत्र विविनक्तूभयं जनः ॥

शब्दार्थवपुषोर्नूनं शिवयोः सर्ववस्तुगः ।
विचारस्तद्विमर्शो नस्तन्निष्ठोऽयं समेधताम् ॥

---

शुभं भूयात् ।

# श्लोकानुक्रमणी ।


| श्लोकः. | पृष्ठम्. | श्लोकः. | पृष्ठम्. |
|---|---|---|---|
| अक्लिष्टबिम्ब | ११६ | कण्ठे हारलता | १३० |
| अग्रेसरीभवतु | ३०० | कवलितलवङ्ग | १९२ |
| अज्ञाननिद्राश | २८२ | कामेनाकृष्य | ५ |
| अनया जघना | ७६ | कुणसि घणच | ९६ |
| अनिहत्य तं स | १७५ | कुर्वाणो रुधिरा | २५५ |
| अन्तःपुराणां | १८४ | क्रोडीकरोति | २०२ |
| अन्योन्यदर्शन | ११८ | क्वचिद् द्वीपाकारः | २८३ |
| अभिलषिताधिक | २९६ | क्षिप्त्वा बिम्बं हिमां | २२६ |
| अमी गीतारम्भैः | १६५ | क्षामे भङ्गवती | २३४ |
| अस्मिन् वध्यशिला | २२७ | खेदाय स्तनभार | १६२ |
| अस्या विलोक्य | २०८ | गात्राण्यमूनि न | २८८ |
| आत्मीयः पर इत्ययं | २७० | गोकर्णमर्णव | २४४ |
| आदावुत्पीडपृथ्वीं | २४६ | ग्लानिर्नाधिकपीय | २५८ |
| आमोदानन्दितालि | २२९ | चञ्चच्चू | २१८ |
| आयासादालसाङ्ग्या | २८५ | चन्दनलतागृह | १०५ |
| आर्तं कण्ठगतप्राणं | २०७ | चूडामणिं चरण | २५२ |
| आलोक्यमानमति | २४० | जायन्ते च म्रियन्ते | २१५ |
| आवर्जितं ममा | २६२ | जिह्वासहस्र | १९६ |
| आवेदय मया | २५० | ज्वालाभङ्गैस्त्रिलोकी | २७३ |
| आस्तां स्वस्तिकलक्ष्म | २६४ | णिच्चं जो पिबइ | १४० |
| इत्येकशः प्रति | १९६ | तनुरियं तर | ६८ |
| उत्प्रेक्षमाणा त्वां | २८६ | तापात् तत्क्षण | ७८ |
| उत्फुल्लकमल | ५४ | तार्क्ष्येण भक्ष्यमा | २४२ |
| उद्गर्जज्जलकुञ्ज | १९१ | तिष्ठन् भाति | २६ |
| उष्णीषः स्फुट एव | २९२ | तुल्याः संवर्तका | २२३ |
| उष्णीषः स्फुट एष | ७४ | त्रातोऽयं शङ्खचू | ३०२ |
| एकाकिनापि हि | १७८ | दिग्धाङ्गा हरि | १६७ |
| एतत्ते भ्रूलतोल्लासि | १६९ | दिनकरकरा | १७४ |
| एतन्मुखं प्रियायाः | १६८ | दृष्टा दृष्टिमधो | १५६ |

| श्लोकः. | पृष्ठम्. |
| --- | --- |
| द्विजपरिजन | १२ |
| ध्यानव्याज | १ |
| नखलु नखलु | १२८ |
| न तथा सुखयति | २२४ |
| नागानां रक्षिता | २३० |
| नाहित्राणात् | २४५ |
| निजेन जीवितेनापि | २९५ |
| नित्यं प्राणानिपा | २८० |
| निद्रामुद्राव | १८१ |
| निराधारं धैर्य | २८९ |
| निष्यन्दत इवा | ११३ |
| निष्यन्दश्चन्दनानां | १६४ |
| नीता किं न नि | १०० |
| न्याय्ये वर्त्मनि | २९ |
| पक्षोत्क्षिप्ताम्बु | २९१ |
| पित्रोर्विधातुं | १४ |
| प्रतिदिनमशून्य | २१९ |
| प्रिया सन्निहितै | ११७ |
| भक्त्या विदूरविन | २५३ |
| भुक्तानि यौवन | २३५ |
| मधुरमिव व | ४४ |
| ममैतदम्बार्पय | २१० |
| महाहिमस्तिष्क | २०९ |
| माद्यद्दिग्गज | ३७ |
| मूढाया मुहु | २०५ |
| मेदोस्थिमज्जा | २७९ |
| मेरौ मन्दरकन्दरा | २६६ |
| म्रियते म्रियमाणे | २१७ |
| यद्विद्याधर | ११९ |
| रागस्यास्पद | २१ |
| वक्षःस्थलक्ष्मिम | १४२ |
| वासोर्थं दयया | ४१ |
| वासोयुगमिदं | २२३ |
| विद्याधरेण केनापि | २५० |
| विलुप्तशेषाङ्गतया | २७८ |
| विश्वामित्रः श्वमांसं | २१२ |
| वृष्टिं दृष्टशिखण्डिता | ३०३ |
| वृष्ट्या पिष्टातकस्य | १३७ |
| व्यक्तिर्व्यञ्जनधा | ५६ |
| व्यावृत्त्यैव सि | ९७ |
| शायितेन मातु | १२५ |
| शय्या शाद्वलमा | १८८ |
| शशिमणिशिला | १०८ |
| शिवमस्तु सर्व | ३०४ |
| श्रीहर्षो निपुणः | ९ |
| संरक्षता पन्नग | २२७ |
| संसर्पद्भिः सम | १७७ |
| समुत्पत्स्यामहे | २२० |
| सम्प्राप्ताखण्डदेहा | २९७ |
| सर्वाशुचिनिधान | १९७ |
| सिरामुखैः स्पन्द | २६१ |
| स्त्रीहृदयेन न | १०२ |
| स्थानप्राप्त्या द | ४९ |
| स्पन्दते दक्षिणं | ३९ |
| स्फुरसि किमदक्षि | २४० |
| स्मितपुष्पोद्गमो | १७२ |
| स्रस्तान् पाताल | २८४ |
| स्वगृहोद्यानगते | २३२ |
| स्वर्गस्त्री यदि | ६२ |
| स्वशरीरमपि | १७९ |
| स्वशरीरेण शरीरं | २६८ |
| हंसांसाहत | २९९ |
| हरिहरपिदा | १४८ |
| हुङ्कारं ददता | १५८ |

## READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nilakantha Dikshita | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvati | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyáchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nilakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tîkasarvaswa of Vandyaghatîya Sarvananda (Part II, 2nd Kanda 1–6 Vargas) | 2 | 8 | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânânda Sarasvati. (Part I) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyôtisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatiya Sarvananda (Part III, 2nd Kanda 7–10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvaswa of Vandyaghatiya Sarvananda (Part IV, 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa) | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya) | 1 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânanda-vimarsinî of Sivarâma. | 3 | 4 | 0 |

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*